मधुना क्षौद्रपृषतेन माधुर्यं मधुरभावं रचयितुं निर्मातुं ईहते वाञ्छति। यथा कोमल-बिसतन्तुभिर्व्यालबन्धनं न संभवति। यथा शिरीषकुसुमप्रान्तेन वज्रमणिभेदो न संभवति। यथा च लवणसमुद्रस्य मधुबिन्दुना माधुर्यनिर्माणं न संभवति तथैव सुधास्यन्दिभिरपि सूक्तैः खलानां, (सतां) पथि वर्तनं न संभवतीत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) ना१. नागं (व्यालं)। तु. सु. समुत्कण्ठते। —२) ना२. ते. प्र१.३ (मू).५. म. °मणीन्। तु. ना१.३. प्र२ (मू). ४. म४.५. संनह्यते।—३) तु२. क्षाराम्बुधेरीह्यते। —४) तु. ना२. नेतुं वाञ्छति यः सतां पथि खलान्। ना३.४. मूर्खं यः। ना१.३-५. रा.ते. प्र३ (मू, शोधनात्पूर्वं). ४ प्रति; प्र५. परि-(पथि)। सु. प्र२.३. म१.२.४. सतां; प्र४. नरः (बलात्)। सु. °स्पर्धिभिः (टी.पा °स्यन्दिभिः) ॥

भ. ६३३० (२९२०)। सुर. पृ० ३४.४ (भर्तृ°)। सुभा. पृ० ४१.६७। पद्मानन्दस्य वैराग्यशतके ॥

स्वायत्तमेकान्तहितं विधात्रा विनिर्मितं छादनमज्ञतायाः।
विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥ ७ ॥

स्वायत्तमिति ॥ विशेषतो विशेषेण सर्वविदां सर्वज्ञानां समाजे मध्ये अपण्डितानां मूढानां स्वायत्तमात्माधीनमेकान्तहितं नियतानुकूलमज्ञताया मूढत्वस्य छादनं गोपनं विधात्रा विनिर्मितं सृष्टं मौनं तूष्णींभाव एव विभूषणमलंकारः। सर्वज्ञानां मध्ये मूढानां मौनमेवालंकारः। यदि मौनं सृजति तदानीमखिलममुष्यावैदुष्यं प्रकटीकृतं भवति। मौनिनश्चेद्भवन्ति तदा किमेते मूढा उत सर्वज्ञा इति लोकाः संदिहते। अवैदुष्यनिश्चयाद्वा संदेह इत्यर्थः ॥ [ उपजातिः ]

१) रा. (टी.पा) °कृतं (°हितं)।—२) ना२. छादयमज्ञ° ॥

भ. ७३५२ (३३४०); शतकावली ९१। सु. २३८२। सुर. पृ० ७९.२ (भर्तृ°)। सुभा. पृ० ८६.३ ॥

यदा किंचिज्ज्ञोऽहं गज इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः।
यदा किंचित्किंचिद्बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ८ ॥

यदेति ॥ यदा यस्मिन् काले अहं किंचिज्ज्ञः अल्पवित् गज इव द्विप इव मदेन अन्धः विवेकरहितः समभवं अभूवं तदा तस्मिन्काले सर्वज्ञः पण्डितः (सर्ववित्) अस्मि भवामि इति मम[मे] मनश्चित्तं अवलिप्तं गर्वितम्। यदा तु बुधजनसकाशात् विद्वज्जनेभ्यः किंचित्किंचित् अल्पमल्पं अवगतं विदितं तदा तस्मिन्समये मूर्खोऽस्मि मूढो भवामीति ज्वरो व्याधिरिव मे मम मदो गर्वः व्यपगतो नष्टः। किंचिज्ज्ञानामेव मनस्यवलेपो भवति न तु सर्वज्ञानामित्यर्थः ॥ [ शिखरिणी ]

१) तु२. ना२. द्विप (गज)। —२) प्र२. °भवमवलिप्तं । —३) म४. बुधवर° । तु. °काशादपिगतं; ते२. म३. °काशादपगतं । —४) प्र५. मूढो (मूर्खो) । तु१. विगलितः; प्र१. म३. —व्यपगतः ॥

भ. ५१८८ (२३४७) सुभाष. ३११ । शा. ४१७७ (भर्तृ°) । सु. ३४५६ (भर्तृ°) । सुभा. पृ० ४१.५८ (भर्तृ°) । सुर. पृ० ३४.५ (भर्तृ°) ॥

कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं
निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम् ।
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते
न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥ ९ ॥

कृमिकुलेति । कृमिकुलैः जन्तुयूथैः । चितं व्याप्तं । लालया सृणिकया । 'सृणिका स्यन्दनी लाले'त्यमरः । क्लिन्नं आर्द्रं । विगन्धि विरुद्धगन्धं जुगुप्सितं गर्हितं । निरामिषं मांसरहितं । नरास्थि मनुष्यकीकसं कर्म । श्वा शुनकः कर्ता । निरुपमरसं अतुलस्वादमिति प्रीत्या हर्षेण खादन् भक्षयन् । पार्श्वस्थं समीपस्थितं । सुरपतिमिन्द्रमपि विलोक्य दृष्ट्वा { न शङ्कते न लज्जते–रा० } ( विशङ्कते ) । एष सुरपतिरिदमस्थि ग्रहीष्यतीत्याकुलो भवति । तथा हि । क्षुद्रोऽल्पो जन्तुः प्राणी परिग्रहस्य अर्थना ( आत्मना ) परिगृहीतस्य वस्तुनः फल्गुतां असारत्वं न विगणयति न विचारयति ॥ [ हरिणी ]

१) तु२. सु (मू). ना१.२. रा१. ते. प्र४. क्रिमि– । प्र१. म३. °शतं (°चितं) । ना१. ते२. म१. कुगन्धि । —२) तु. सु. अनुपम– । ना२. प्र१–३. म१–३. °रसं प्रीत्या । तु. सु. ना५. रा. ते१. प्र५. खादन्खरास्थि; ना२. खादन्निरास्थि । —३) म५. पार्श्वस्तं । तु२. च शङ्कते; ना३.४. प्र२.३. विशङ्कते । —४) सु. गणयति न हि; प्र३. विगणयति न । तु१. मैत्री-(जन्तुः) ॥

भ. १८९४ (७२८); शतकावलौ ८२; नीतिसं° ६५; सुभाष. ३०७ । शान्तिशतके २. ८ । सक. ५. ६८.५ (पृ० ३२२, शूलस्य) । सुभा. पृ० १७७. ९९७ । सुर. पृ० ३४.१ (भर्तृ°) ॥

शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।
अधो गङ्गा सेयं पदमुपगता स्तोकमथ वा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ १० ॥

शिर इति ॥ सा प्रसिद्धेयं गङ्गा मन्दाकिनी स्वर्गात्सुरलोकात्सकाशात् शार्वं शर्वसंबन्धि शिरो मूर्धानं पशुपतिशिरस्तः परमेश्वरमूर्ध्नः । पञ्चम्यास्तसिल् । क्षितिधरं हिमाचलं उत्तुङ्गात् उन्नतात् महीध्रात् हिमाचलात् अवनिं क्षोणीं अवनेश्चापि जलधिमकूपारं, एवमधः अधस्तात्स्तोकमल्पं पदं स्थानमुपगता प्राप्ता ।

अत्युन्नतपदस्थायिन्या गङ्गायाः अधःस्थानप्राप्तिः कष्टेति तात्पर्यम्। (समाधत्ते)। अथ वा विवेकात्सकाशात् भ्रष्टानां च्युतानां विनिपातः पतनं शतमुखः अपरिमितमुखो भवति। गङ्गाया विवेकभ्रष्टत्वं जडात्मकतया। निर्विवेकानामापत्परंपरा भवन्तीत्यर्थः ॥ [शिखरिणी]

१) ग्र२ (मू). शिवः शार्वं; म५. शिरः शापं। ग्र४. °शिरस्तत्; म५. °पुरस्तः (°शिरस्तः) —२) म४. महाद्रेर् (महीध्राद्)।—३) तु. सु. अधोधो गङ्गेयं; ना३-५. रा२. ग्र१. म१.२.५. अथो गङ्गा सेयं। ना१. ग्र५. म५. स्तोकमधुना; ग्र४. तोकमधुना; म४. स्तोकमधुरा।—४) तु२. विनिवातः। म३.५. शतमखः ॥

भ. ६४५६ (२९८२)। सुर. पृ० ३५.७ (भर्तृ°)। सुभा. पृ० ४१.५९। अलंकाररत्नाकरे ४९६ (अलंकारविमर्शनीतः २७. १९१) ॥

## (नीतिशतके प्रथमपद्धतौ अधिकश्लोकाः)

यां चिन्तयामि सततं मयि सा विरक्ता
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः।
अस्मत्कृते च परितुष्यति काचिदन्या
धिक्तां च तं च मदनं च इमां च मां च ॥ १ ॥

[सु. नीति. २] [भ. ५४२८ (२४६१; सिंहासनद्वात्रिंशकायां)। सुभाष. ३०२]

अविदितशषसविशेषा वाणी निःसरति वक्त्रतो येषाम्।
गुदवदनविवरभेदो रदनैरनुमीयते तेषाम् ॥ २ ॥

[म.४.५. नीति. १०] [भ. ६८२; सुभाष. २५८]

शक्यो वारयितुं जलेन हुतभुक्छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गौर्गर्दभः।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रैः प्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ३ ॥

[रा. नीति. १०]

[भ. ६३४८ (२९२९; पञ्चरत्ने ५ (हे. ४); काव्यक°; काव्यस°; सुभाष. २८२। सु. २९४३। सूक्तावल्यां १७। सुर. पृ० ३५.८ (भर्तृ°)। सुभा. पृ० ४१.६८। सुभाषितार्णवे २७, ८१।]

## ॥ विद्वत्पद्धतिः ॥

शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ।
तज्जाड्यं वसुधाधिपस्य सुधियस्त्वर्थं विनापीश्वराः
कुत्स्याः स्युः कुपरीक्षकैर्न मणयो यैरर्घतः पातिताः ॥ ११ ॥

शास्त्रेति । शास्त्रेण व्याकरणेन उपस्कृतैः शब्दैः क्रियाकारकरूपैः सुन्दरगिरो रुचिरवाचः शिष्येभ्योऽन्तेवासिभ्यः प्रदेया दातव्या आगमाः शास्त्राणि येषां ते तथाभूताः विख्याताः प्रथिताः कवयो विद्वांसः यस्य प्रभोः नेतुः विषये देशे निर्धनाः दरिद्राः वसन्ति तिष्ठन्ति तन्निवसनं वसुधाधिपस्य भूपतेर्जाड्यं अज्ञानम् । राजा स्वदेशे निवसतामकिंचनानां विदुषां प्रीतिं यदि कल्पयेत्तदा राजा विवेकी भवति नो चेदज्ञो भवति । तथा च स्मृतिः । "तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तपः । ज्ञात्वा राजा कुटुम्बं च धर्म्यां वृत्तिं प्रकल्पयेत्" ॥ इति ॥ सुधियो विद्वांसो हि यस्मात्कारणात् । 'हि हेताववधारण' इत्यमरः । अर्थं विनापि धनमन्तरेणापि ईश्वराः समर्थाः । सुविद्या यदि किं धनैरिति स्वयमेव वक्ष्यति । इममेव दृष्टान्तमुखेन दर्शयति । मणयः रत्नानि कुपरीक्षकैः कुत्सितरत्नपरीक्षिभिः अर्घतो मूल्यात् पातिताः भ्रंशिताः । बहुमूल्या मणयोऽल्पमूल्याः कृताः । तैः कुपरीक्षकैः हेतुभिः कुत्स्या निन्द्या न स्युः । कुपरीक्षका एव कुत्स्याः स्युः । एवं विद्वद्रत्नानि (विद्वत्कुलानि) राजभिर्यदि नाद्रियन्ते तदानीं राजान एव कुत्स्याः स्युः । न विद्वांसः ॥ [शार्दूलविक्रीडितम् ]

२) ते२. प्रख्याताः । ना५. ते२. भवन्ति (वसन्ति) । तु२. सु१. प्रभो । —३) तु२. सुधियोत्स्वार्थं; सु. ना२. ग्र२.३. सुधियो ह्यर्थं; ना१. ते१. सुधियश्चार्थं; ना३.४. सुधियोऽप्यर्थं । ना२. विनाधीश्वराः ।—४) सु१. कुत्साः; ग्र१–३. कुत्स्या । तु१. कुपरीक्षकाश्च न मृणयो; तु२. कुपरीक्षकाश्रमणयो; सु१.३. ना३.४. कुपरीक्षका न मणयो । तु. ना२. अर्घ्यतः; ग्र५. (शोधनात्प्राक्) अर्थितः ॥

भ. ६४५२ (२९८०); शतकावलौ ७८; सुभाष्. ३०३ । सुभा. पृ० ३९.२७ । सुर. पृ० ३२.२ (भर्तृ°) ।

हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदा-
प्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥ १२ ॥

हर्तुरिति । यत् हर्तुः चोरस्य गोचरं विषयं न याति न गच्छति । अपहर्तुं न शक्यते । यत्सर्वदा सर्वस्मिन्काले किमपि वर्णयितुमशक्यं शं सुखं पुष्णाति वर्धयति । यदर्थिभ्यो याचकेभ्योऽनिशं सर्वदा प्रतिपाद्यमानं परामधिकां वृद्धिं उपचितिं प्राप्नोति याति । यत्कल्पान्तेषु प्रलयेष्वपि निधनं नाशं न प्रयाति नोपैति । हीति सर्वत्र संबन्धः प्रसिद्धौ । एवं धनं विद्याख्यं विद्याभिधेयं अन्तर्धनं अभ्यन्तर-

विद्या बन्धुजनो विदेशगमने विद्या परा देवता
विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः॥१६॥

विद्येति ॥ विद्या वेदशास्त्रादिः नरस्य पुंसः अधिकमुत्कृष्टं रूपं सौन्दर्यं नाम प्रसिद्धं प्रच्छन्नं गूढं यथा भवति तथा गुप्तं रक्षितं धनं वित्तं च। विद्या विद्यैव सतां भोगकरी। भुज्यन्त इति भोगा विषयाः। तत्संपादयित्री। यशः कीर्तिं च सुखं शर्म च करोति संपादयतीति तादृशी। विद्यैव गुरूणां देशिकानां गुरुराचार्यः। विद्या विदेशगमने परदेशयाने बन्धुजनो बान्धवलोकः। विद्या परा उत्कृष्टा देवता सुरी। विद्या राजसु नृपेषु पूज्यते आराध्यते । धनमेवंविधं न भवति। तस्माद्वि-द्याविहीनः पशुः। जरामरणयुक्त इत्यर्थः ॥ [शार्दूलविक्रीडितम्]

१) म३. गुप्तं धनं विद्यया (प्रच्छन्नगुप्तं धनं)। —२) तु. भाग्यकरी। —३) तु१. सु१.२. बन्धुजने। सु. ना२. परं दैवतं। —४) तु. प्र४. म४.५. पूजिता; ना१.पूजते। सु१.३. न तु धनं; प्र१. म३. च सततं; म४. वरधनं; म५. परधनो ॥

भ. ६०८९ (२७९७); गुणरत्न° ३ (हे ५२३); काव्यकल्प°; काव्यस°; हितोपदेशे; विक्रमचरित्रे १२५; प्रसङ्गाभ° १२; सुभाष्. ८। सूक्तावली ४। सुभा. पृ० ३०. १५। सुर. पृ० ४२. १ (प्रसङ्गरत्नावल्यां)। सुभाषितार्णवे ७. ९ ॥

क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम्।
किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्यानवद्या यदि
व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम्॥१७॥

क्षान्तिरिति ॥ देहिनां शरीरिणां क्षान्तिश्चेत्क्षमा यद्यस्ति कवचेन वर्मणा किं प्रयोजनम्। क्षान्तिरेव देहं रक्षतीत्यर्थः। क्रोधः कोपः अस्ति चेत् अरिभिः शत्रुभिः किं किं प्रयोजनम्। स्वकोप एव स्वस्य शत्रुरित्यर्थः। ज्ञातिः सगोत्रः पितृव्यपुत्रादिरिति यावत्। चेद्यदि अनलेन अग्निना किं किं प्रयोजनम्। ज्ञातिरेव स्वपरितापकर इत्यर्थः। सुहृद्यदि आप्तोऽस्ति चेत् दिव्यौषधैरुत्कृष्टरसायनैः किं प्रयोजनम्। आत्मसुहृदेव स्वकीयरोगनिवर्तकः। आपन्निवारक इत्यर्थः। दुर्जनाः मूर्खाः यदि सर्पैराशीविषैः किं किं प्रयोजनम्। दुर्जना एव भयंकरा इत्यर्थः। अनवद्या दोषरहिता विद्या वेदशास्त्रादिर्यद्यस्ति धनैः सुवर्णैः किमु। व्यर्थम्। विद्यैव धनमित्यर्थः। व्रीडा चेल्लज्जा यदि भूषणैराभरणैः किमु किं प्रयोजनम्। स्त्रिया इति शेषः। स्त्रिया लज्जैव भूषणमित्यर्थः। सुकविता शोभनकवित्वं यद्यस्ति राज्येन राष्ट्रेण किं किं प्रयोजनम्। कवितैव सर्वराज्याधिपत्यमित्यर्थः। राज्यवत्सौख्यप्रदायिकेति यावत् ॥ [शार्दूलविक्रीडितम्]

२) तु१. ज्ञातिश्चेद्दलेन। —३) तु. विद्यास्ति वन्या यदि ॥

**भ. २०१६ (७८५); नीतिसंक° २७; पञ्चरत्ने ४ (हि. ४); कवितामृतक°. ५० । सुभा. पृ० १७८. १०१९ । सूहा. १८१. ६४ (भर्तृ°) ॥**

दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जनेष्वार्जवम् ।
शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ १८ ॥

**दाक्षिण्यमिति ॥ स्वजने बन्धौ दाक्षिण्यं सरलता परिजने परिवारे भृत्यादौ दया कृपा। दुर्जने खले शाठ्यं शठभावः। तथेति क्रमे। साधुजने सज्जने प्रीतिर्हर्षः। नृपजने पार्थिवजने नयो नीतिः। विद्वज्जनेषु विपश्चित्सु आर्जवमृजुता। शत्रुजने वैरिजने शौर्यं विक्रमः। गुरुजने पित्रादौ क्षमा सहिष्णुत्वम्। नारीजने स्त्रीलोके धूर्तता कैतवम्। कलासु विद्यासु ये पुरुषाः कुशला निपुणाः (कुशलैः शिक्षितैः यैः पुरुषैः सुजनैरेवमुक्तप्रकारेण क्रियते)। लोकस्य जगतः स्थितिर्मर्यादा तेष्वेव वर्तते नान्यत्रेत्यर्थः ॥** [ शार्दूलविक्रीडितम् ]

१) तु१. दाक्षण्यं; तु२. दाक्ष्यण्यं । सु१.३. ना१.२. प्र५. परजने । तु१. सु. प्र२.३.५. तथा; ना२. जने (सदा)। —२) ना२. स्मयः खलजने (नयो नृप°)। तु. ना१. रा. ते२. प्र४.५. म३. °ने चार्जवं; ना२. ते१. °नेप्यार्जवं। —३) रा. प्र५. कान्ताजने (नारीजने)। सु(टीपा). रा. प्र४.५. म४.५. धृष्टता (धूर्तता)। —४) ना१. यद्येवं; प्र३.५. यैश्चैवं। प्र२.३.५. पुरुषैः कलासु कुशलैः। प्र१. म२.३. कुशला भवन्ति पुरुषाः; म४.५. पुरुषाः कलौ सुकुशलाः । ना१. निपुणाः (कुशलाः)। प्र१. म२.३. लोकज्ञता ॥

**भ. २७३८ (११२५); शतकावलौ ९१; प्रसङ्गाभ° ५। सु. २९४६ । सुभा. पृ० १७९. १०३९ । सुर. पृ० १४. ३६ (भर्तृ°)। चाणक्यनीतिदर्पणे १२. ३। सुभाषितार्णवे २४. ४४ ॥**

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्संगतिः कथय किं न करोति पुंसाम् ॥ १९ ॥

**जाड्यमिति ॥ सत्संगतिर्विद्वत्संसर्गः पुंसां पुरुषाणां किं श्रेयः न करोति न विधत्ते कथय ब्रूहि। सर्वमपि श्रेयः करोतीत्यर्थः। तदेवाह। धियो बुद्धेर्जाड्यमज्ञत्वं हरति अपनयति। वाचि भारत्यां सत्यां (वाण्यां) सत्यं यथार्थकथां सिञ्चति निदधाति। मानस्य बहुमतेः उन्नतिं उच्छ्रायं दिशति वितरति। पापं दुरितमपाकरोति अपनुदति। चेतश्चित्तं प्रसादयति। विमलं (अनाविलं) करोति। दिक्षु आशासु कीर्तिं यशः तनोति विस्तारयति। सज्जनमैत्री सर्वेषां गुणानां निधानमित्यर्थः ॥** [ वसन्ततिलका ]

१) ते२ (शोधनात्पूर्वं). सीदति (सिञ्चति)। —२) ग्र३ (मू). चित्तं (चेतः)। ना२. प्रसारयति। म३. करोति कीर्तिं ॥

भ. २३७६ (९५५); संस्कृतपाठो° ६२; सुभाष्. ३०९। सुर. पृ० ८८. १ (भर्तृ°)। सुभा. पृ० ८७. २९। सुभाषितार्णवे २४. ८१ ॥

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ २० ॥

जयन्तीति ॥ रसेन शृङ्गारादिरसेन पारदेन च। 'रसः सूदश्च पारद' इत्यमरः। 'शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः। बीभत्सरौद्रौ च रसा' इति। सिद्धा निष्पन्नाः पलितादिवर्जिताश्च। सुकृतिनः पुण्यवन्तस्ते कवीश्वरा विद्वच्छ्रेष्ठा जयन्त्युत्कर्षं प्राप्नुवन्ति। येषामुभयेषामपि यश एव कायः शरीरम्। यशस्तुल्यशरीरे [यश आत्मकशरीरे] जरामरणजं भयं वृद्धत्वमरणाभ्यामुत्पन्नम्। 'पञ्चम्यामजातौ' इति जनेर्डः। भयं साध्वसं नास्ति न विद्यते ॥ [अनुष्टुप्]

२) ना१. गुणयुक्ताः (रससिद्धाः)। —३) ना२. कवित्वे विकृतिर्नैषां। सु२. ना३–५. रा. ते१. ग्र३–५. तेषां (ग्र४. येषां इत्यपि) ॥

भ. २३४३ (९४०)। शा. १६६ (भर्तृ°)। सुर. पृ० ३९. १ (शार्ङ्ग°)। सुभा. पृ० ३२. १ (भर्तृ°) ॥

## नीतिशतके द्वितीयपद्धतौ अधिकश्लोकाः।

न भोगहार्या न च बन्धुहार्या न भ्रातृहार्या न च राजहार्या।
स्वदेशमित्रं परदेशबन्धुर्विद्यासुधां ये पुरुषाः पिबन्ति ॥ १ ॥

[अडयार् २५. यल २ कोशे]

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम्।
कीर्तिं च दिक्षु वितनोति तनोति लक्ष्मीं
किं किं न साधयति कल्पलतेव विद्या ॥ २ ॥

[ग्र१. नीति. १. १०; म१–३ नीति१. ११] [भ. ४८०७ (२१७४) सु. ३४४५। सुभा. पृ० ३०. १४। सुर. पृ० ४२. ३ (स्फुटश्लोके)। विक्रमचरित्रे १२७।

अव्याधि गात्रमनुकूलतरं कलत्रं
वेश्म प्रसिद्धविभवं निशिता च विद्या।
श्लाघ्यं कुलं चरमकालगतिः समर्थो
मातुः कटाक्षपरिणामविभूतयस्ते ॥ ३ ॥

[अडयार् २९. ई२. कोशे. नीति. २१]

## मानशौर्यपद्धतिः ।

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ।
मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ २१ ॥

क्षुत्क्षाम इति ॥ क्षुधा बुभुक्षया क्षामोऽपि दुर्बलोऽपि जरया विस्रंसया कृशस्तनुरपि शिथिलप्रायः श्लथकल्पोऽपि कष्टां दशामापन्नः प्राप्तोऽपि विपन्नदीधितिर्नष्टप्रभोऽपि प्राणेष्वसुषु नश्यत्सु गच्छत्स्वपि मत्तस्य गर्वितस्येभेन्द्रस्य करिवरस्य विभिन्नयोर्विदारितयोः कुम्भयोः शिरःपिण्डयोः पिशितग्रासेषु मांसकवलेष्वेकेष्वेव बद्धस्पृहः संसक्तवाञ्छः मानेन चित्तसमुन्नत्या महतामुदाराणामग्रेसरो धुरीणः केसरी कण्ठीरवः जीर्णं पुराणं तृणं यवसं पलालादिकमत्ति भुङ्क्ते किम् । न भुङ्क्त इत्यर्थः । यथा केसरी कष्टावस्थां गतोऽपि मानं नोज्झत्येवमेव महानपीत्यर्थः । तथा चोक्तम् ॥ "अधमा धनमिच्छन्ति धनमानौ तु मध्यमाः । उत्तमा मानमिच्छन्ति मानो हि महतां धनम्" ॥ इति ॥ [ शार्दूलविक्रीडितम् ]

१) तु. ना३–५. ग्र४. म१. ३–५. जरान्वितोऽपि । तु. शिथिलप्राणोपि दीनां; ना२. शिथिलाः प्राप्तोपि कष्टां । —२) तु. सु. गच्छत्स्वपि; ना२. शामत्स्वपि । —३) ना२. उन्मत्तेभ-( मत्तेभेन्द्र-) । ना२.-कवल-; ते२.-पलल- (-पिशित-) । ते२.-बद्धः स्पृहः; म५.-बन्धस्पृहः । —४) ग्र१. म३. किं जीवंस्; म५. किंजीर्णस् । ते. केशरी ॥

भ. २०२७ (७९१); सुभाष्. ३०४ । शा. ९०७ (भर्तृ°) । सु. ६१४ (रतिसेनस्य) । सुर. पृ० १७४. १ (शा.) । सभातरङ्गे १६. १ । वाग्भटकाव्यानुशासने ३. (का० ४३. पृ० ३६) । सुभा. पृ० २३०. ४० (रतिसेनस्य) ॥

स्वल्पस्नायुवसावसेकमलिनं निर्मांसमप्यस्थि गोः
श्वा लब्ध्वा परितोषमेति न च तत्तस्य क्षुधाशान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥२२॥

स्वल्पेति ॥ श्वा सारमेयः स्वल्पस्नायुवसया मेदसोऽवसेकेन क्लेदेन मलिनं श्यामलं निर्मांसं मांसहीनमपि[गोः] अस्थि कीकसं लब्ध्वा प्राप्य परितोषं मुदमेति प्राप्नोति । तदस्थि तस्य शुनः [क्षुधायाः] (क्षुधः) बुभुक्षायाः शान्तये शमनाय नालं न पर्याप्तम् । सिंहः कण्ठीरवः जम्बुकं क्रोष्टारं अङ्कमुत्सङ्गमागतं प्राप्तमपि त्यक्त्वा विहाय द्विपं दन्तिनं निहन्ति हिनस्ति । सर्वो जनः सकलोऽपि लोकः कृच्छ्रगतः कष्टां दशां प्राप्तोऽपि { सत्त्वानुरूपं स्वशक्त्यनुगुणं } ( सत्त्वानुकूलं आत्मशक्तिसदृशं ) फलं वाञ्छति इच्छति । अर्थान्तरन्यासोऽयम् ॥ [ शार्दूलविक्रीडितम् ]

[तु. कोशे नास्ति] १) सु. स्वल्पं; ना२. स्वल्पः। ना१.२. °वसावशेष°; म्र१. °वसावसैक°; म्र२-३. °वसावसेन। ना१. म्र१-३.५. म१.२. अप्यस्थिकं; म३. अप्यस्थि तं। —२) ना२. श्वा लब्धा; म३. कं लब्ध्वा। सु. ना१. म१. ३-५. न पुनस् (न च तत्)। सु. तत्स्यात् (तस्य)। म्र२.३. क्षुधः शान्तये। —३) ना२. जम्बुकमेकम्; म्र३ (मू). जम्बुकमङ्कम्। ते१. आगतवति। ना१. -धिहन्ति। —४) ना२. सर्वं; म्र१.४. म२.३. प्रायः (सर्वः)। ना२. वाञ्छित-। म्र२.३. सत्त्वानुकूलं॥

म. ७३२२ (३३३५); सुभाष्. ३०७। पञ्चतन्त्रे १. १२। हितोपदेशे २. ३९। सु. १०२५ (पञ्चतन्त्रे)। सुभा. पृ० ७९. २२। तन्त्राख्यायिकायां १. ७॥

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च।
श्वा पिण्डदस्य कुरुते गजपुंगवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते॥ २३॥

लाङ्गलेति॥ श्वा कौलेयकः पिण्डदस्यान्नकवलप्रदस्य। संबन्धषष्ठी। लाङ्गूलस्य पुच्छस्य चालनं विधूननं अधः क्षितितले चरणानामङ्घ्रिणामवपातं निपातनं भूमौ क्षोण्यां निपत्य पतित्वा वदनोदरयोर्वक्त्रजठरयोर्दर्शनं प्रकाशनं पिण्डदकर्तृकं कुरुते विदधाति। गजपुंगवो गजश्रेष्ठस्तु धीरं यथा भवति तथा विलोकयति पिण्डदं पश्यति। चाटुशतैरपरिमितप्रियवाक्यैश्च भुङ्क्ते जेमति। अन्यापदेशोऽयं। नीचमुदात्त(र)चित्तं च लक्ष्यीकृत्योक्तः। श्वा यथा पिण्डदस्याग्रे तच्चित्तानुरञ्जनाय कार्पण्यं भजते एवमेव नीचोऽपि। उदारचित्तस्तु मदवारण इव परैर्दीयमानं वस्तु प्रियवाक्यशतैः प्रार्थ्यमानः सन्कथंचिदन्येषां मुदे गृह्णाति। धैर्यं न त्यजतीत्यर्थः॥ [वसन्ततिलका]

१) रा. ते१. म्र५. चरणावघातं। —२) म३. निपात्य। —३) म४. मदवारणस्तु (गजपुंगवस्तु) —४) म३. भुक्तैः॥

म. ५८४५ (२६६३); पञ्चतन्त्रे १. १४; हितोपदेशे २. ४० (३७)। सु. ६४१। सुर. पृ० ७८. ८ (भर्तृ°)। सुभा. पृ० २३१. ७१। तन्त्राख्यायिकायां १. ८॥

परिवर्तिनि संसारे मृतः को वा न जायते।
स जातो येन जातेन याति वंशः समुन्नतिम्॥ २४॥

परिवर्तिनीति॥ परिवर्तिनि परिभ्रमति संसारे भवे मृतः परासुः को वा न जायते नोत्पद्यते। सर्वोऽपि मृतः पुनरुत्पद्यते। तस्य जन्म निरर्थकमित्यर्थः। तर्हि कस्य जन्म सार्थकमित्याकाङ्क्षायामाह। जातेनोत्पन्नेन येन पुंसा वंशः कुलं समुन्नतिं सम्यगुच्छ्रयं याति गच्छति स जातः उत्पन्नः। तस्य जन्म सार्थकमित्यर्थः॥ "कोऽर्थोऽस्ति बहुभिः पुत्रैर्गणनापूरणात्मकैः। वरमेकः कुलालम्बी यत्र विश्रमते कुलम्" इति॥ [अनुष्टुप्]

[तु. कोशे पूर्वोत्तरार्धौ विपर्यस्तौ] १) सु१. °वर्तनि; ना२. °वर्त्मनि । —२) म४. मदः कोपाच्च जा° । —४) ते२. वंशो याति । तु१. वंशसमुन्नतीः । म४. मानः (वंशः) । म५. समुन्नतीं ॥

भ. ६६८१ (३१०७); हितोप° १३ (१४); पञ्चतन्त्रे १. ३३ (२७); सुभाष. ६३ । सु. ५०० । सुभा. पृ० ९८. ७ । सुर. पृ० १२०. ५ (हितोप°) । सूहा. १६८. १० ॥

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ २५ ॥

कुसुमस्तबकस्येति ॥ मनस्विनो धीरस्य कुसुमस्तबकस्येव पुष्पगुच्छकस्येव द्वयी द्विविधा वृत्तिर्वर्तनं हि । द्वैविध्यमेवाह । सर्वस्याशेषस्य लोकस्य जनस्य मूर्ध्नि मस्तके वा वृत्तिर्भवति । वने कानन एव शीर्यते जीर्यते वा । उदात्ताः सर्वलोकोत्कृष्टा भूत्वा तिष्ठन्ति । अथ वा वन एव जीर्यन्ति । न तु मध्यमं पक्षमधमं वा पक्षमाश्रित्य जनमध्ये तिष्ठन्तीत्यर्थः ॥ [अनुष्टुप्]

१) तु. प्र३. म४. °स्यैव । — २) तु१. ते१. म३–५. द्वे गती तु; सु. द्वे गती स्तो; ना१. द्वे गती च; ते२. द्वेधा वृत्तिर्; प्र१. द्वे हि वृत्तिर्; म१. द्वे गती हि; म२. द्वे हि वृत्ती (द्वयी वृत्तिर्) । —४) प्र.२.३.५. जीर्यते ॥

भ. १८४५ (७०८); हितोप° १. १२६ (१०१, १४१); सुभाष. ३०८ । शा. २६४ (भर्तृ°) । सु. २०१ (रविगुप्तस्य), ५०९ । सूमु. ७. २ (भर्तृ°) । सुभा. पृ. ७९.४ (भर्तृ°) । सुर. पृ. ४८.९ (शार्ङ्गधरस्य) । सूहा. १०२.२ । सुभाषितार्णवे २४.४६ । सभातरङ्गे ४३.२२ (भर्तृ°) । गरुडमहापुराणे ११०.१३ ॥

सन्त्यन्येऽपि बृहस्पतिप्रभृतयः संभाविताः पञ्चषा-
स्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ।
द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भास्वरौ
भ्रातः पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः ॥ २६ ॥

सन्तीति ॥ सूर्य[र्या]चन्द्रमोभ्यामन्ये परेऽपि संभाविता बहुमता बृहस्पतिप्रभृतयो गुरुमुख्याः पञ्चषाः पञ्च षड्वा सन्ति विद्यन्ते । 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' इति संख्यावाचिनः पदस्य संख्यावाचिना पदेन सह संख्येयेऽर्थे बहुव्रीहिविधानात्समासः । 'बहुव्रीहौ संख्येये डजबहुगणात्' इत्यच्समासान्तः । टित्वाट्टिलोपः । विशेषविक्रमे अतिशयशक्तौ रुचिः प्रीतिर्यस्य तादृशः स एष दृश्यमानो राहुः स्वर्भानुस्तान्संभावितान्बृहस्पतिप्रभृतीन्प्रति उद्दिश्य न वैरायते वैरं न करोति । 'शब्दवैरकलहे'त्यादिना क्यष् । दिनेश्वरः सूर्यः निशाप्राणेश्वरश्चन्द्रः । तौ भास्वरौ तेजस्विनौ । 'स्थेशभासे'त्यादिना वरच् । द्वावेव पर्वणि पक्षान्ते ग्रसते गिलति । हे भ्रातः सोदर्य । पश्यावलोकय । [शीर्षावशेषीकृतः शीर्षमात्रा-

वशिष्टः ] (शीर्षावशेषाकृतिः शिरोमात्रावशिष्टाकारो) दानवपतिर्दैत्याधिपः इति राहोर्विशेषणद्वयं मानोन्नतिं च द्योतयितुम् । उदारः क्षीणबलोऽपि कीर्तिकामः सन्नुदारेष्वेव वैरायते नाल्पेष्वित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) ग्र४. सन्त्येवात्र । सु.२ प्रमृतिभिः । ना१. निर्जरास् (प्रान्ते पञ्चषाष् इत्यपि) ।—३)सु. रा. ते. दिवाकरनिशा° । सु२.३. ना२. भास्करौ । —४) तु२. ना२. ते२. म४. भ्रान्तः; ग्र१. म१–३.५. प्रीतः (भ्रातः) । ग्र४. सोपि (पश्य) । ना१. दैत्यरिपुणा (दानवपतिः) । रा. ते. ग्र२.३. म१.२.४.५. °शेषाकृतिः ॥

भ. ६८०३ (३१५९) । सुभा. पृ. २४९.९९ ॥

वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स च धार्यते ।
तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-
दह ह महतां निःसीमानश्चरित्रविभूतयः ॥ २७ ॥

वहतीति ॥ शेषोऽनन्तः फणाफलके स्फुटापट्टे स्थितामध्युषितां भुवनानां लोकानां श्रेणीं राजिं वहति धत्ते । कमठपतिना कच्छपनाथेन स च शेषः सदा सर्वदा मध्येपृष्ठं पृष्ठस्य मध्ये । 'पारे मध्ये षष्ठ्या वा' इति समासः । धार्यते उह्यते । पयोधिः समुद्रस्तमपि कमठपतिमनादराल्लीलया क्रोडाधीनं वराहपरतन्त्रं विधत्ते । महतामुदाराणां चरित्रविभूतयो वृत्तमहिमानो निःसीमानो निरवधिकाः । अह ह अद्भुते । 'अह हेत्यद्भुते खेदे' इत्यमरः ॥ [ हरिणी ]

१) ना१. ३-५. रा. ग्र५. म४. °श्रेणिं । म४. ५. °फलकस्थिता । —२) ते२. कमथं; म५. कमल°(कमठ°) तु१. ना.२ ग्र१. °पृष्ठे; ना१. °तोयं (°पृष्ठं) । तु१. स चाप्यवधीयते । —३) म४.५. क्रोधाल्लीनं पयोधिमना° । —४) ना२. निःसीमास्ताश् ॥

भ. ६०१२ ( २७६३ ); सुभाष्. ३१५ । सुभा. पृ. ५१. २२६ । भोजप्रबन्धे २०७ ॥

वरं प्राणच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरह ह पितरि क्लेशविवशे
न चासौ संपातः पयसि पयसां पत्युरुचितः ॥ २८ ॥

वरमिति ॥ तुषाराद्रेर्हिमाचलस्य सूनोः पुत्रस्य मैनाकस्य समदेन गर्वसहितेन मघवता गोत्रभिदा मुक्तस्य प्रहितस्य कुलिशस्य वज्रस्य प्रहारैर्हतिभिः उद्गच्छतः उत्पततः बहुलस्य भूयिष्ठस्य ( गहनस्य विषमस्य ) दहनस्याग्नेरुद्गारादुद्गिरणात्

गुरुभिः दुःसहैः प्रहारैः प्रहरणैर्हेतुभिः प्राणत्यागः मरणं वरं मनाक्प्रियम् । पितरि जनके क्लेशेन दुःखेन विवशे परवशे सति पयसां पत्युरर्णवस्य पयसि जलेऽसौ प्रसिद्धः संपातश्च पातस्तु । चस्त्वर्थः । नोचितो न युक्तः । अह ह खेदे । गोत्रभिदा लूनपक्षे हिमाचले महति दुःखार्णवे निमग्ने सति तथाविधं पितरं अगणयित्वैव स्वपक्षरक्षणाय पयोधिपयसि पतनं न वरं मैनाकस्य । अपि तु प्राणत्याग एव वरमित्यर्थः ॥ [ शिखरिणी ]

[ना१. कोशे नास्ति] १) तु. सु. पक्षच्छेदः; ना३–५. ते. ग्र२–५. म१.२. प्राणत्यागः; रा. म३–५. प्राणोच्छेदः । म१–३.५. समदमघवोन्मु° । म२. °कुशिल° (°कुलिश°) । —२) ग्र.४. उद्गच्छद्भिर्; म४. उद्गच्छन् । ना२. ग्र४. म१.३–५. °बहल°; ते१. °गरल°; ग्र२.३. °गहन° (°बहुल°) । तु. सु. °रुधिरोद्गार°; ते१. °गहनोद्गार°; ग्र१. म२–४. °दहनोद्गारि° । ग्र१. म१–३. °रुचिभिः (°गुरुभिः) । —४) सु१ (मू.). संयन्ता (संपातः) ॥

भ. ५९७२ (२७४४) । सुभा. पृ० २१५.११ ॥

यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः ।
तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ॥ २९ ॥

यदिति ॥ यद्यस्मात्कारणादचेतनो ज्ञानरहितोऽपि इनकान्तः सूर्यकान्तमणिः सवितुर्भानोः पादैः रश्मिभिः चरणैश्च स्पृष्टः चुम्बितः सन्प्रज्वलति प्रदीप्यते । तत्तस्मात्कारणात्तेजस्वी प्रभाववान्पुरुषः पुमान्परेणान्येन कृतामाहितां निकृतिं तिरस्कारं कथं केन प्रकारेण सहते क्षमते । न कथंचित्सहते इत्यर्थः । 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽपी'त्यमरः । ज्ञानरहितोऽपि पादाहतः क्रुध्यतीत्युक्ते किमुत ज्ञानवांस्तेजस्वी च परकृतां पादाहतिरूपां निकृतिं सहते इति छायार्थः । सूर्यकान्तपक्षे तेजस्वी दीप्तिमानित्यनुसंधेयम् ॥ [ आर्या ]

१–२) तु२. पादस्पृष्टः; ग्र४. पादस्पर्शैः । सु१. प्रज्वलतु । तु१. सवितरिन°; तु२. सवितुरीनकान्ताः; म४. सवितुरिनकान्तं; म५. सवितरि*कान्तं । —३) [सु१.२ कोशयोः 'पुरुषः' इति पदं नास्ति] । —४) ग्र४. प्रकृति–; ग्र५. परकृति–(परकृत–) । तु१. -निहृतिं; ग्र२ (मू). ४. -निकृतं; म३.-विकृतिं । तु२. कथं तु; ग्र३. म१–३.५. कथं नु । ना२. सहतां ॥

भ. ५१७३ (२३३६) । सुभा. पृ० ७९.१५ । सुर. पृ० ४९.६ (भर्तृ°) ॥

सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ३० ॥

सिंह इति ॥ शिशुरर्भकोऽपि सिंहः कण्ठीरवो मदेन दानेन मलिनाः श्यामलाः कपोलभित्तयो गण्डस्थलानि येषां तेषु गजेषु निपतति । सत्त्ववतां तेजस्विनां इयं प्रकृतिः स्वभावः । वयो बाल्यादि तेजसः सत्त्वस्य हेतुः कारणं न भवति खलु ॥ [आर्या]

१) ग्र.५ पतति (निपतति) । —२) ग्र१ (मू). गजानां (गजेषु) । —४) रा. ते. ग्र५. तेजसां ॥

भ.७०४० (३२५१); सुभाष्. ३१६ । शा. २८३ । सु. ५९३ (श्रीवज्रायुधस्य)। सुभा. पृ० ७९.१४ । सुर. पृ० १७४.३ (पृ० ४९.२ भर्तृ°) । सभातरङ्गे १६.३ (४०.६) ॥

## नीतिशतके तृतीयपद्धतौ अधिकश्लोकाः ।

यस्मिञ्जीवति जीवन्ति बहवः स तु जीवति ।
बकोऽपि किं न कुरुते हिंसास्वोदरपूरणम् ॥ १ ॥

[तु. कोशे. नीति. २४] [भ.५३४८ (२४१९); पञ्चतन्त्रे१.२८ (१०,२३); विक्रमचरित्रे४; हितोपदेशे २.३५ । सुभा. पृ० ९८.६ । सूहा. १०२.५ ।]

यदि नाम दैवगत्या जगदसरोजं कदापि संजातम् ।
अवकरनिकरं विकिरति तत्किं कृत[क?]वाकुरिव हंसः ॥ २ ॥

[ना२. कोशे. नीति.३.११] [भ.५२२० (२३६३); शतकावलौ ९३ । शा. ८११ । सु.६९१ (भट्टवासुदेवस्य)। सुभा. पृ० २२१.९ (भट्टवासुदेवस्य) । सुर. पृ० १८४.११ (रसिकजीवनस्य)]

याचते त्रिचतुरः पयःकणांश्चातको जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥ ३ ॥

[ना१. नीति. २८] [सुभा. पृ० ४९.१६० 'याचते, चातकः' इति पदद्वयं व्यत्यस्तं]

## ॥ अर्थपद्धतिः ॥

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतां
शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता अमी ॥३१॥

जातिरिति ॥ जातिः ब्राह्मणत्वादिः रसातलं पातालं यातु गच्छतु । नश्यत्वित्यर्थः । गुणानां श्रुतशीलाध्ययनतपःप्रभृतीनां गणः समूहः तस्य रसातलस्य (तत्र रसातलेऽपि) अधोऽधस्तात् गच्छतां (तात्) व्रजतु । शीलं सत्स्वभावः शैलतटात् अद्रिप्रदेशात्पततु भ्रश्यतु । अभिजनो वंशो वह्निना कृशानुना संदह्यतां सम्यग्भस्मीक्रियताम् । शौर्ये पराक्रम एव वैरिणि रिपौ वज्रं दम्भोलिश्चाशु शीघ्रं निपततु गच्छतु । नः अस्माकं केवलमेक एवार्थो द्रविणमस्तु भवतु । जात्यादिष्वादरं विहायार्थमात्राङ्गीकारे कारणमाह । एकेन येनार्थेन विना अमी समस्ता गुणाः तृणलवप्रायाः यवस(घास)कणकल्पाः । गुणवन्तमपि दरिद्रं लोका नाद्रियन्ते । गुणहीनमप्यर्थवन्तं पुरुषमाद्रियन्ते । तस्मादर्थस्यैव प्राधान्यमित्यर्थः ॥
[ शार्दूलविक्रीडितम् ]

१ तु१. गुणगुणस्; ग्र१. गुणगणास् । ना१.३-५. रा.ते. ग्र३-५. तत्राप्यधो । ना३-५. ते२. ग्र२. म४.५. गच्छतात्; ग्र५. गच्छतः । —२) म४.५. शैलतटीं । ग्र४. अभिजनाः । —३) ग्र४. शौर्यं । —४) ते२. ह्येकेनैव (येनैकेन) । ग्र१. म३. तृणलघुप्रायाः । तु.ना२. रा. ते. इमे; ग्र१.म३. अपि (अमी) ॥

भ. २३८८ (९६५); शतकावलौ ८१; सुभाष्. ६५ । शा. ३३२ (भर्तृ°) । सु.३०७३ (माघस्य) । सूमु. १२५.९ (भर्तृ°) । सुर. पृ० ४४.९ (भर्तृ°) । सुभा. पृ० ६४.१५ (भर्तृ°) । सभातरङ्गे ४१.११ ॥

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान्गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ३२ ॥

यस्येति ॥ यस्य वित्तं धनमस्ति स नरः कुलीनः सत्कुलप्रसूतः । सः पण्डितः सुधीः । स श्रुतवान् शास्त्राध्ययनसंपन्नः । गुणज्ञः परगुणवित् । स एव वक्ता वदावदः । स एव दर्शनीयः सुन्दरश्च । सर्वे गुणाः कुलीनत्वपण्डितत्वादयः काञ्चनं सुवर्णमाश्रयन्ति अधितिष्ठन्ति । गुणहीनमपि धनिनं लोकाः कुलीनोऽयं पण्डितोऽयं इत्यादिभिर्बहुमन्यन्ते । अकिंचनं गुणसंपन्नमपि न संभावयन्तीत्यर्थः ॥ [ उपजातिः ]

४) ते१. ग्र१.४. जनाः (गुणाः) । ग्र१.४. म१.२. आश्रयन्ते ॥

भ. ५४१४ (२४४७); विक्रमचरित्रे १५२; सुभाष्. ३२; प्रसङ्गाभ° १२ । शा. ३३३ (भर्तृ°) । सुभा. पृ० ६४.९ (भर्तृ°) । सुर. पृ० ४४.६ (भर्तृ°) । सुभाषितार्णवे १४.३ । सभातरङ्गे ४१.७ ॥

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना-
द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रया-
न्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ ३३ ॥

दौर्मन्त्र्यादिति ॥ मन्त्रो गुप्ति(स)वादः । 'वेदभेदे गुप्तवादे मन्त्र' इत्यमरः । दुष्टो मन्त्रो यस्यासौ दुर्मन्त्रः । तस्य भावो दौर्मन्त्र्यम् । तस्मात् नृपतिः राजा विनश्यति विनाशमृच्छति । यतिर्मत्सरी सङ्गाज्जनसंसर्गाद्विनश्यति । सुतः पुत्रो लालनात् उपलालनाद्विनश्यति । उक्तं च ।

"लालनाद्बहवो दोषास्ताडनाद्बहवो गुणाः ।
तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत्" ॥ इति ॥

विप्रो ब्राह्मणः अनध्ययनात्स्वाध्यायाध्ययनाभावाद्विनश्यति । 'वेद एव द्विजातीनां निःश्रेयसकरः पर' इति स्मृतेः । 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो[ऽध्येयो] ज्ञेयश्चेति' श्रुतेश्च । 'अधीतिबोधाचरणप्रचारणै'रिति श्रीहर्षश्च । कुलं वंशः कुतनयात् दुष्पुत्राद्विनश्यति । उक्तं च ।

"लवणजलान्ता नद्यः स्त्रीभोगान्तानि बन्धुहृदयानि।
पिशुनजनान्तं द्रव्यं दुष्पुत्रान्तानि च कुलानि" इति ॥

खलस्य दुर्जनस्योपासनात् शीलं सद्वृत्तं विनश्यति। 'शीलं स्वभावे सद्वृत्ता'वित्यमरः। मद्यात्सुरासेवनात् ह्रीर्लज्जा विनश्यति। अनवेक्षणात्पुनः पुनः प्रत्यवेक्षणाभावात्कृषिः सस्यं विनश्यति। प्रवासाश्रयात्स्वस्थानादन्यत्र स्थितेः स्नेहो मनःप्रीतिर्विनश्यति। सहावस्थानाभावात्पुत्रादिषु स्नेहोऽपि नश्यतीत्यर्थः। अप्रणयात् प्रणयस्य प्रेम्णोऽभावात्। अथ वा प्रणयस्य विस्रम्भस्याभावान्मैत्री सख्यं विनश्यति। प्रणयास्त्वमी॥ "ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति। भुङ्क्ते भोजयते चैव षड्विधं मित्रलक्षणम्"। इति ॥ समृद्धिः संपत्तिरनयान्नीतेरभावाद्विनश्यति। त्यागात् चारणगायकादिभ्यः वित्तस्य वितरणात्प्रमादादवधानाभावाच्च धनं विनश्यति ॥ [ शार्दूलविक्रीडितम् ]

३) म२.४. °दनपेक्षणादपि। —४) अ३. अनयत्यागात्। सु२. त्यागाप्रमादाद्; ना१. त्यागात्प्रवासाद्; ते२. त्यागप्रमादाद्। [ना२.कोशे 'स्नेहः प्रवासाश्रयात्' त्यागात्प्रमादाद्धनं इत्यंशौ मिथो व्यत्यस्तौ]

भ. २९९१ (१२६०); पञ्चतन्त्रे. १.१८५ (१३५,१६९); कवितामृ°. ५१; प्रसङ्गाभ° १६; सुभाष. १०७। शा. १५३३। सु. २९४५। सुभा. पृ० १७८.१०१०। सुर. पृ० २४०.९२ (भर्तृ°)। सूहा. १८१.५५ (भर्तृ°) ॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ ३४ ॥

दानमिति ॥ दानं विश्राणनं भोगः सुखानुभवः नाशो राजचोराग्निमूषिकादिनिमित्तः इति वित्तस्य धनस्य तिस्रो गतयस्त्रीण्यपगमनिमित्तानि। यः पुमान्धनी पात्रेभ्यो न विददाति न वितरति न भुङ्क्ते नानुभवति तस्य पुंसस्तृतीया गतिर्धननाशो भवति। तस्माद्धनिको धनं दद्यात् भुञ्जीत। तथा चोक्तम्। "दत्तभुक्तफलं धनमिति"॥ "त्यागो गुणो वित्तवतां वित्तत्यागवतां गुणः। परस्परवियुक्तौ तु वित्तत्यागो विडम्बना॥ दद्ध्वमनिशं भुङ्ध्वं मा भूत कृपणा जनाः। भाग्यक्षयेण क्षीयन्ते नोपभोगेन संपदः॥ अदाता पुरुष(कृपण)स्त्यागी धनं संत्यज्य गच्छति। दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति॥ मृत्युः शरीरगोप्तारं संचेतारं वसुंधरा। जारिणीव हसत्यन्तः स्वपतिं पुत्रवत्सलम् (लालसम्)॥ दानपात्रमधमर्णमिहैकग्राहि कोटिगुणितं दिवि दायि। साधुरेति सुकृतैर्यदि कर्तुं पारलौकिककुसीदमसीदत्॥" [आर्या]

१) तु. °गो विनाशस्; अ४. °गो नाशास्। —३) ते२. यन्न (यो न)। तु१. न हि भुङ्क्ते। —४) तु१. भवन्ति ॥

भ. २७५७ (११३४); पञ्चतन्त्रे २.१५९ (१४८); हितोप° १.१७२; प्रसङ्गाभ°, ७; विक्रमचरित्रे ७२। सु. ४७८। शा. ३९०। प्रबन्धचिन्तामणौ ५.२६४। तन्त्राख्यायिकायां ११०। सुर. पृ० ६३.४ (भर्तृ°)। सुभा. पृ० ६९.१५। सभातरङ्गे ४२.५ ॥

मणिः शाणोल्लीढः समरविजयी हेतिदलितो
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नराः॥ ३५॥

मणिरिति॥ शाणेन निकषेणोल्लीढो निघृष्टः। तेजित इत्यर्थः। मणिः रत्नम्। हेतिभिरायुधैर्दलितो विदारितः समरविजयी युद्धे विजितवान्। मदेन दानेन क्षीणः कृशः नागः कुञ्जरः। शरदि शरदृतौ आश्यानपुलिना ईषदार्द्रसैकता सरित्तरङ्गिणी। कलाशेषः षोडशभागावशिष्टश्चन्द्रः सुधांशुः। अमरोपभुक्तावशिष्टत्वात्। सुरतेन व्यवायेन मृदिता मर्दिता। बालवनिता यौवनोन्मुखी। अर्थिषु याचकेषु गलितविभवा गतसंपदो नराश्च तनिम्ना कार्श्येन शोभन्ते राजन्ते॥ [शिखरिणी]

१) तु. ना२. हेतिनिहतो।—२) तु१.ना२. सरितः स्यान-; सु. सरितः श्याम-. ना१. सरिदास्यान-; ग्र५. सरितः श्यान-। तु१. सु. ना२.-पुलिनाः।—३) ग्र१.म४. °मुदिता। रा (टीपा). जारवनिता।—४) तु२. ननिम्ना। ना१. म१.३. नृपाः; सु (मू).ग्र४. जनाः; ते२. नताः (नराः)॥

म. ४६५७ (२०८७); सुभाष्. ३०३। शा. १५२९ (भर्तृ°)। सु. ३४५७। सुभा. पृ० १७७. ९८३। सूहा. १७०.१२ (भर्तृ°)। कुवलयानन्दे। अभिनवगुप्तस्य ध्वन्यालोकटीकायां। पुण्यराजस्य वाक्यपदीयटीकायां २.८९॥

परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये
स पश्चात्संपूर्णः कलयति धरित्रीं तृणसमाम्।
अतश्चानेकान्ता गुरुलघुतयार्थेषु धनिना-
मवस्था वस्तूनि प्रथयति च संकोचयति च॥ ३६॥

परिक्षीण इति॥ परिक्षीणो निःस्वः कोऽपि पुरुषो यवानां सितशूकानां धान्यविशेषाणां प्रसृतये प्रसृतिपरिमितेभ्यो यवेभ्यः स्पृहयति। यवान्काङ्क्षतीत्यर्थः। 'स्पृहेरीप्सितः' इति संप्रदानसंज्ञायां चतुर्थी। स एव परिक्षीणः पश्चादुत्तरकाले संपूर्णः समग्रविभवो भूत्वा [धरित्रीं] धरणिमपि तृणसमां यवसतुल्यां कलयति मन्यते। कलिः कामधेनुः। अतः कारणादवस्थावशात् अर्थेषु यवादिषु विषये गुरुलघुतया स्थूलाल्पभावेन अनेकान्ता अनियता सती धनिनामाढ्यानां वस्तूनि धनानि प्रथयति गुरूकरोति संकोचयति लघूकरोति च। अनेकान्तशब्दो नियतपुंलिङ्गः। तस्मादवस्थाविशेषणत्वेऽपि पुंलिङ्ग एव। यथा माघः 'तेजः क्षमा वानैकान्तः कालज्ञस्य महीपते'रिति। परिक्षीणावस्थायां यवानां प्रसृतिरिति[रपि] स्पृहणीया भवति। संपन्नावस्थायां धरित्र्यपि तृणायते॥ [शिखरिणी]

१) ना१. प्रसृतिकं (प्रसृतये)।—२) म५. संपूर्णं। सु. ना२. गणयति।—३) तु१. सु. °श्चानैकान्त्यं; तु२. °श्चानैकान्त्यात्; ना१. °श्चानेकान्तर्; ग्र५. °श्चानेकान्तो।—४) ना१. प्रचयति॥

भ. ३९५५ (१७१३); सुभाष. ३०३ । सुभा. पृ० ६५.१५ ॥

राजन्दुधुक्षसि यदि क्षितिधेनुमेनां
तेनाद्य वत्समिव लोकमिमं पुषाण ।
तस्मिंश्च सम्यगनिशं परिपोष्यमाणे
नानाफलं फलति कल्पलतेव भूमिः ॥ ३७ ॥

राजन्निति ॥ हे राजन् भूप एनामिमां क्षितिं धरणीमेव धेनुं नवप्रसूतिकाम् । 'धेनुः स्यान्नवसूतिके'त्यमरः । धिनोति प्रीणातीति क्षितिरपि धेनुः । यदि दुधुक्षसि क्षित्युत्पन्नमर्थमुपादातुमिच्छसीत्यर्थः । तेन कारणेनाद्येदानीं शक्रत्करिमिवेमं लोकं जनं पुषाण पोषय । वत्से विद्यमान एव धेनुः प्रचुरतरं क्षीरं दधाति । अविद्यमानवत्सा तु शुष्यति । एवमेव क्षितिरपि विद्यमानजना प्रचुरतरधनोत्थाय(द्वार)समर्था भवति । अविद्यमानजना तु निष्कमात्रमपि नोत्पादयति । तस्मिँल्लोके सम्यक् शास्त्रोक्तमार्गेणानिशं सर्वदा परिपोष्यमाणे वर्धमाने भूमिः नानाफलं(ला) धनधान्यादिकं(दिफला सती) कल्पलता कल्पवल्लीव फलति पच्यते [ निष्पादयति ] ॥ [वसन्ततिलका]

१) सु. ना१.२. म्र२.४. °मेतां (°मेनां) । —२) तु. सु. ना२–५. रा. ते१. लोकममुं । —३) तु. सु. ना३.४. तस्मिंस्तु । ना१.३. रा. ते. म्र५. म१.२.४. परिपुष्य°; सु (मू). ना४.५. परितोष्य° । —४) तु. सु. नानाफलैः; म्र२. नानाफला ॥

भ. ५७४० (२६०२) । सुभा. पृ० १५२.४०५ । सुर. पृ० १२२.९ (सभातरङ्गे) ॥

सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ ३८ ॥

सत्येति ॥ नृपाणां नीतिर्नयः वाराङ्गना गणिकेव कचित्सत्या यथार्था च कचित्परुषा निष्ठुरा च कचित्प्रियवादिनी मधुरभाषिणी च कचिद्धिंस्रा हननशीला च । 'नमिकम्पी'त्यादिना रः । कचिद्दयालुः कृपावती । 'स्पृहिग्रही'त्यादिना आलुच् । कचिदर्थपरा धनपरायणा च । कचिद्वदान्या बहुप्रदा च । कचिन्नित्यव्यया अविरतार्थापगमा च । 'अर्थस्यापगमो व्यय' इत्यमरः । कचित्प्रचुरनित्यधनागमा प्राज्यानवरतार्थप्रवेशा च अनेकरूपा बहुप्रकारा भवति ॥ [वसन्ततिलका]

१) तु१. म्र.२ (मू). पुरुषा– । रा१. प्रियभाषिणी; म्र१. म३. प्रियवादिता । —३) म्र३ (मू). नित्यंव्यया; म३. नित्यव्यथा । म३. °दिव्यधना° ॥

भ. ६७३९ (३१३२); पञ्चतन्त्रे १.४७३ (४२५); हितोपदेशे २.१७४ (१६६,१८२); प्रसङ्गाभ° ७ । तन्त्राख्यायिकायां १.१८५ । सुभा. पृ० १५२.४०४ । सुर. पृ० १२२.१० (हितोप°) ॥

आज्ञा कीर्तिः पालनं ब्राह्मणानां दानं भोगो मित्रसंरक्षणं च ।
येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ३९ ॥

आज्ञेति ॥ आज्ञा शासनं कीर्तिर्यशः ब्राह्मणानां विप्राणां पालनं रक्षणं गृहक्षेत्रधनधान्यादिदानेन चोरादिभयनिवारणेन च । यदुक्तं योगीश्वरेण । 'भोगांश्च दद्याद्विप्रेभ्यो (दीयते द्रव्यं ?) प्रजाभ्यश्चाभयं सदा' इति । दानं त्रिविधेष्वपि पात्रेषु वित्तार्पणम् । भोगः अनिषिद्धसुखानुभवः । (वित्तस्य संरक्षणम् । अलब्धमिह धर्मेण लब्धं यत्नेन पालयेत् । पालितं वर्धयेन्नित्यं वृद्धिं पात्रेषु निक्षिपेत् । इति ॥) मित्रसंरक्षणमिति पाठे मित्राणां सुहृदां संरक्षणं सम्यक्परिपालनम् । एते कथिताः षड्गुणा (ष(स)द्गुणा) येषां न प्रवृत्ताः न प्रसृताः तेषां पार्थिवोपाश्रयेण { पार्थिवेति संबुद्ध्यन्तं भिन्नं पदम् । रा° } कोऽर्थः किं प्रयोजनं न किंचित्प्रयोजनमित्यर्थः । पार्थिवोपाश्रयेणेत्यत्र भावप्रधानो निर्देशः ॥ [ शालिनी ]

१) तु. सज्जनानां (ब्राह्मणानां) । —२) म३. भोगो मित्रः पुण्यसंर° । म४. नित्यसंर° । ना १. मित्रसंतर्पणं । —३) वे २. म२ (मू). म३.४. एषां । तु. संप्रवृत्ताः; म१.२. ४ न प्रसिद्धाः (न प्रवृत्ताः) ॥

भ. ८७६ (३१८); शतकावली ९० । सु. ३२२९ । सुभा. पृ० १५२. ३९४ । सुर. पृ० १२२.११ (भर्तृ°) ॥

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ च नातोऽधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ ४० ॥

यदिति ॥ धात्रा विश्वसृजा निजे स्वके भालपट्टे ललाटफलके स्तोकमल्पं महत्प्रभूतं वा यद्धनं द्रविणं लिखितं अस्यैतावद्धनमिति वर्णैः विन्यस्तं तद्धनं नितरामत्यर्थं मरुस्थले धन्वभूप्रदेशेऽपि प्राप्नोति लभते । मेरौ हेमाद्रावपि अस्मादधिकमतिरिक्तं न लभते । [ तत् ] तस्मात्कारणात् हे लोक धीरो धैर्यवान्भव । वित्तवत्सु धनिकेषु कृपणां दीनां वृत्तिं वर्तनं वृथा व्यर्थमेव मा कृथाः मा विदधाः । अमुमेवार्थमुदाहरणमुखेन स्फुटयति । घटः कलशः कूपेऽन्धावपि पयोनिधौ पारावारेऽपि तुल्यं समप्रमाणं जलं गृह्णात्यादत्ते । पश्यावलोकय । यदि घटः कूपे यावज्जलं गृह्णाति ततो द्विगुणं वा जलं पयोनिधौ गृह्णाति चेत्तदा लोको धनिकं याचमानो निजललाटलिखितादप्यधिकं लभते । उभयमप्यसंभावितमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

[ना१.नी.८९] १) रा१.ग्र१-४.म. -फाल-(-भाल-)। ना५. महद्वा फलं; म३. महद्यद्भनं। —२) ग्र१. म. नियतं (नितरां)। सु. मेरौ न चातो° ॥

म. ५२६७ (२३८६)। सुभा. पृ० ९३.९९। सुर. पृ० ७१.९ (सभातरङ्गे) ॥

## नीतिशतके चतुर्थपद्धतौ अधिकः।

अर्था हसन्त्युचितदानविहीनचित्तं
भूमिर्नरं च मम भूमिरिति ब्रुवाणम्।
जारा हसन्ति तनयानुपलालयन्तं
मृत्युर्हसत्यवनिपं रणरङ्गभीरुम् ॥

[ना१. नीति. ४०] [सुभा. पृ० १७६.९५६; सुर. पृ० २२६.५४ (स्फुटश्लोके)]

## ॥ दुर्जनपद्धतिः ॥

अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा।
सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥ ४१ ॥

अकरुणत्वमिति ॥ अकरुणत्वं कृपाराहित्यं अकारणविग्रहः निर्हेतुककोपः परेषामन्येषां धने वित्ते परयोषिति अन्यस्त्रियां च स्पृहा इच्छा। सुजनेषु साधुषु बन्धुजनेषु बान्धवेषु असहिष्णुता ईर्ष्यालुत्वमितीदं सर्वं दुरात्मनां दुर्जनानां प्रकृत्या स्वभावेनैव सिद्धं निष्पन्नम्। दुरात्मनामेतेषु दुर्गुणेषु अभ्यासमन्तरेणैव प्रावीण्यमित्यर्थः ॥ [द्रुतविलम्बितम्]

[१९२४ सन. वत्सरे बंगलूर वेंकटेश्वरमुद्रणालये मागडीकृष्णशास्त्रिप्रकाशिते शतकत्रयपुस्तके नास्ति] १) ग्र२ (मू). कारणत्व°। ना२. °निग्रहः। —२) ना२. परधनापहृतिः परयोषितः। —३) ग्र४. म५. स्वजन- ॥

भ. ३ (१); संस्कृतपाठ° ६२। सुभा. पृ० ५९.२१७। सुर. पृ० २६.५३ (भर्तृ°) ॥

दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन्।
मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ४२ ॥

दुर्जन इति ॥ दुर्जनो दुष्टः विद्यया वेदशास्त्रोदितविद्यया अलंकृतोऽपि भूषितोऽपि सन्। विद्यायुतश्चेदित्यर्थः। परिहर्तव्यः परिहर्तुं योग्यः। तत्र दृष्टान्तमाह। मणिना रत्नेन भूषितः परिष्कृतः असौ सर्पः आशीविषः भयंकरः भीतिदायी न किं न भवति किम्। सर्पः भयंकर एवेत्यर्थः। सर्वथा विद्वानपि दुर्जनः परिहर्तव्य एवेति तात्पर्यम् ॥ [अनुष्टुप्]

२) तु१. असन् (सन्) ॥

भ. २८५० (११८३); चाणक्य° २५ (हि. ३१४); राजतरङ्गिण्यां १.३२४; संस्कृतपाठ° ५५; हितोपदेशे १.७५ (९०); सुभाष्. ८९. (३०६)। शा. ३५४ (चाणक्यस्य)। सु. ३५५ (वाल्मीकेः)। सुर. पृ० २२.१ (स्फुटश्लोके)। सुभा. पृ० ५५.७० (चाणक्यस्य)। सूहा. ३२. २४ (सरस्वतीकण्ठाभरणे)। सुभाषितार्णवे २७.५१। सभातरङ्गे ३.३० ॥

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता मुनौ विमतिता दैन्यं प्रियालापिनि ।
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत्को नाम गुणो भवेत्सुगुणिनां यो दुर्जनैर्नाङ्कितः ॥ ४३ ॥

जाड्यमिति ॥ ह्रीमति लज्जावति जाड्यं जडत्वं गण्यते गृह्यते । व्रतेषु नियमेषु रुचिः प्रीतिर्यस्य तस्मिन्दम्भः कपटाटोपो गण्यते । शुचौ शुद्धपुरुषे कैतवं धूर्तता गण्यते । शूरे विक्रमवति निर्घृणता निर्दयत्वं गण्यते । मुनौ मननशीले (ऋजौ अजिह्मे) विमतिता मतिहीनत्वं गण्यते । प्रियालापिनि प्रियभाषिणि दैन्यं दीनता गण्यते । तेजस्विनि मानोन्नते अवलिप्तता गर्विता गण्यते । वक्तरि वदावदे मुखरता दुर्मुखत्वं गण्यते । स्थिरे विमृश्यकारिणि अशक्तिः शक्तेरभावो गण्यते । तत् तस्मात्कारणात् गुणिनां गुणवतां यो गुणो दुर्जनैः नाङ्कितः न दूषितः स गुणः को नाम भवेत् । न कोऽपीत्यर्थः ॥ [शार्दूलविक्रीडितम्]

[तु. नीति. ८०] १) ना.३.५. रा. ते. ग्र४. व्रतशुचौ; म४.५. व्रतपरे । ना१. ग्र१.४. म. डम्भः । ते२. कुचौ (शुचौ) । —२) तु. [आ]र्जवे; ना२. रुजे; ना५. गुरौ; ग्र२ (टी).३. म४.५ ऋजौ; ग्र४. मतौ (मुनौ) । तु. कुमतिता । —३) तु१. वक्तिर्मशक्तिः; तु२. ना१. रा. ग्र४.५. म१–४. वक्तव्यशक्तिः । ग्र४. स्थितौ (स्थिरे) । —४) तु२. तत्कर्मानुगुणो । ग्र३ (मू). गुणोभवत्; ग्र४. गुणी भवेत्; म३. भवेद्गुणः । तु१. ना१.३–५. रा. ते. ग्र२.३.५. स गुणिनां । ना१. म२. दुर्जनेनाङ्कितः; ग्र१. म१.३ दुर्जनानां मतः; ग्र.४ दुजनेनाश्चितः; म४.५. दुर्जनानां गुणः ॥

भ. २३७५ (९५४); शतकावलौ ८०; सुभाष्. ३०६ । सु. ४६४ (भर्तृ°) । सुभा. पृ० ६१. २६३ (भर्तृ°) । सूमु. ८.३४ । सुर. पृ० २६.५४ (सभातरङ्गे) ॥

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं निजैः स्वमहिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ ४४ ॥

लोभ इति ॥ लोभो धनप्रेमा यद्यस्ति विद्यते तदानीमगुणेनावगुणेन किम् । लुब्धस्य सर्वे गुणा नष्टकल्पा भवन्ति । उक्तं च व्यासेन ।

"रथस्थान्धरणिस्थोऽपि पार्थः सर्वधनुर्धरान्।
एको निवारयामास लोभः सर्वगुणानिव" ॥ इति ॥

पिशुनतासूचकत्वं यद्यस्ति तदानीं पातकैः ब्रह्महत्यादिभिः किम् । पिशुनतैव ब्रह्महत्यादिपातककल्पेत्यर्थः। सत्यमवितथं वचः यद्यस्ति तदानीं तपसा कृच्छ्रचान्द्रायणादिना किम्। यस्मात्सत्यमेव तपः। शुचि शुद्धिमन्मनश्चित्तं यद्यस्ति तदानीं तीर्थेन प्रयागादिना किम्। यस्यास्ति चित्तशुद्धिस्तस्य सर्वाणि तीर्थानि सन्ति। यस्मात्तीर्थानां पापस्पर्शपरिहारः फलं सुकृतं च तदुभयमपि शुद्धचित्तस्यास्ति तस्मात्तीर्थम[न]र्थमित्यर्थः। सौजन्यं सुजनता यद्यस्ति तर्हि निजैः बान्धवैः किम्। यः सुजनस्तस्य सर्वेऽपि बान्धवा भवन्तीत्यर्थः। स्वस्यात्मनो महिमा वित्तादिना सर्वोत्कर्षः यद्यस्ति तदानीं मण्डनैराभरणैः किम्। वि(चि)त्ताद्युत्कर्षा एवाभरणमित्यर्थः। सती समीचीना विद्या वेदशास्त्रादिर्यद्यस्ति तदानीमर्थैः किम्। यो विद्वांस्तं सर्वेऽपि वित्तैः पूजयन्तीत्यर्थः। अपयशो दुष्कीर्तिर्यद्यस्ति तदानीं मृत्युना मरणेन किम्। अपयश एव मृत्युरित्यर्थः ॥ [शार्दूलविक्रीडितं]

१) ग्र१. चेत्सुगुणेन। —२) ना२. तीर्थैश्च किं। —३) ना१. °न्यं स्वजनेन किं सुमहिमा। ना२. ग्र१. म१.२. जनैः सु°; सु (सुटीपा निजैः स्व-) म४.५. गुणैः स्व-; ना५. गुणैः सु°; रा. बलेन; ते१. जनेन; ते२. निजैः सु°; ग्र२ (मू). चनैः स्व°; ग्र४.५. जनैः स्व°; म३. धनैः सु° (निजैः स्व°)। —४) तु१. यद्यस्तु ॥

भ. ५८८१ (२६८६); षड्लै ६ (हे. ५); काव्यकल्प° ६; काव्यसं° ३; नीतिसं° २६; प्रसङ्गाभ° १०; सुभाष्. २२१। शा. १५५३। सुर. पृ० २४०.९३ (भर्तृ°)। सुभा. पृ० १७८. १०१५ (अमरुकस्य)। चाणक्यनीतिदर्पणे १७.४। सुभाषितार्णवे २७.४४ ॥

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणः सततदुर्गतिः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ४५ ॥

शशीति ॥ दिवसे वासरे धूसर ईषत्पाण्डुः शशी चन्द्रः। गलितयौवना व्यपगततारुण्या कामिनी वामलोचना। विगतानि गतानि वारिजानि कमलानि यस्मात्तत्तादृशं सरः कासारः। स्वाकृतेः सुन्दराकारस्य पुरुषस्यानक्षरं अक्षरशून्यं योग्यतारहितमित्यर्थः। मुखं वदनम्। धनपरायणो वित्तपरतन्त्रः प्रभुः परिवृढः। सतता अविच्छिन्ना दुर्गतिर्दारिद्र्यं यस्य स तादृशः सज्जनः साधुः। नृपस्य राज्ञोऽङ्गणगतः अङ्गणं प्राप्तः खलः कर्णेजपश्च। तानि सप्त मे मम मनसि हृदये शल्यानि शङ्कवः। शोकहेतुत्वादेतेषां शल्य[त्व]मित्यर्थः ॥ [पृथ्वी]

[ना३. ग्र२.३.५. कोशेषु अस्मिन् श्लोके 'गलितयौवना कामिनी' इति द्वितीयपादे, 'मुखमनक्षरं स्वाकृतेः' इति तृतीयपादे 'सततदुर्गतिः सज्जन' इति प्रथमपादे च इति स्थलविपरिणामः]। —३) तु. सु२.३. ना२.४. ग्र२. °दुर्गतः। —४) ग्र. नृपांकण°। ग्र१. म३. शल्या इमे ॥

भ. ४४३४ (२९७३); अष्टरत्ने ७ (हे. पृ० ८); सुभाष. ३०३ । शा. १५३० (भर्तृ°) । सु. ३४५८ (भट्टवृद्धेः) । सुर. पृ० २४०. ९४ (भर्तृ°) । सुभा. पृ० १७७.९९३ । सक. (पृ० ३०२) ५.३६.५ (शिल्हणस्य) । सूहा. १८१.५९ (भर्तृ°) । काव्यप्रकाशे १०.५०९ । अलंकारसर्वस्वे (का० ३५; पृ० २०४) । काव्यप्रदीपे (का० २४. पृ० ४२८) । अलंकारमहोदधौ ९१४ (भर्तृ°) । उदाहरणचन्द्रिकायां । साहित्यदर्पणे १०. पृ० ६६७ । चन्द्रालोक-टी-५.९७ । हेमचन्द्रकाव्यानुशासने ६ (का० ७१; पृ० २.८५) ॥

न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ।
होतारमपि जुह्वानं स्पृष्टो दहति पावकः ॥ ४६ ॥

नेति ॥ चण्डकोपानां प्रकृष्टकोपानां ( प्रकर्षरोषाणां ) भूभुजां नृपाणां आत्मीयो स्वकीयो नाम कश्चित्कोऽपि नास्ति । अस्मिन्नर्थे दृष्टान्तमाह । पावको दहनो जुह्वानं आज्यचर्वादिकं ददतमपि होतारमृत्विजं (मन्त्रदं ?) स्पृष्टः सन्दहति भस्मीकरोति ॥ [अनुष्टुप्]

१) प्र२ (मू). कश्चिच° । —२) ना५. °त्मीयोऽन्यो न । ना२. भूभृतां । —३) प्र२ (मू). हेतारमपि । तु. जुह्वन्तमपि होतारं । सु (टीपा). जुह्वन्तं; प्र४. जुह्वाभि-॥

भ. ३१८४ (१३४३) । शा. १३७६ (भर्तृ°) । सु. २७९९ (पञ्चतन्त्रे) । सुर. पृ० १२३.१२ (भर्तृ°) । सुभा. पृ० १४६.१६० । सूहा. ५९.१ (वल्लभदेवस्य) ॥

मौनान्मूकः प्रवचनपटुर्वाचको जल्पको वा
धृष्टः पार्श्वे भवति च वसन्दूरतोऽप्यप्रगल्भः ।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ४७ ॥

मौनादिति ॥ मौनादभाषणात् मूकोऽवाग्भवति । प्रवचने बहुभाषणे पटुः पेशलश्चेत् [वाचको बहुभाषी] (वातिको वातव्याध्यभिहतो वा) जल्पको {=रा. असंबद्धप्रलापी} वाचाटो वा भवति । पार्श्वे निकटे वसन्वर्तमानो धृष्टो( ष्णो ) धृष्णुर्भवति । दूरतो दवीयसि देशे वर्तमानश्चेदप्रगल्भोऽधृष्टो भवति । क्षान्त्या सहिष्णुतया युक्तश्चेत् भीरुस्त्रस्तो भवति । यद्यथ वा न सहते न क्षमते तदानीं नाभिजातः अबुधः प्रायशः प्रायेण भवति । अकुलजो वा भवति । 'अभिजातस्तु कुलजे बुधे' इत्युभयत्राप्यमरः । तस्मात्कारणात्सेवारूपो धर्मः परममत्यन्तं गहनः प्रवेष्टुमशक्यो योगिनां सर्वज्ञानामप्यगम्यो ज्ञातुमशक्यो भवति । यस्मान्मौनप्रवचनादिषु सर्वेष्ववगुणत्वमेव कल्पयन्ति लोकाः । तस्माज्ज्ञातुमशक्यः ॥ [मन्दाक्रान्ता]

१) तु. सु. चाटुलो; ना१.३.४. वादको; प्र२.३.५. वातिको (वाचको) । —२) ना.३.४. प्र२. धृष्णुः; प्र३. धृष्णः; ते२. दृष्टः; म२. दृष्टः । सु. प्र१. म१–३. वसति (भवति) । सु. च सदा;

ना२. ग्र१. म१-३. च तथा; ग्र४. निवसन्। तु. दूरतश्चाप्रमादी; ना२. °तश्चाप्रगल्भः; म४. °तोऽस्यप्रगल्भः; म५. °गोऽप्यप्रगल्भः। —३) ते२. नाभिजाने ॥

म. ४९८७ (२२५७); हितोप° २.२६ (२५); सुभाष. ३०८; पञ्चतन्त्रे १.२८५। सुभा. पृ० १७.१५। सुर. पृ० १०९.११ (भर्तृ°)। सक. ५.४२. १ (पृ० ३०५)॥

उद्भासिताखिलखलस्य विशृङ्खलस्य
प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
नीचस्य गोचरगतैः सुखमास्यते कैः॥ ४८॥

उद्भासितेति॥ उद्भासिताः प्रकाशिता अखिलाः सर्वे खला दुर्जना येन स तथाविधः। तस्य विशृङ्खलस्य स्वच्छन्दवर्तिनः। प्राक्पूर्वं जाता इदानीं विस्मृता अनन्तर्गता निजा स्वकीया अधमस्य नीचस्य कर्मैव वृत्तिर्वर्तनं येन तादृशस्य। दैवाद्भाग्यवशादवाप्तविभवस्य प्राप्तसंपदो गुणद्विषोऽस्य लोकेतरसदृशस्य नीचस्य पामरस्य गोचरगतैः विषयप्राप्तैः कैर्लोकैः सुखं यथा भवति तथा आस्यते स्थीयते। न कैश्चिदपि सुखेन स्थीयते इत्यर्थः॥ [वसन्ततिलका]

१) ग्र१. म३. °बलस्य (°खलस्य)। म४. विजृम्भितस्य। —२) ना१. रा. (टीपा). प्रागेव; ना ३.४. प्रोद्गाथ-; ते१. रा. ग्र५. प्रोद्गाढ-; म४.५. प्राग्जाति-(प्राग्जात-)। सु. रा (टीपा) ते१. -विस्तृत-; ना१. ग्र५. -विस्मृति-(-विस्मृत-)। ग्र५.-निजाखिल-। —३) तु१. गुणद्विषस्य; ना१. गुणिद्विषोस्य; ते१. गुणाद्विषोऽस्य; ग्र४. गुणद्विषश्च। —४) तु. ग्र१. °माप्यते कैः॥

म. १२४१ (४६६)। सु. ४४४। सुभा. पृ० ६०.२३८। सुर. पृ० २७.५५ (कल्पतरौ)॥

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात्।
दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम्॥ ४९॥

आरम्भगुर्वीति॥ खलानां दुर्जनानां सज्जनानां साधूनां च मैत्री सख्यं क्रमेण दिनस्य वासरस्य पूर्वार्धे प्रथमखण्डे परार्धे द्वितीयखण्डे च भिन्ना विसदृशी। उभयत्रार्धशब्दो नपुंसकलिङ्गः समेंऽशे वर्तते। 'अर्धं समेंऽशके' इत्यमरः। छायेव अनातप इव। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपे' इत्यमरः। पूर्वार्धभिन्ना छाया खलमैत्र्या उपमानम्। परार्धभिन्ना छाया सज्जनमैत्र्याः। उपमानोपमेयसाम्यमाह। पूर्वार्धभिन्ना छाया खलमैत्री च आरम्भे प्रक्रमे गुर्वी अधिका तथा क्रमेण क्षयिणी ह्रासवती। परार्धभिन्ना छाया सज्जनमैत्री च पुरा प्रथमं लघ्वी अल्पा पश्चादनन्तरं वृद्धिमत्युपचयवती चेति॥ [उपजातिः]

१) सु. प्रारम्भ–। तु. ना१. ग्र१. म३. क्षयणी। —२) ना४.५. लघ्वी पुरो–; लघूः पुरा। सु१. वृद्धिमतीव; ना१. वृद्धिमयी च; ना३. रा. ग्र१.५. म१.३. वृद्धिमुपैति। —३) ग्र२(मू). वीनस्य; म५. इनस्य। ना१. °भागा (°भिन्ना)। —४) ग्र४. छायैव। तु१. ना१. ग्र२.४.५. खलु (खल–)॥

भ. १००४ (३८२); पञ्चतन्त्रे २.३८; सुभाष. ६२। सुभा. पृ० १७२.८२६। सक. ५.३७.५ (पृ० ३०३, वाचस्पतेः)। सभातरङ्गे ३.३८॥

मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम्।
लुब्धकधीवरपिशुना निष्कारणमेव वैरिणो जगति ॥ ५० ॥

मृगेति॥ मृगादीनां कृष्णसारादीनां मीनानां मत्स्यादीनां सज्जनानां साधूनां तृणेन यवसेन जलेनोदकेन संतोषेण तृष्णापरित्यागेन विहिता कृता वृत्तिर्जीवनं यैस्तैषाम्। मृगास्तृणेन विहितवृत्तयः मीनाः सलिलेन सज्जनाः संतोषेणेति क्रमः। मृगाणां लुब्धकाः मीनानां धीवराः सज्जनानां पिशुनाः अकारणशत्रवः। मृगैर्लुब्धकानामपराधः कोऽपि न कृतः। तथा मीनैर्धीवराणां सज्जनैः पिशुनानामपि। एते निष्कारणवैरिणस्त्रय इत्यर्थः॥ [आर्या]

२) ते२. °निहीन° (°विहित°)। —३) तु२. रा१. ग्र३.४. म१–४. °पिशुनानां। —४) तु. ना२.३.५. निष्कारणवैरिणो। ग्र४. भवन्ति (जगति)॥

भ. ४९३१ (२२३४); सुभाष. ३०७। सु. ४२२ (भर्तृ°)। सूक्तावल्याम्। सुर. पृ० २७.५६ (भर्तृ°)। सुभा. पृ० ५७.१३६ (भर्तृ°)। वाग्भटस्य काव्यानुशासने ३ (का० ४३. पृ० ४१)। अलंकारकौस्तुभे (का० ६६. पृ० ३१४)। सुभाषितार्णवे २६.६०॥

## नीतिशतके पञ्चमपद्धतौ अधिकश्लोकः।

सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः।
मन्त्रौषधिवशात्सर्पः खलः केनोपशाम्यते॥

[तु. नीति. ४४] [भ. ६८९९ (३१९७); चाणक्यनीतिदर्पणे क्वचित् कोशेषु २६। सुर. पृ० ३२.१० (शार्ङ्ग°)। सुभा. पृ० ५४.३३। सुभाषितार्णवे २७.२७। सभातरङ्गे ३.३१]

## ॥ सुजनपद्धतिः ॥

वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम्।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खलै-
रेते येषु वसन्ति निर्मलगुणास्तेभ्यो महद्भ्यो नमः॥ ५१ ॥

वाञ्छेति ॥ सज्जनसंगमे (तौ) विद्वत्संसर्गे वाञ्छा स्पृहा। परेषामन्येषां गुणे प्रश्रयादौ प्रीतिः प्रमोदः। गुरौ जनकदेशिकादौ नम्रता प्रह्वीभावः। विद्यायां शास्त्रादौ व्यसनमास्था। स्वयोषिति आत्मपत्न्यामेव रतिः अभिलाषः। लोकापवादात् जननिन्दायाः सकाशात् भयं साध्वसम्। शूलिनि शंकरे भक्तिः तात्पर्यम्। आत्मनः स्वस्य दमने अहंकारेभ्यो निवर्तने शक्तिर्बलम्। खलैर्दुर्जनैः सह संसर्गस्य सङ्गस्य मुक्तिस्त्यागः। एते नव निर्मलाः परिशुद्धा गुणा येषु पुरुषेषु वसन्ति तिष्ठन्ति तेभ्यो महद्भ्यो (नरेभ्यो) नमः। एवंविधगुणविशिष्टाः सर्वजनवन्द्या इत्यर्थः॥ [शार्दूलविक्रीडितम्]

१) ना१.३-५. रा. ते. अ२.३. °संगतौ।—३) ना५. म. चक्रिणि (शूलिनि)। तु. सु. ना१.२. म२. खले; ना३. अ३.४. खलेषु।—४) तु. ना१. ह्येते येषु वसन्ति; सु. ह्येते यत्र वसन्ति; म. येष्वेते निवसन्ति। रा (टीपा). तैरेव भूर्भूषिता; म२. तेष्वेव लोकस्थितिः (तेभ्यो महद्भ्यो नमः)। सु. ना२. म१. ३-५. नरेभ्यो (महद्भ्यो)॥

भ. ६०३१ (२७७३); सप्तरत्ने १ (हे. ५); काव्यकल्प°; काव्यस°; सुभाष. १५९ (३०९); प्रसङ्गाभ° ८। सु. २९४४। सुभा. पृ० ५३.२५९। सुर. पृ० १८.७१ (भर्तृ°)। महानाटके ३.३७॥

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरतिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम्॥ ५२॥

विपदीति॥ विपदि आपदि सत्यां धैर्यं धीरत्वम्। अथ अनन्तरं अभ्युदये संपदि सत्यां क्षमा। सदसि सभायां वाग्विषये पटुता पेशलत्वम्। युधि समरे विक्रमः अतिशक्तिता। यशसि कीर्तौ अभिरतिः प्रीतिः। श्रुतौ शास्त्रादिश्रवणे व्यसनमास्था। इदं षड्विधं महात्मनां महतां प्रकृतिसिद्धं स्वभावसिद्धं हि॥ [द्रुतविलम्बितम्]

३) तु. सु१. ना२. चाभिरुचिर्व्य°॥

भ. ६१४७ (२८२५); हितोपदेशे १.२८ (३२); सुभाष. ६१; संस्कृतपाठ° ६१। शा. २०९ (भर्तृ°)। सु. २६७ (मेण्ढकस्य)। सूमु. ६.२३ (भर्तृमेण्ठस्य)। सुभा. पृ० ५०.१८८ (भर्तृ°)। सुर. पृ० १७.६२ (भर्तृ°)। सूहा. १६८.३० (भर्तृ°)। सुभाषितार्णवे २४.९७॥

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम्।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयो-
र्विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम्॥ ५३॥

कर इति ॥ करे हस्ते श्लाघ्यः प्रशस्तस्त्यागो वितरणम् । शिरसि मूर्ध्नि गुरोः पित्रादेः पादयोश्चरणयोः प्रणयिता प्रेमा । मुखे वदने सत्या तथ्या वाणी वाक् । भुजयोर्बाह्वोर्विजयि जयशीलं अतुलमनुपमं वीर्यं बलम् । हृदि हृदये स्वच्छा निर्मला वृत्तिर्वर्तनम् । श्रवणयोः श्रोत्रयोरधिगतमाकर्णितं श्रुतं शास्त्रं च । इतीदं प्रकृतिमहतां स्वभावत एवोदाराणामैश्वर्येण विभवेन विनापि मण्डनमलंकारः । ऐश्वर्यवतां तु कटककुण्डलादि विभूषणम् ॥ [ शिखरिणी ]

१) ना१. श्लाघस्त्यागः । ना५. °प्रवणता; ग्र१. म२.३ °प्रणतिता; ग्र४. °प्रणमनं ( इत्यपि ); म४.५. °प्रणमता ( °प्रणयिता ) । —२) तु२. विजय-; ना१. जयति ( विजयि ) । —३) सु१. ना२. स्वस्था ( स्वच्छा ) ॥

भ. १५४३ ( १०१ ); सुभाष. ५६ ( ३१५ ) । सुभा. पृ० ५२.२४० । सुर. पृ० १८. ७२ (भर्तृ०) ॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यं सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ ५४ ॥

प्राणघातादिति ॥ प्राणा असवः तेषामाघातात् प्राणिवधादित्यर्थः । निवृत्तिर्विमुखता । परेषामन्येषां धनस्य वित्तस्य हरणे चौर्यादिना बलात्कारेण वा ग्रहणे संयमो निवृत्तिः । सत्यं यथार्थं वाक्यं वचनम् । काले ग्रहणादिसमये शक्त्या स्वसामर्थ्यानुसारेण प्रदानं प्रकृष्टं वितरणम् । दानस्य प्रकर्षो नाम सात्त्विकता । उक्तं च भगवता ।

'दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्' ॥ इति ॥

स्वयं च वक्ष्यति धर्मस्य निर्व्याजतेति । परेषामन्येषां युवतिजनस्य तरुणीजनस्य कथासु वार्तासु मूकभावो मौनम् । तृष्णास्रोतसः स्पृहाप्रवाहस्य विभङ्गः आमर्दनम् । गुरुषु पित्रादिषु विनयः प्रश्रयः । सर्वेषु भूतेषु प्राणिषु अनुकम्पा दया । सर्वेषु शास्त्रेषु स्मृत्यादिषु अनुपहतविधिः अनपोहितविधानम् । एष श्रेयसां पन्था मार्गः । सामान्यः सर्वसाधारणः ॥ [ स्रग्धरा ]

१) ते. म१–३. प्राण्याघातान्नि°; म४. प्राणाघातानि° । ते१. संयतं ( संयम ) । म१.२.४. वाचि सत्यं ( सत्यवाक्यं ) । —२) ते२. सत्या ( शक्त्या ) । —३) तु१. सु.१.२.३(टीपा.) °शान्तोर्मिभङ्गो; म२. °स्रोतोव°; म४. °स्रोतोनि°; म५. °स्रोतोति° । —४) ना३–५. ग्र२.३. सामान्यः; ग्र१. म१.३.४. प्रामाण्यं । तु. सु. ना२. °हतमतिः; म४. °हतगतिः ॥

भ. ४३१० ( १८९१ ) । सोमदेवस्य यशस्तिलकचम्प्वां (का० ७०.२; पृ० ९९; वररुचेः । टी. वररुचिः=कात्यायनः ) । सुर. पृ० ९९.२ । सुभा. पृ० १८०.१०५६ । सूहा. ७.१९ (भर्तृ°) । सुभाषितार्णवे २४.८९ ॥

संपत्सु महतां चित्तं भवत्युत्पलकोमलम् ।
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ ५५ ॥

संपत्स्विति ॥ महतामुदाराणां चित्तं चेतः संपत्सु सतीषु उत्पलकोमलं कुवलयसुकुमारं भवति । विनयेन नम्रं भवतीत्यर्थः । आपत्सु विपत्तिषु महच्छैलस्याद्रेः शिलानां दृषदां संघातश्चय इव कर्कशं कठिनं भवति । आपद्दुःखसहनं भवतीत्यर्थः ॥ [ अनुष्टुप् ]

२) [ तु१. अत्यशुद्धं ]. सु. रा. ते१. ग्र५. भवेदुत्पलकोमलम् । —३) ग्र२. तु ( च ) ॥

भ. ६८७६ (३१८८); सुभाष्. ३०६ । सु. २०० (भर्तृ°) । सुर. पृ० १८.७३ (प्रसन्नरत्नावल्यां ) । सुभा. पृ० ४५.२७ । सूहा. १६८.९ ॥

प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं
त्वसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः ।
विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ५६ ॥

प्रियेति ॥ न्याय्या न्यायादनपेता वृत्तिर्वर्तनं प्रिया अभीप्सिता । मलिनमविमलं कर्म असुभङ्गे प्राणनाशेपि असुकरं दुष्करम् । तु शब्दोऽवधारणे । असन्तोऽसज्जनाः नाभ्यर्थ्या अभ्यर्थनीया न भवन्ति । सुहृत् सोऽपि कृशधनः क्षीणवित्तः न याच्यो नाभ्यर्थनीयः । विपद्यापदि उच्चैरुन्नतं स्थैर्यं स्थिरता । महतां महापुरुषाणां पदं स्थानमनुविधेयमनुसरणीयम् । इदमसिधाराव्रतं खड्गाग्रनियमः । 'नियमो व्रतमस्त्री' इत्यमरः । असिधारायामेव संचरामीत्येवंरूपं व्रतं यथा विषमं दुष्करं तथैवेदमपि प्रियेत्यादिपदत्रयेणोक्तं व्रतं सतां सत्पुरुषाणां केन देशिकेनोद्दिष्टमिति प्रश्नः । तस्योत्तरमप्येतदेव । केन वेधसोपदिष्टमित्यर्थः । 'मारुते वेधसि ब्रध्ने पुंसिकः' इत्यमरः ॥ [ शिखरिणी ]

१) सु१. न्याया; ना५. वन्या । ना२. वृत्तेर् । म१. ३-५. °भङ्गेष्वसुकरं । —२) सु. ना२. ह्यसन्तो; ना१. क्वसन्तो । ग्र२. न ह्यर्थ्याः; म३. ऽसामर्थ्याः । सु. सकृदपि । ग्र४. वाच्यः; म५. याच्ञः । ना१. कृतधनः । —३) तु१. स्थेयं; रा. ग्र१.५. म३. धैर्यं ॥

भ. ४३५४ (१९२२); सुभाष्. ३०४ । सु. २८० (जयादित्यस्य) । सुभा. पृ० ५२. २४८ (जयादित्यस्य) । सुर. पृ० १४.२९ (भर्तृ°) । सक. ५. ३५.४ (पृ० ३०१; धर्मकीर्तेः) ॥

*प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ५७ ॥

प्रदानमिति ॥ प्रदानं परस्मै द्रव्यवितरणं प्रच्छन्नं निगूढम् । गृहं गेहमुपगते प्राप्ते आगते विषये संभ्रमविधिः त्वरया करणम् । आसनं पादोदकमित्यादि प्रियमिष्टं कृत्वा विधाय मौनमविकत्थनम् । उपकृतेरन्येन कृतस्योपकारस्य सदसि सभायां कथनं प्रकटीकरणं चापि । लक्ष्म्या संपदा हेतुना अनुत्सेको मदराहित्यम् । परेषामन्येषां कथा वृत्तान्ता निरभिभवसाराः दूषणराहित्येनोत्कृष्टाः इतीदं विषमं दुश्चरं असिधाराव्रतं खड्गधारानियमः सतां सभ्यानां केनोद्दिष्टमुपदिष्टम् । न केनापि । किंतु स्वभाव एवेत्यर्थः ॥ [ शिखरिणी ]

[ तु. कोशे नास्ति । ना१. कोशे द्वितीयतृतीयचरणौ व्यत्यस्तौ ] १) सु१. गृहमपगते । —२) ना५. चाभ्युपगतेः; ग्र१. म३. नाप्युपकृतेः । —३) सु. अनुच्छेको; ना१. निरुत्सेको; ग्र१. म२.३. अनुद्वेगो । सु. ना२.५. ते१. ग्र२.३. लक्ष्म्या । ना१.३.४. म२. अनभिभवगन्धाः; ग्र१.४. म१.३. अनभिभवसाराः; ग्र३. निरभिभवसारा । ग्र३. परकथा । —४) ना१.३.४. श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं कथयति (ना३. °सि) ॥

भ. ४२५३ (१८५९)। कुवलयानन्दे १४० । सु. २८१ । सुर. पृ० १५.४० (पृ० २१.१०२; सभातरङ्गे)। सुभा. पृ० ५२.२४९ । सूहा. १६८.३९ ॥

संतप्तायसि संस्थितस्य पयसो नामापि न श्रूयते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं दृश्यते ।
अन्तःसागरशुक्तिकुक्षिपतितं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमजुषामेवंविधा वृत्तयः ॥ ५८ ॥

संतप्तेति ॥ अग्नौ सम्यक्तप्ते तापं गमिते अयसि लोहे संस्थितस्य सम्यक्स्थानं कृतवतः पयसो जलस्य नाम अभिधानमपि न श्रूयते नाकर्ण्यते । पयोऽत्यर्थं विनश्यतीत्यर्थः । तदेव पयो नलिनीपत्रे पद्मिनीपलाशे स्थितं मुक्ताकारतया मौक्तिकाकृतिभावेन दृश्यते विलोक्यते । मुक्ताफलमिव भवतीत्यर्थः । अन्तःसागरे समुद्रमध्ये शुक्तिकुक्षौ मुक्तास्फोटजठरे पतितं प्रविष्टं तदेव पयो मौक्तिकं जायते मुक्ताफलमेव भवति । प्रायेण भूम्ना अधममध्यमोत्तमजुषां निकृष्टमध्यमोत्कृष्टसेविनां वृत्तयो वर्तनानि एवंविधा इत्थंप्रकारा भवन्ति । अधममध्यमोत्तमसेविनां फलान्यधममध्यमोत्तमानि भवन्तीत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

२) म५. बिसिनी° (नलिनी°)। तु. सु. ना२. राजते; ग्र४. जायते; म३–५. लक्ष्यते (दृश्यते)। —३) तु. सु. ना२. स्वात्यां; ग्र४. स्वात्यां (इत्यपि)। तु. सु. °संपुटगतं; ना१.२.५. रा. ते. ग्र३ (मू).४.५. म४. °मध्यपतितं। तु. सु. तज्जायते मौक्तिकं। —४) तु. °त्तमगुणाः संसर्गतो देहिनां ॥

भ. ६७८१ (३१५२); पञ्चतन्त्रे १.२८० (२५०); सुभाष. १०५। शा. ३३० (विष्णुशर्मणः)। सुभा. पृ० ८७.३३। सुभाषितार्णवे २४.१७ ॥

*यः प्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम्।
तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ५९ ॥

य इति ॥ यः सुचरितैः सच्चरित्रैः शुश्रूषाश्रवणादिभिः पितरं जनकं प्रीणाति तर्पयति। स पुत्रः स एव सुतः। यस्तु पितुराज्ञामुल्लङ्घयति शुश्रूषां च न करोति स पुत्र एव न भवति। यद्भर्तुः पत्युर्हितमेवेच्छति वाञ्छति तत्कलत्रं सैव पत्नी नान्या। आपदि विपदि सुखे शर्मणि च समक्रियं तुल्यचेष्टं भवति तदेव मित्रं सखा नान्यत्। जगति लोके एतत्त्रयं पुत्रकलत्रमित्ररूपं त्रयं त्रितयं पुण्यकृतः सुकृतिनः लभन्ते। एवंविधपुत्रकलत्रमित्राणि पापीयसां न सन्तीत्यर्थः ॥
[वसन्ततिलका]

[तु. कोशे. नास्ति] १) सु.ना२–४.ग्र२.३. प्रीणाति यः; ना१. यः प्रीतयेत्। ना१. स्वचरितैः। —२) ना१. सुखम् (हितम्)। —३) ते१. सुखेऽपि। ग्र१.म३. समप्रियं। ग्र३ (मू). तद् (यद्) ॥

म. ४३६३ (१९२६); सुभाष. ३०६। सु. २९२९। सुभा. पृ० ५०. १९२। सुर. पृ० १८.७४ (सभातरङ्गे)। सभातरङ्गे ३६.५। सूहा. १६३.१६० (वल्लभस्य)। सुभाषितार्णवे ३६.११ ॥

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः
स्वार्थान्संपादयन्तो विततपृथुतरारम्भयत्नाः परार्थे।
क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्जनान्दुःखयन्तः
सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः ॥६०॥

नम्रत्वेनेति ॥ नम्रत्वेन नम्र(अवनत)भावेन उन्नमन्तः नम्राः सर्वेऽपि विनीताः प्रशंसन्ति[?]। परेषामन्येषां गुणकथनैः विद्याविनयकुलाचारादिवर्णनैः स्वानात्मीयान्गुणान्ख्यापयन्तः प्रथयन्तः। ये परेषामर्थे प्रयोजने वितता विस्तृताः पृथुतरा अत्यधिका आरम्भेषु प्रारम्भेषु {यत्नाः येषां ते तथोक्ताः} (यत्नाः प्रयत्नाः)

सन्तः स्वार्थान्स्वकीयप्रयोजनानि संपादयन्तः । आक्षेपादविक्षेपाद्रूक्षैः परुषैरक्षरैर्वर्णैर्मुखराणि शब्दायमानानि मुखानि वदनानि येषां तान् । दुर्जनान्दुष्टान् । क्षान्त्या क्षमयैव दुःखयन्तः । क्लिश्यन्तः [ क्लेशयन्तः ] साश्चर्यचर्याः सविस्मयचरित्राः । बहुमताः संभाविताः । एवंविधाः सन्तः सत्पुरुषा जगति लोके कस्य नाभ्यर्चनीयाः न पूजनीयाः । सर्वेषामपि पूजनीया इत्यर्थः ॥ [ स्रग्धरा ]

१) म४.५. °गुणनुतिभिः । सु२. स्वागुणान् । सु(टी) वाचयन्तः (ख्यापयन्तः) । —२) प्र१. म. पुष्णन्तः स्वीयमर्थं सततकृतमहा(म४.५ °कृतसमा)रम्भ° । ना२. वितथ°; प्र४. विविध° (वितत°) । तु. सु. °बहुतरा°; ग्र२ (मू). °परधना° (°पृथुतरा°) । —३) म३–५. °परुष° (°मुखर°) । तु. सु३. ना२. दुर्मुखान् । तु. सु. ना२. दूषयन्तः; ना५. दूरयन्तः; म४.५. पीडयन्तः । —४) प्र२. चाश्चर्य°; प्र४. त्वाश्चर्य° । तु२. °वर्या (°चर्या) । म४.५. सदसि (जगति) । तु. बहुमतो । ते२. प्र१. म२.३. कस्य नाभ्यर्थनीयाः; म४. केस्य न स्युर्नमस्याः; म५. कस्य न स्युर्नमस्याः ॥

भ. ३३७९ (१४३४); प्रसङ्गाभ°. ११; सुभाष. ३०८ । सु. २८६ । सुभा. पृ० ५३. २७७ । सुर. पृ० १८.७५ ॥

## नीतिशतके षष्ठपद्धतौ अधिकश्लोकौ ।

सुजनं कुजनं मन्ये महान्वंशसमुद्भवः ।
स्वपरिभ्रमणेनैव परतापं व्यपोहति ॥ १ ॥

[ तु. नीति. ५८ ] [ भ. ७०९८ (५२५७); प्रसङ्गाभ.° ३ । सुभा. पृ० ४५.१८ । सुर. पृ० १२.१६ ( शार्ङ्ग° ) । सभातरङ्गे १.२८ ]

परदारपरद्रव्यपरद्रोहपराङ्मुखः ।
गङ्गा ब्रूते कदागत्य मामयं पावयिष्यति ॥ २ ॥

[ तु. नीति. ६० ] [ भ. ३९२२ (१६९७); सुभाष. २१७ । शा. ६६७ । चन्द्रालोकटीकायां ५.१०३ । सुभाषितार्णवे २७.४८ ]

## ॥ परोपकारपद्धतिः ॥

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥ ६१ ॥

भवन्तीति ॥ तरवो वृक्षाः फलानां प्रसवानां उद्गमैरुत्पत्तिभिर्नम्रा अवनता भवन्ति । घना मेघा नवाम्बुभिः नूतनोदकैर्दूरमधो यथा तथा विलम्बिनो नम्रा भवन्ति । सत्पुरुषाः सज्जनाः समृद्धिभिः संपत्तिभिरनुद्धता अनौद्धत्या विनीता भवन्ति । एषोऽयं परोपकारिणां स्वभावो निसर्गः । इयं प्रतिवस्तूपमा । यथोक्तं

दण्डिना ॥ 'वस्तु किंचिदुपन्यस्य न्यसनात्तत्सधर्मणः । साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा मते'ति । यथा परोपकारिणस्तरवो घनाश्च महत्यामपि संपदि सत्यामवनता भवन्ति । एवमेव सत्पुरुषा भवन्तीत्यर्थः ॥ [ वंशस्थम् ]

१) म४. फलोदकैर् ('फलोदयैर्' इत्यपि) । —२) तु. ना२. भूमि°; सु१. मूल्य°; सु२. भूम्य°; ना१. म५. भूरि° (दूर°) । —४) तु२. एषो हि (एवैष) ॥

भ. ४५५६ (२०२९); शाकुन्तले १०९ (५.१३) । सुभा. पृ० ७५.११ । सुर. पृ०१०३.४ (सभातरङ्गे)। सक. ५.३९.३ (पृ० ३०३, कालिदासस्य) । सूहा. ३१.३३ (कालिदासस्य) ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणाकुलानां परोपकारेण न चन्दनेन ॥ ६२ ॥

श्रोत्रमिति ॥ श्रोत्रं शब्दग्रहः श्रुतेन शास्त्रादिश्रवणेनैव विभाति शोभते । कुण्डलेन कर्णाभरणेन न । पाणिर्हस्तो दानेन त्यागेनैव शोभते कङ्कणेन कटकेन च न । करुणा[कुलानां] (पराणां) कृपालूनां कृपापरिपूर्णानां कायो देहः परेषामुपकारेण अन्येषां हिताचरणेनैव शोभते । चन्दनेन मलयजेन न । परोपकारशून्यानां मलयजः शोभायै न भवति । मलयजशून्यानामपि परोपकारः शोभायै भवत्येव । दानहीनानां कङ्कणः शोभायै न भवति । कङ्कणविहीनानामपि दानं शोभायै भवत्येव । श्रुतविहीनानां कुण्डलं शोभायै न भवति । कुण्डलहीनानां श्रुतं शोभायै भवतीत्यर्थः ॥ [ उपजाति ]

[ ना१. कोशे प्रथमद्वितीयचरणौ मिथो व्यत्यस्तौ ] —२) सु२. न तु कुण्डलेन; म१. न च कङ्कणेन । —३)तु. सु. आभाति । तु. सु१.३. म२.३.५. करुणापराणां (म३. °णालयानां इत्यपि); ना१.३–५. म४. °णाकराणां; म१. °कराणां (इत्यपि) । —४) म१. म२.३. मण्डनेन; म४.५. भूषणेन (चन्दनेन) ॥

भ. ६८५६ (३०५२); प्रसङ्गाभ° ११; सुभाष. १०० । सुर. पृ० १०३.५ (हितोप°) । सुभा. पृ० ७५.१२ । अलंकारकौस्तुभे (का० ६६. पृ० ३६०) । चाणक्यनीतिदर्पणे १७.१२ ॥

पद्माकरं दिनकरो विकचं करोति
चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते विहिताभियोगाः ॥ ६३ ॥

पद्माकरमिति ॥ दिनकरो विकर्तनः पद्माकरं तटाकं विकचं व्याकोचकमलं करोति । स्वयमेव । न तु पद्माकरेणाभ्यर्थितः । चन्द्रोऽपि हिमांशुः कैरवाणां कुमुदानां चक्रवालं मण्डलं विकासयति प्रबोधयति । स्वयमेव । न तु कैरवचक्रेणाभ्यर्थितः । जलधरो धाराधरोऽपि जलमुदकं ददाति । स्वयमेव । न तु लोकैरभ्यर्थितः ।

सन्तः सत्पुरुषाः स्वयमात्मनैव परहिते परोपकारे विहिताभियोगाः कृतोद्योगाः । न तु परैरभ्यर्थिताः ॥ [ वसन्ततिलका ]

१) ते१. पद्माकरो दिनकरं । तु. सु. विकची- । —२) तु१. सु. विकाशयति; म२. ऽपि काम° । —३) तु. नाभ्यर्थितं । —४) तु. सु. °हितेषु कृताभियोगाः ( तु. °गः ); ना२. °हितेषु कृतप्रयत्नाः । ते२. विहितानुयोगाः; प्र१. म३. विहितोपयोगाः; म१. विहितप्रयत्नाः; म४.५. विहिताभिलाषाः ॥

भ. ३९०९ (१६९२) । सुर. पृ० १०३.६ ( सभातरङ्गे ) । सुभा. पृ० ७५.१३ ॥

*एते सत्पुरुषाः परार्थघटकाः स्वार्थान्परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥६४॥

एत इति ॥ स्वार्थमात्मप्रयोजनं परित्यज्य विहाय परार्थघटकाः परप्रयोजनपोषकाः । परार्थघटका इत्यत्र [ शेष ] षष्ठ्याः समासः [ न ] स कृद्योगषष्ठ्याः । तस्याः कर्तरि चेति प्रतिषेधात् । एते सत्पुरुषाः सज्जनाः । ये तु स्वार्थानामात्मप्रयोजनानामविरोधेन परार्थमुद्यमभृतः उद्योगधारिणस्ते सामान्याः । ये स्वार्थाय परेषां हितमिष्टं कार्यं निघ्नन्ति नाशयन्ति तेऽमी मानुषराक्षसाः मनुष्यवेषाः क्रव्यादाः । ये तु निरर्थकं निष्प्रयोजनमेव परेषां हितमिष्टं कार्यं निघ्नन्ति नाशयन्ति ते के न जानीमहे न विद्मः । उत्तमकोटौ न प्रविशन्ति, न मध्यमकोटौ नाप्यधमकोटौ तस्मात्तेषां नाम न विद्म इत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

[ तु. कोशे नास्तीदं पद्यम् ] १) सु. एके ( एते ) । ना२. ते २. प्र२. (मू). स्वार्थं । ना१. ते ( ये ) । —२) ना२. प्र२(मू). परार्थ उद्यम° । म४.५. स्वार्थानुरोधेन । —३) ना५. ते वै ( तेऽमी ) । म४. परधनं ( परहितं ) । —४) ना२. ते ( ये ) । सु. ना. रा. ते२. प्र३(मू).४. घ्नन्ति; ते१. ते हन्ति ( निघ्नन्ति ) । म३.५. -रनर्थकं ॥

भ. १४६० (५७६); शतकावलौ ८४; संस्कृतपाठ° पृ० ४७; सुभाष्. ३०९ । शा. ४६५ (भर्तृ°) । सूसु. ८.३३ । सक. ५.६८.३ ( पृ० ३२२, भर्तृ° ) ॥

पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान्प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ६५ ॥

पापादिति ॥ सन्तो विद्वांसः इदमेतत् सन्मित्रस्य सत्सख्युर्लक्षणं चिह्नं वदन्ति कथयन्ति । किं तदित्याह । पापाद्दुरितान्निवारयति निवर्तयति । हिताय श्रेयसे योजयते तद्युक्तं करोति । गुह्यमवाच्यं निगूहति आच्छादयति । गुणान् श्रुतादीन्प्रकटीकरोति प्रख्यापयति । आपद्गतमापन्नजनं न (वि) जहाति न त्यजति । काले सख्युः अकिंचनावस्थायां ददाति द्रविणादिकं वितरति । एवंविधगुणविशिष्टो यः स एव सन्मित्रमित्यर्थः ॥ [वसन्ततिलका]

१) ना१. पापं । ग्र१. यो यतते (इत्यपि) । म२. हितानि; म४. हितं ये । —२) तु१. गुह्यं च गुह्यति; तु२. ना२–५. गुह्यं च गूहति; सु. ना१. ग्र१. म४.५. गुह्यानि गूहति; ग्र३ (मू). गुह्यं च गूहयति; म३. गुह्यान्निगूहति । —३) ना२. च निजहाति; ना३.४. ग्र२.३. न विजहाति (च न जहाति) । सु२.३. तदाति–(ददाति) ॥

भ. ४०६० (१७७१); कवितामृत° २५; प्रसङ्गाभ° १३; सुभाष. ३०७ । सुभा. पृ० ८८.१८ ॥

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरोत्तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ ६६ ॥

क्षीरेणेति । क्षीरेण दुग्धेन आत्मगते स्वनिष्ठे उदके जले पुरा प्रथमं अखिलाः सर्वे गुणाः रूपरसगन्धादयः दत्ताः स्थापिताः । (नन्वित्यामन्त्रणे) । अनन्तरं वह्नौ निहितस्य पच्यमानस्य च क्षीरस्य तापं पावकव्यथां चावेक्ष्य दृष्ट्वा तेन पयसा जलेन आत्मा स्वयं कृशानौ हुतः क्षिप्तः । क्षीरे तप्यमाने क्षीरमिलितं जलं क्षीयते । तत्क्षीरं तु मित्रस्य जलस्यापदं दृष्ट्वा पावकं गन्तुं वह्निं प्रवेष्टुं उन्मनः उद्गतचित्तमभवत् । तेन जलेन प्रक्षिप्तेन शाम्यति वह्नितापो निवर्तते । तद्युक्तं स्थाने । सतां सज्जनानां मैत्री [पुनः] (मैत्रीगुणः सख्यधर्मः) ईदृशी (शः) [एवंविधा] (धः) । [शार्दूलविक्रीडितम्]

१) ना२. °दको ननु गुणा; ना३.४. ग्र२.३.५. °दके ननु गुणा । [ते१. कोशे 'गुणा' 'पुरा' शब्दौ मिथो व्यत्यस्तौ] । ना१. ते२. ग्र५. निजास्तेखिलाः । ग्र१. म१–३. स्वेखिलाः; म४.५. येखिलाः । —२) तु१. सु. ना२.४. ते. ग्र३.५. म५. क्षीरे तापम्; ना३. क्षारे तापम्; म४. क्षीरात्तापम् । तु. अवीक्ष्य; ते२. अपेक्ष्य । ना१. ग्र२.३. म४.५. ह्यात्मा । ना२. हतः (हुतः) । —३) ना२. ग्र१. म३–५. उन्मनास् (ग्र१. उन्मुखास् इत्यपि); ग्र४. उन्मुखं (इत्यपि) । ग्र२ (मू). नु (तु) । —४) तु१. सु. युक्तं तच्च; तु२. मुक्तं तच्च; म३. यत्तं तेन । तु. ना२. °गुणास्त्वीदृशः; ना१. ग्र१.४. म३. °गुणास्त्वीदृशाः; ना३. पुनस्त्वीदृशः; ना४. ग्र२.३. °गुणस्त्वीदृशः; ग्र५. पुरा त्वीदृशी; म२. °गुणस्त्वीदृशी ॥

भ. २०२६ (७९०); सुभाष. ३०६ । सुभा. पृ० ८८.२० । सुर. पृ० ५५.११ (भर्तृ°) ॥

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनः शिखरिणां गणाः शेरते ।
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ६७ ॥

इत इति ॥ सिन्धोर्वपुः समुद्रस्य शरीरं विततं विस्तृतं ऊर्जितं वृद्धिमत् भरसहं भारक्षमं च । अहो आश्चर्यम् । तदेवाह । इतः समुद्रस्य क्वचित्प्रदेशे केशवो विष्णुः स्वपिति शेते । इतः अन्यत्र प्रदेशे तदीयानां केशवसंबन्धिनाम् । तच्छब्दस्य 'त्यदादीनि च' इति वृद्धिसंज्ञायां वृद्धाच्छः । आयनादिसूत्रेण छस्य ईयादेशः । द्विषां वैरिणां दैत्यानां कुलं समूहः । इतः अन्यत्र प्रदेशे । शरणार्थिनः शरणं रक्षितारं अर्थयन्ते ये ते तथाविधाः । शरणं निवासमर्थयन्ते इति वा । 'शरणं गृहरक्षित्रो'रित्यमरः । शिखरिणां शैलानां गणाः समूहाः इतो निवसन्ति । पुरा शैलानां गरुतः सन्ति । शक्रः कुलिशेन तान्गरुत आच्छिनत् । ततः पक्षच्छिदः शक्राद्भीताः शिखरिणः सिन्धुं प्राविश्याच्छिन्नपक्षा एव सुखेन निवसन्तीति प्रसिद्धिः । इतः अन्यत्रापि समस्तैः सकलैः संवर्तकैः ज्वालाभिः सह वडवानल और्वानलस्तिष्ठति । अन्यापदेशोऽयम् । यथा समुद्रः सर्वेषामावासदानादिना भरसहो भवति एवमेव सन्तोऽपीत्यर्थः । इतः इति सप्तम्यर्थे सार्वविभक्तिकस्तसिल् ॥ [ पृथ्वी ]

१) ना२. स्वपन्ति; प्र३. स्वपति । —२) ना१.४.५. रा. शरणार्थिनां । तु१. शिखरिपत्रिणः; ना२. शिखरणां गणाः; प्र४. शिखरिणः परा–। —३) तु१. इतश्च । प्र४. सकलभूत° (सह समस्त°)। प्र१. म३. °कैवर्तकैः; प्र४. °संवर्तकस् । —४) प्र४. त्वहो । प्र४. म५. परसहं; म४. वरसहं ॥

भ. १०९५ (४११); सुभाष. ३०५ । शा. १०९३ (भर्तृ°) । सु. ८८६ । सूहा. १६८. ४१ । सुभा. पृ० २१६.२५ (भर्तृ°) । सुर. पृ० १९५.९ (भर्तृ°) । सरस्वतीकण्ठाभरणटीकायां ४.४९ । अलंकारमहोदधौ ८१८ ॥

जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।
संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥ ६८ ॥

जात इति ॥ येन कूर्मेण पृथवेऽधिकाय भुवनानां लोकानां भराय भारं वोढुं । 'क्रियार्थोपपदस्य च कर्मणि स्थानिन' इति चतुर्थी । पृष्ठं तनुचरमभागः । अर्पितं स्थापितम् । स एको मुख्यः । 'एके मुख्यान्यकेवला' इत्यमरः । कूर्मः कमठो जात उत्पन्नः । तस्य जन्म सार्थकमित्यर्थः । यत्र यस्मिन्ध्रुवे नियमितं वायुपाशैर्बद्धम् । तेजस्विनां ग्रहनक्षत्रताराणाम् । 'अस्मायामेधास्रजो विनि'रिति विनिः । मत्वर्थश्च । चक्रं समूहो भ्रमति भ्राम्यति । तस्य ध्रुवस्यौत्तानपादेर्जन्म जननं श्लाघ्यम् । स्तोत-

व्यमित्यर्थः। अपरे आभ्यामन्ये परेषामन्येषां हितकरणे उपकारविधाने उपरिष्टादूर्ध्वमधोऽधस्ताच्च न भवन्ति। संजाता उत्पन्ना व्यर्था निरर्थकाः पक्षा गरुतः स्वमतानि च येषां ते ब्रह्माण्डमेव उदुम्बरमुदुम्बरफलं तस्यान्तर्मध्ये। मशकवन्मशका इव जातनष्टा उत्पन्नमृताः। जन्तवः प्राणिनः। येषां जन्म परोपकरणाय भवति तेषां जन्मसाफल्यमस्ति। ये तु परोपकारशून्यास्ते तूत्पन्नमृता जन्तव इत्यर्थः। परहितकरणविहीनानां जन्मनो मरणस्य च विशेषभावात्॥ [ स्रग्धरा ]

१) म१. °र्पितो येन पृष्ठः। —२) सु१. भवति (भ्रमति)। सु२. ग्र४. येन (यत्र)। —३) तु. संजाता। ग्र१. म३. परहितकरणं। सु. नोपरिष्टान्न चाधो; ना२. नोपरिष्टोदधवो वा; म३. नोपरिष्टान्न याधो; म४.५. नोपदिष्टा न पन्थाः। —४) तु. °ण्डोदुम्बरान्ते; ग्र२ (मू). °ण्डौदुम्बरान्तर्। तु. सु. ना२. प्राणिनः (जन्तवः)। तु संचरन्ति (जातनष्टाः)॥

भ. २३७७ (९५६)। शा. ४१५४ (भर्तृ°)। सु. १०३३। सुभा. पृ० ९८.११॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम्।
मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितम्॥ ६९॥

तृष्णामिति॥ तृष्णां विषयेष्वभिलाषं छिन्धि लुनीहि। क्षमां सहिष्णुतां भज अवलम्बस्व। मदं दर्पं जहि [हि?] उज्झ। उक्तं च।

"विद्यामदो धनमदस्तथैवाभिजनान्मदः।
एते मदा मदान्धाना(दुर्जनाना)मेत एव सतां दमाः॥
माद्यन्ति विद्यया केचिद्धनेनान्धन्ति चापरे।
अन्ये तु सुभगंमन्याः (अन्ये माद्यन्ति सुभगात्) परे पण्डितमानिन इति॥"

पापे दुरिते रतिमभिलाषं मा कृथा मा विदधाः। कृञो लुङि रूपं 'न माङ्योग' इत्यडभावः। सत्यं यथार्थमेव ब्रूहि वद। साधूनां सज्जनानां पदवीं पन्थानमनुयाहि अनुसर। विद्वज्जनं सुधीलोकं सेवस्व शुश्रूषस्व। मान्यान्मानार्हान् (मान्यं मानार्हं) मानय पूजय। विद्विषः परिपन्थिनोऽप्यनुनय (प्रशमय) आश्वासय। प्रश्रयं विनयं प्रख्यापय प्रथय। कीर्तिं यशः पालय रक्ष। दुःखिते व्यथिते (अधीरे) दयां कृपां कुरु चर। एतदुक्तं द्वादशविधं सतां सज्जनानां चेष्टितं कृत्यम्॥ [ शार्दूलविक्रीडितम् ]

१) ना२. कृतिं; म४.५. मतिं ( रतिं )। —२) ग्र१. म२.३. साधुचरितं। तु. सु. ना१-४. ग्र३.४. विद्वज्जनान्। —३) ते२. वाक्यान्; ग्र२.३. म४.५. मान्यं। ग्र४. °प्यपनय। तु. सु३. ना१. ग्र५. म२.४.५. प्रच्छादय; सु१.२. प्रच्छादयन्। तु. सु. ना१. ते१. ग्र१.५. म२-५. स्वान्गुणान् ( प्रश्रयं )। —४) तु१. कीर्तिः। म१.२. लक्षणं; म४.५. भूषणं ( चेष्टितम् )॥

भ. २५९७ (१०५१)। सुभा. पृ० ५३.२७३। सुर. पृ० ३७.१ ( शार्ङ्ग° )॥

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ७० ॥

मनसीति ॥ मनसि चेतसि वचसि वाचि काये देहे च पुण्येनैव पीयूषेणामृतेन पूर्णा भरिताः त्रिभुवनं लोकत्रयमुपकारश्रेणिभिः सत्कारपरंपराभिः प्रीणयन्तस्तर्पयन्तः परेषामन्येषां गुणाः श्रुतशीलादयस्त एव परमाणवोऽत्यल्पाः तान्पर्वतीकृत्य गुरूकृत्य नित्यं सार्वकालं निजहृदि स्वचेतसि विकसन्तो हृष्यन्तः सन्तः सत्पुरुषाः कति सन्ति । विरला विद्यन्ते । न तु बहवः । ये मनोवाक्कायैः पुण्यमेव कुर्वन्ति न पापम् । ये परेषामुपकारमेव कुर्वन्ति नापकारम् । ये परेषामल्पानपि गुणान् बहु मन्यन्ते दोषांस्तु न कथयन्ति तादृशाः सज्जना जगति विरला इत्यर्थः ॥ [ मालिनी ]

२) तु. परहितम् (त्रिभुवनम्) । —४) सु३. विलसन्तः । ते१. ख्यापयन्तः (सन्ति सन्तः) ॥

भ. ४६९१ (२१०६); प्रसङ्गाभ° ९; सुभाष्. ३०४ । सुभा. पृ० ५१.२२१ । सुर. पृ० १८.७६ (सभातरङ्गे) । महानाटके ॥

## नीतिशतके सप्तमपद्धतौ अधिकश्लोकौ ।

किं कूर्मस्य भरव्यथा न वपुषि क्ष्मामुत्क्षिपन्नेष यः
किं वा नास्ति परिश्रमो दिनपतेरास्ते न वै निश्चलः ।
किं चाङ्गीकृतमुत्सृजन्स्वमनसा श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ १ ॥

[ना. नीति ७.११] [भ. १७३७ (६७२); शतकाव° ९२ । मुद्राराक्षसे २.१८ । सुभा. पृ० ५३.२६९]

सन्त्येवात्र वने वनेऽपि बहवो निम्बाः क्वचिच्चन्दनः
क्रोशन्ते प्रतिदिक्षु केवलमिमे काका वसन्ते कुहुः ।
पाषाणैः परिपूरिता वसुमती जात्यो मणिर्दुर्लभ-
स्तन्मन्ये खलसंकुलं जगदिदं कुत्रापि ते सज्जनाः ॥ २ ॥

[तु. नीति ७०.]

॥ धैर्यपद्धतिः ॥

रत्नैर्महाब्धेस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥ ७१ ॥

रत्नैरिति ॥ देवा अमरा महाब्धेर्महार्णवस्य रत्नैः स्वजातिश्रेष्ठैः सुधांशुप्रभृतिभिर्हेतुभिर्न तुतुषुः न संतुष्टाः निश्चितकार्याभावात् । भीमेन भयंकरेण विषेण कालकूटेन भीतिं साध्वसं च न भेजिरे न प्राप्ताः । सुधाममृतं विनान्तरेण विराममवसानं न प्रययुर्न जग्मुः । धीरा धैर्यवन्तो निश्चितादवधारितादर्थान्न विरमन्ति न निवर्तन्ते ॥ [ उपजाति ]

१) तु१. सु१.२. मंहार्घैस्; तु२. महार्थैस्; सु३. महार्हैस् । —२) ग्र४. भीमविशेष- । म२. भीतिः । —३) ना२. नैव ययुर्; ग्र३. (मू). संप्रययुर् । ना४. विकासं (विरामं) । —४) म१. न निश्चितार्था; म४.५. सुनिश्चितार्था ॥

भ. ५७०७ (२५८५) । सुभा. पृ० ७७.१० ॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्ननिहता विरमन्ति मध्याः ।
विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ ७२ ॥

प्रारभ्यत इति ॥ नीचैरधमैर्विघ्नभयेनान्तरायभीत्या न प्रारभ्यते यत्नो न क्रियते । कर्तव्यं प्रयोजनमिति शेषः । मध्यमाः [मध्याः] साधारणजनाः प्रारभ्योपक्रम्य । कर्तव्यं प्रयोजनमिति शेषः । विघ्ननिहताः प्रत्यूहपराभूताः सन्तः विरमन्ति तूष्णीं कुर्वन्ति (तिष्ठन्ति) । उत्तमगुणाः सज्जनाः विघ्नैरन्तरायैः पुनः पुनः मुहुर्मुहुरपि प्रतिहन्यमानाः प्रतिहताः सन्तः प्रारब्धं कर्तव्यं न परित्यजन्ति न विसृजन्ति । महान्तः प्रारब्धं कार्यं सर्वथा न त्यजन्तीत्यर्थः ॥ [ वसन्ततिलका ]

१) तु. नीचा (नीचैः) । —२) ते२. म२. आरभ्य । तु१. सु१. विघ्नविहिता; तु२. विघ्नपिहिता; सु२.३. ते. ग्र१. म१.२.४.५. विघ्नविहता; ना१. ग्र३. विघ्ननिहिता । —३) सु३. ना३–५. ग्र२.३.५. म४.५. विघ्नैः पुनः पुनरपि । ना२. प्रविहन्यमानाः; म४.५. प्रतिहन्यमानं । —४) तु१. प्रारभ्यम्; सु२. प्रालब्धम् । सु३. उत्तमजना । म३. परित्यजन्ते ।

भ. ४३४२ (१९१३) । दशरूपावलोके पृ० ६२ (भर्तृ०) । मुद्राराक्षसे २.१७ (४८) । पञ्चतन्त्रे ३.२५५ (१७७) । सु. ५४४ । सूहा. १६८.३२ ( मुद्राराक्षसे ) ॥

*लज्जां गुणौघजननीं जननीमिवार्या-
मत्यन्तशुद्धहृदयामनुवर्तमानाः ।
तेजस्विनः सुखमसूनपि संत्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ ७३ ॥

लज्जामिति ॥ गुणौघजननीं गुणसमूहोत्पादयित्रीं आर्यां पूजनीयां अत्यन्तशुद्धहृदयां अतिनिर्मलचित्तां लज्जां अकार्यनिवृत्तिं जननीं मातरमिव अनुवर्तमाना अनुसरन्तः सत्यव्रते यथार्थकथननियमे व्यसनिनोऽत्यन्तासक्ताः तेजस्विनः प्रभाववन्तः सुखमनायासेनैव असून्प्राणानपि संत्यजन्ति विमुञ्चन्ति । प्रतिज्ञां पुनः प्रतिश्रुतं तु न त्यजन्ति । सत्यव्रतव्यसनिनां प्रतिज्ञा प्राणेभ्योऽपि गरीयसीत्यर्थः ॥ [वसन्ततिलका]

[रा. ते१. कोशेषु नास्ति] १) ग्र५. वर्ज्यां (लज्जां) । म५. °जननीर्जननीम् । तु. सु. ना. ग्र४. इव स्वाम्; म५. इवार्यां (इवार्याम्) । —२) तु. सु. °हृदया अनु° । ना१. °वर्तमानाम् । —३) ग्र४. हि त्यजन्ति (संत्यजन्ति) । —४) तु. सत्यं व्रत° । ग्र३ (मू). °व्यसनिनान्न । ग्र१. परप्रतिज्ञाम्; ग्र५. पुनः प्रतीक्षाम्; म३–५. पुनः प्रतिज्ञाः ॥

भ. ५८२४ (२६५५); सुभाष. ३१६ । सुभा. पृ० ५०.१९६ । सुर. पृ० २४०.९५ (भर्तृ°)॥

क्वचिद्भूमौ शायी क्वचिदपि च पर्यङ्कशयनः
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः ।
क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥७४॥

क्वचिदिति ॥ कार्यं यत्किंचिदर्थयत इति कार्यार्थी । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । मनस्वी धृतिमान् दुःखं पीडां च न गणयति सुखं शर्म [च] न गणयति । सहत इत्यर्थः । किमित्याह । क्वचित्कुत्रचित् भूमौ धरण्यां[शायी] (शेते) संविशति । क्वचिदपि च पर्यङ्कस्तूलमयी शय्या शयनं यस्य स तादृशो भवति । क्वचिच्छाकाहारः हा[ह?]रितमेवाहारो यस्य तथाविधो भवति । क्वचिदपि च शाल्योदने अन्ने रुचिः प्रीतिर्यस्य तादृग्भवति । क्वचित्कन्थाधारी कन्थामाली भवति । क्वचिदपि च दिव्यान्यमानुषाण्यम्बराणि वस्त्राणि धारयतीति दिव्याम्बरधरो भवति । यत्किंचित्कार्यं साधयतः सुखदुःखविचारो यदि भवेत्तदा कार्यं न सिध्यतीत्यर्थः ॥ [शिखरिणी]

१) तु. सु. ना१.२. ग्र४.५. भूमौ शय्या; ना३.४. रा. ते१. पृथ्वीशय्यः; ना५. ग्र२.३. भूमौ शेते; ते२. पृथ्वी शय्या । ना२. रा. ते१. पर्यङ्कशयनं । —२) तु२. °च्छोकाहारः; ना१.२. ग्र१. म१–३. °च्छाकाहारी; ग्र३. °च्छाखाहारः । —३) तु. कन्थाधारः; ग्र३. म१–३. कन्धाधारी । ना१. °धनो (°धरो) । —४) तु२. गणयति न ॥

भ. १९८७ (७७२); शतकावली ८०; सुभाष. ३०५ । शा. ४०९८ ( भर्तृ° ) । सु. २९४० । सूसु. ७.१० । सूहा. १६८.४० । सुभा. पृ० ३६८.३९ (भर्तृ°) ॥

*निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ७५ ॥

{ निन्दन्त्विति ॥ नीतिनिपुणा नयविशारदा निन्दन्तु कथंचिद्दूषयन्तु वा, यदि अथ वा स्तुवन्तु भूषयन्तु वा । लक्ष्मीः संपत्समाविशतु प्राप्नोतु वा, उत यथेष्टं निरर्गलं गच्छतु वा । अद्यैवेदानीमेव मरणं निधनमस्तु वा, उत युगान्तरे कल्पान्तरे वास्तु । तथापि धीरा धैर्यशालिनो न्याय्यात् न्यायादनपेतात्पथो मार्गात्पदमेकपादविन्यासमात्रमपि न प्रविचलन्ति न भ्रश्यन्ति । तेषां न्यायमार्गापरित्याग एव परमार्थो न निन्दास्तुत्यादिरिति भावः ॥ [ वसन्ततिलका-रा० }

[ तु. सु. ग्र२.३.५. कोशेषु नास्ति ] २) ना२. लक्ष्मी समा° । म१.३.५. यथेच्छं ( यथेष्टम् ) । —४) म.३. न्यायात्पथः; म५. नार्यास्त्वतः । ग्र१. म१.२. प्रचलयन्ति ( प्रविचलन्ति ) । ग्र४. पदान्न ( पदं न ) ॥

भ. ३७२३ (१५८१); संस्कृतपाठ ६२; सुभाष. ६१ ( ३०३ ) । शा. २२५ ( भर्तृ° ) । सु. २७८ । सुर. पृ० ५०. २ ( प्रसङ्गरत्नावल्याम् ) । सुभा. पृ० ७८.११ (भर्तृ°) । अलंकाररत्नाकरे ४७१ । सूहा. २८.१२ (भर्तृ°) । सभातरङ्गे २.१ (भर्तृ°) । सुभाषितार्णवे २४.११९ ॥

कान्ताकटाक्षविशिखा न लुनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरिविषयाश्च न लोभपाशा
लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ ७६ ॥

कान्तेति ॥ कान्तानां सुन्दरीणां कटाक्षा अपाङ्गविलोकितान्येव विशिखा बाणाः यस्य पुंसश्चित्तं हृदयं न लुनन्ति न छिन्दन्ति विकृतिं न नयन्तीत्यर्थः । कोपस्य क्रोधस्यैव कृशानोर्दहनस्य तापः संज्वरो यस्य चित्तं न निर्दहति न भस्मीकरोति । न व्यथयतीत्यर्थः । भूरि बहुला विषया इन्द्रियार्था लोभ एव पाशा रज्जवश्च न कर्षन्ति । यस्य चित्तमिति पदद्वयं अत्राप्यनुसंधेयम् । यस्य चित्तं विषयासक्तं लोभाक्रान्तं च न भवतीत्यर्थः । तादृशो धीरो धृतिमान्कृत्स्नमशेषमिदं लोकत्रयं भुवनत्रितयं जयत्यभिभवति ॥ [ वसन्ततिलका ]

[ ना२. कोशे नास्ति ] १) तु.सु. न खनन्ति; म१.२.५. न दळन्ति; म३. नुदकन्ति ( न लुनन्ति )। —२) तु. काम°; ते२. चोप° ( कोप° )। तु१. °तापाः। —३) ना५. रा. तर्षन्ति; ते२. कुर्वन्ति; ग्र१. म१–३. नह्यन्ति ( कर्षन्ति )। तु. सु. ग्र१. म१–३. विषयांश्च। सु ( टीपा. ) म४.५. विषयाश्च न लोभपाशात्। ग्र४. लोभपाशैः। —४) तु१. लोकत्रये; तु२. लोकत्रयां। ग्र१. हि ( स )॥

भ. १६२६ (६३३)। सुभा. पृ० ७८.१२। सुर. पृ० १५.४७ ( प्रसङ्गरत्नावल्याम् )॥

कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणं प्रमार्ष्टुम्।
अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा यान्ति कदाचिदेव॥७७॥

कदर्थितस्येति॥ कदर्थितस्य पीडितस्यापि धैर्यवृत्तेर्धृतिशीलस्य धैर्यगुणं धीरत्वगुणं प्रमार्ष्टुमपनेतुं न शक्यते न पार्यते। इममेवार्थं दृष्टान्तमुखेन साध-(बोध)यति। अधोमुखस्यावाङ्मुखस्यापि वह्नेः शिखिनः शिखाः कीलाः कदाचिज्जातु अधः अधोभागं न यान्ति न गच्छन्त्येव। यथा अवाङ्मुखीकृतस्यापि वह्नेः शिखा ऊर्ध्वं च यान्ति एवमेव कदर्थितस्यापि धीरस्य धैर्यमुन्नतमित्यर्थः॥ [उपजाति]

१) ते१. च; ते२. न ( हि )। ना२. म४. धैर्यवृत्ते। —२) ना१.२.४.५. रा. ते. ग्र४.५. म५. धैर्यगुणः। —३) तु. अधः कृतस्यापि। तु. सु. तनूनपातो; ना१. हुताशनस्य; ग्र४. कृशस्य वह्नेर्। —४) ना१–४. ग्र४. याति ( यान्ति )॥

भ. १५११ (५९१); पञ्चतन्त्रे १.६२; हितोप° २.६६ ( ६१,६७ )। शा. २२७ (भर्तृ°)। सु. ३१६ ( ५२८; अश्वघोषस्य )। तन्त्राख्यायिकायां १.३१। सुर. पृ० ५१.४ ( शार्ङ्ग° )। सुभा. पृ० ७७.८ ( भर्तृ°; भदन्ताश्वघोषस्य )। सूहा. १०१.७ ( पञ्चतन्त्रे )। गरुडमहापुराणे ११०.१६॥

वरं शृङ्गोत्सङ्गाद्धिमशिखरिणः क्वापि विषमे
पतित्वायं कायः कठिनदृषदन्तर्विदलितः।
वरं न्यस्तो हस्तः फणिपतिमुखे तीक्ष्णदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः॥ ७८॥

वरमिति॥ शृङ्गोत्सङ्गात् शृङ्गोपरिभागात् हिमशिखरिणः प्रालेयाद्रेः ( संबन्धिनः तुङ्गादुन्नतात् शृङ्गाच्छिखरात्सकाशात् ) क्वापि कुत्रचित् विषमे निम्नोन्नतप्रदेशे पतित्वा निपत्य कठिनानां कर्कशानां दृषदां शिलानामन्तर्मध्ये विदलितो भिन्नः ( विगलितो विकीर्णः ) [ अयं ] ( अधः ) कायो देहः वरं मनाक्प्रियम। वरशब्दो मनाक् प्रिये नियतनपुंसकलिङ्गः। 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक्प्रिये' इत्यमरः। तीक्ष्णदशने तिग्मदशने फणिपतेराशीविषश्रेष्ठस्य मुखे वदने न्यस्तो हस्तः करो वा वरं मनाक्प्रियम्। वह्नौ कृशानौ पातः पतनमपि वरं मनाक्प्रियम्। तदपि तथापि ततो विहितं शीलस्य सद्वृत्तस्य विलयो नाशो न वरः। 'शीलं स्वभावे

सद्वृत्त' इत्यमरः। वृत्तनाशो मरणादतिरिच्यते। कण्ठगतप्राणैः न अशुभं कर्म समाचरन्ति कुश(कुशल)बुद्धयः॥ [ शिखरिणी ]

१) ना. ते२. म४.५. शृङ्गोत्तुङ्गाद्; ग्र२. शृङ्गात्तुङ्गाद्। ना१. रा. ग्र५. गुरु (हिम)। सु. ना१.ग्र४. विषये (विषमे)। —२) ग्र१.२. म१-३. पतित्वाधः। सु. ना१. कठिण°। रा. ते१. ग्र५. °दृषदन्ते। रा. ते१. ग्र२-५. विगलितः; म३. निदलितः; म५. विलिखितः (विदलितः)। —४) ना३.४. ग्र२ (मू). वरः; ते २. ततः (कृतः)। ते २. म४.५. शीलविषमः॥

म. ५९५४ (२७३१)॥

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-
न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति॥ ७९॥

वह्निरिति॥ यस्याङ्गे देहेऽखिलानां सर्वेषामपि लोकानां जनानां वल्लभतमं अत्यन्ताभीष्टं शीलं सद्वृत्तं समुन्मीलति स्फुरति तस्य वह्निरग्निः जलायते जलमिवाचरति। शीततरो भवतीत्यर्थः। 'कर्तुः क्यङ्सलोपश्च' इति कर्तुरुपमाने आचारे क्यङ्प्रत्ययः। जलनिधिः पयोराशिः कुल्यायते कुल्येवाचरति। ईषत्तर इत्यर्थः। मेरुः सुरालयः स्वल्पशिलायते स्वल्पशिलेवाचरति। मृगपतिः सिंहः सद्यः सपदि कुरङ्गायते कुरङ्ग इवाचरति। कुरङ्गो हरिणः। व्यालो भुजंगः माल्यगुणायते माल्यगुण इवाचरति। माल्यगुणः पुष्पस्रक्। विषरसो गरलद्रवः। 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः। पीयूषवर्षायतेऽमृतवृष्टिरिवाचरति॥ [ शार्दूलविक्रीडितम् ]

[ अड्यार् २८. एम्. ५६ कोशे नास्ति ] ३) ते२. व्यालः स्वल्पमृगायते। म५. विषरसं। —४) तु. सु१. ग्र४. °वल्लभमिदं; सु२.३. ना१.४.५. रा. ते१. ग्र५. °वल्लभतरं। सु१. समुन्मूहति; ते२. म३. समुज्जृम्भते॥

भ. ६०१४ (२७६५); प्रसङ्गाभ° ४। सुर. पृ० १०२.४ (कल्पतरौ)। सुभा. पृ० ८४.१९॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम्॥ ८०॥

ऐश्वर्यस्येति ॥ ऐश्वर्यस्य प्रभुतायाः सुजनता सौजन्यं विभूषणमलंकारः। शौर्यस्य पराक्रमस्य वाक्संयमः अविकत्थनं विभूषणम् । ज्ञानस्य मोक्षधिय उपशमः शान्तिर्विभूषणम् । श्रुतस्य शास्त्रस्य विनयः प्रश्रयो विभूषणम् । 'मोक्षे धीर्ज्ञानमन्यत्रे'ति 'श्रुतं शास्त्रावधृतयो'रिति चामरः। वित्तस्य धनस्य पात्रे त्रिविधे व्ययः प्रतिपादनं विभूषणम् । धर्मपात्रं कार्यपात्रं कामपात्रं चेति पात्रस्य त्रैविध्यम् । तत्र धर्मपात्रे वित्तस्य व्ययः विद्यातपोवृत्तवत्सु विप्रेषु निर्व्याजं दानम् । "न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम्" इति स्मृतेः । प्रत्युपकारार्थं यस्मै धनं दीयते तत्कार्यपात्रम् । अनिषिद्धात्मकसुखोपभोगार्थं यस्मै धनं दीयते तत्कामपात्रम् । तपसः अनशनादेः अक्रोधः क्रोधराहित्यं विभूषणम् । प्रभवितुः शक्तस्य क्षमा सहिष्णुत्वं विभूषणम् । धर्मस्य पुण्यस्य निर्व्याजता अभिसंधिराहित्यं विभूषणम् । सर्वेषामपि पुरुषाणां सर्वस्य कारणं हेतुः इदमुक्तं शीलं सद्वृत्तं परमुत्कृष्टं विभूषणमाभरणम् ॥ [ शार्दूलविक्रीडितम् ]

१) ग्र३ (मू). सुभूषणं । तु.सु. शूरस्य ( शौर्यस्य ) । —२) ग्र१. म. °स्योपरमः ( म३. °रतिः ) । ग्र१. म३. शमस्य ( श्रुतस्य ) । —४ ) तु२. सर्वेस्यामपि । तु. ग्र४. सर्वभूषणम् ( ग्र४. सर्वकारणम् इत्यपि ) ॥

भ. १४८७ (५८१); प्रसङ्गाभ° ३; सुभाष. १८० । सु. ३०५४ । सुभा. पृ० ८४.२० । सुर. पृ० १४.३४ ( पृ० २३१.६. भर्तृ°) । सूक्ता. १८०.९ ( सरस्वतीकण्ठाभरणे ) । सूक्तावल्यां १ । सभातरङ्गे १.५१ । सुभाषितार्णवे ८.४८ ॥

## नीतिशतके अष्टमपद्धतौ अधिकश्लोकाः ।

छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः संतप्यन्ते न लोकेषु ॥ १ ॥

{ छिन्न इति ॥ तरुश्छिन्नः सन्नपि पुना रोहत्युद्गच्छति । चन्द्रः क्षीणः कृष्णपक्षे दिनक्रमेण कृशः सन्नपि पुनरुपचीयते प्रवर्धते । इत्येवं विमृशन्तो मनस्यनुसंदधानाः सन्तः शीलसंपन्ना लोकेषु बन्धुजनेषु विश्लथेषु विह्वलेषु सत्स्वपि न संतप्यन्ते । किंतु तरुचन्द्रदृष्टान्तेनाभिवृद्धिमाशंसन्त एव सन्तीत्यर्थः ॥ आर्याभेदः ॥ रा० }

[रा. नीति. ७९; ना२. नीति. ८.१०; ते१. नीति. ७९; अडयार् २५. एल. २. नीति. ८० इतोऽन्यत्र कोशेष्विदं पद्यं नास्ति ] ४) ना२. न विपदि लोकेपु; ना४. न विधिरेषः; रा. ते१. न विश्लथेषु लोकेषु ( न लोकेषु ) ॥

भ. २३१४ ( ९२५ ); संस्कृतपाठ° ६२ । सुभा. पृ० ४७.१३ । सुर. पृ० १९.८० ( प्रसङ्गरत्नावल्याम् ) ॥

एको वासः पट्टणं वा वनं वा एका भार्या वंशजा वा प्रिया वा ।
एकं मित्रं भूपतिर्वा यतिर्वा एको देवः केशवो वा शिवो वा ॥ २ ॥

[ अडयार् २८ एम् ५६. नीति ७९; ग्र३. पुष्पिकायामपि दृश्यते ]

[ भ. १४२५ (५५७) । प्रबन्धचिन्तामणौ ४.१८१ । सुभा. पृ० १७२.८१४ । सूहा. १८१.६१ (महाभारते) । ]

अपेक्षन्ते न पात्राणि न स्नेहं न दशान्तरम् ।
सदा लोकहिता रक्ता रत्नदीपा इवोत्तमाः ॥ २ ॥

अपेक्षन्त इति । उत्तमाः सत्पुरुषाः रत्नदीपाः रत्नमयदीपा इव पात्राणि धर्ममय (धर्मादियोग्य) पात्राणि दीपपक्षे तैलाधारपात्राणि च नापेक्षन्ते । न काङ्क्षन्ति । स्नेहो मैत्री अन्यत्र तैलादिकं नापेक्षन्ते । दशान्तरं अवस्थान्तरं, अन्यत्र वर्त्यन्तरम् । दशावस्था(र्ता)वस्थायामिति शब्दार्णवे । नापेक्षन्ते । सदा संततं लोकहिता जनप्रियाः रक्ताः अनुरक्ताः अन्यत्र रागयुक्ता भवन्ति इति शेषः ॥

[ सु. नीति. ८१ (८०); ना ३–५. ग्र १–३. ५. नीति. ८० ] [ भ. ४५५ (१६५) । शा. २३५ । सुभा. पृ० ४६.४२ । सु. २२४ । सुभाषितार्णवे १६.१ । सूहा. ३१.३ । पद्यरचनायां (का. ८९) पृ० ११०.३० ]

## ॥ दैवपद्धतिः ॥

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावतो वाहनम् ।
इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नः परैः संगरे
तद्व्यक्तं ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ॥ ८१ ॥

नेतेति ॥ यस्य बलभिद इन्द्रस्य नेता मन्त्री बृहस्पतिर्वाचस्पतिः । यस्य प्रहरणमायुधं वज्रं शतकोटिः । यस्य सैनिकाः सैन्याः सुरा अमराः । यस्य दुर्गं गिर्यादिष्वन्यतमं स्थानं स्वर्गस्त्रिविष्टपम् । यस्य हरेर्विष्णोरनुग्रहः कृपा । यस्य वाहनं (वारणः दन्ती) ऐरावतः अभ्रमातङ्गः । इत्येवमाश्चर्येणाद्भुतेन बलेन शक्त्यान्वितोऽपि युक्तोऽपि बलभिदिन्द्रः परैः परिपन्थिभिः संगरे युद्धे भग्नः पराजितः । तत्तस्मात्कारणात् दैवं भागधेयमेव व्यक्तं स्फुटं शरणं रक्षितृ । वृथा व्यर्थं पौरुषं पुरुषकारः । धिग्धिक् निन्दित इत्यर्थः । 'धिङ्निर्भर्त्सननिन्दयो'रित्यमरः ॥ [ शार्दूलविक्रीडितम् ]

१) तु२. नैता । —२) ग्र४. स्वर्गं । ना५. असंग्रहः; ग्र४. अनुग्रहं । तु.सु. रा १. ते. ऐरावणो । सु१. ते२. रावणः; सु२.३. ना२–४. रा. ते१. ग्र२.३. वारणः; ग्र१. म३. वाहनः । —३) तु. सु. इत्यैश्वर्य°; म३. उच्चैरश्व° । तु. ऽपि मघवा; म४. ऽपि सुरराड्; म५. सुरविराड् (ऽपि बलभिद्) । —४) तु२. ना१. ग्र१.२. म१.३–५. तद्युक्तं; म२. तद्युक्तं । ग्र४. बत (ननु) । ना२. °मेव * नृणां वृद्धौ क्षये कारणं । म४.५. हि परं (शरणं) ॥

म. ३८१५ (१६४३); विक्रमचरित्रे १७२ । सु. ३१५१ । सुर. पृ० ७१.१० (शार्ङ्ग°) । सुभा. पृ० ९३.१०० । आत्मानुशासनकाव्ये ॥

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि परं वृद्धौ क्षये कारणम् ॥८२॥

भग्नाशस्येति ॥ भग्ना नष्टा आशा जीविताहारयोस्तृष्णा यस्य स भग्नाशः तस्य । करण्डेन पेटिकया पिण्डिततनोः पिण्डीकृतदेहस्य । क्षुधा बुभुक्षया म्लानानि ग्लानानि इन्द्रियाणि चक्षुरादीनि यस्य तस्य भोगिनो भुजंगस्य मुखे वदने आखुरुन्दुरुः स्वयमात्मनैव च नक्तं रात्रौ विवरं करण्डरन्ध्रं कृत्वा निपतितः पतितवान् । असौ भोगी तस्याखोः पिशितेन मांसेन तृप्तो मुदितः सन्सत्वरं ससंभ्रमं तेनैवाखुकृतेन पथा मार्गेण यातो गतः । हे लोकाः तेन कारणेन स्वस्थाः संतुष्टास्तिष्ठत आध्वम् । हि यस्मात्कारणात् परं केवलं दैवं भागधेयमेव वृद्धावुपचये क्षयेऽपचये च कारणं हेतुः । करण्डे मोदकाः सन्ति तान्भुक्त्वा जीविष्यामीत्येव बुद्ध्या मूषिको मृतः । न जीवामि आहारोऽपि मम न संभवतीति निर्विण्ण (विषण्ण) एव भोगी आहारं मार्गं च लब्ध्वा जीवितं प्राप्तः । तस्मात्पुरुषकारो निरर्थकः । दैवमेव प्रबलमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) ना१. भग्ना यस्य । तु. °पीडिततनुर् ; सु. ना२. °पीडिततनोर् । म३. मानेन्द्रियस्य । —३) म३. तत्क्षणमहो; म४. तत्क्षणमसौ (सत्वरमसौ) । —४) सु. स्वस्थस्तिष्ठति; म५. स्वस्थं तिष्ठत । म३. जगतां ( हि परं ) । तु. ना१.२. ग्र४. नृणां ( परं ) । ग्र२. वृद्धिक्षये । ना५. चाकुलं ॥

म. ४५२८ (२०१२); पञ्चतन्त्रे २.८८; शुक°. ६; विक्रमचरित्रे १७७; सुभाष्. १०७ (३०६) । सु. ३१४३ । सक. ५.७१.२ (पृ० ३२४) । सुभा. पृ० ९४.१०९ । सुर. पृ० ७१.१२ (भर्तृ°) ॥

दैवात्कन्दुकपातेनोत्पतत्यार्यः पतन्नपि ।
तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ ८३ ॥

दैवादिति ॥ आर्यः सज्जनः दैवाद्दैवगत्या पतन्भ्रश्यन्नपि कन्दुकपातेन न स्थायिना न पतति । अनार्योऽसज्जनस्तु मृदो मृत्तिकायाः पिण्डस्य पतनं पातो यथा तथा पतति । मृत्पिण्डः पतित्वा नोत्पतति । भूमावेव गतिः । एवमेवानार्यः पततीत्यर्थः ॥ [ अनुष्टुप् ]

१) तु.सु. प्रायः; रा. ते१. ग्र१. म. यथा ( दैवात् ) । तु१. ना१. ग्र२.३.५. म२. कन्तुक° । ना१.३.४. ते२.–वन्नून°; ना५. ग्र४. –वत्तूर्णम् (–पातेन) । —२) तु. म२. पतत्यार्यः; सु. ग्र२.३. न स्थाय्यार्यः; ना१. ३–५. ते२. ग्र४.५. उदेत्यार्यः । —३) तु२. तत्त्वार्थनार्यः । —४) तु१. मृत्पिण्डं ॥

म. ४३३३ (१९०६) । पञ्चतन्त्रे २.१७० । सुभाषितार्णवे २४.११७ (पाठभेदैः) ।

खल्वाटो दिवसेश्वरस्य किरणैः संतापिते मस्तके
गच्छन्देशमनातपं द्रुतगतिस्तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र दैवहतकस्तत्रैव यान्त्यापदः ॥ ८४ ॥

खल्वाट इति ॥ खल्वा(र्वा)टः प्रकृत्या केशरहितमस्तकः । दिवसेश्वरस्य मार्ताण्डस्य किरणैर्मयूखैर्मस्तके शिरसि केशविहीनत्वात्संतापिते संतप्ते सति । अनातपं आतपरहितं देशं प्रदेशं गच्छन्व्रजन् द्रुतगतिः शीघ्रगमनः संस्तालस्य तृणराजस्य मूलं तलं गतः प्राप्तः । तत्र तालमूले पतता भ्रश्यता महता स्थूलेन तालस्य फलेन । अस्य खल्वाटस्य शिरो मस्तकं सशब्दं शब्दसहितं यथा भवति तथा भग्नं पपाट । दैवेन विधिना हत एव हतको नाशितो यत्र गच्छति यस्मिन्प्रदेशे याति तत्रैव प्रदेशे प्रायो भूम्ना आपदो विपदो यान्ति । तं दैवहतकमनुव्रजन्ति । पुरुषकारादपि दैवमेव प्रबलमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) रा१. ग्र१-४. म. ख( म४.खा )र्वाटो । तु. सु. ना१.२. म१.३.५. संतापितो; ग्र१. म२.४. संताडितो । —२) तु. सु. ना१.२. म३–५. वाञ्छन्; ग्र१. भ्राम्यन् । तु. सु. ना२. म१. ३–५. विधिवशात्; ना१. द्रुतमसौ । ते१. मूले स्थितः । —३) ते२. तत्रस्थेपि महत्फलं निपतितं; ग्र१. तत्रस्थस्य च तत्फलेन पतता; म५. तत्रस्थस्य तु तत्फलैर्निपतितैर् । ते. भिन्नं । म१.३.५. समस्तं । —४) म३. यत्रायान्ति हि मन्दभाग्यनिवहस्त° । ना१.२ भाग्यरहितस्त° । तु२. ग्र२ ( मू ). यन्त्यापदः ॥

म. २०४८ (८०२); सुभाष. ३०८ । शा. ४३७ (भर्तृ०) । सु. ३१४१ ( दिविरदेवादित्यस्य ) । सुभा. पृ० ९४.११४ ( दिविरदेवादित्यस्य ) । सुर. पृ० ७१.१३ (भर्तृ°) । सूक्त. ३६.७ ( पञ्चतन्त्रे ) ॥

गजभुजंगविहंगमबन्धनं शशिदिवाकरयोर्ग्रहपीडनम् ।
मतिमतां च समीक्ष्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥८५॥

गजेति ॥ गजा दन्तिनः [भुजंगाः सर्पाः विहंगमाः पक्षिणः] (विहङ्गाः पक्षिणः भुजंगमाः सर्पाः ) तेषां बन्धनं निरोधः । शशी चन्द्रः दिवाकरो भास्करश्च तयोर्ग्रहपीडनं केतुराहुग्रहपीडां मतिमतां सतां दरिद्रतां दारिद्र्यं च समीक्ष्य दृष्ट्वा बुद्ध्वा विधिर्दैवं बलवानधिकः इत्येवं मे मम मतिर्बुद्धिः । जातेति शेषः ॥ [ द्रुतविलम्बितम् ]

१) ग्र३ ( मू ). गजविहंगभुजंगम° । —२) ना१. गृहपीडनम् । —३) ना२. ते२. निरीक्ष्य; रा. विलोक्य ( समीक्ष्य ) ॥

म. २०६० (८११); पञ्चतन्त्रे २.२० (१९); हितोप° १.४५ (५२) । शा. ४४३ । सु. ३१२५ । वेतालभट्टस्य नीतिप्रदीपे ४. ( हे. पृ० ५२६ ) । तन्त्राख्यायिकायां २.८ । विक्रमचरित्रे २६२ । सुभा. पृ० ९२.६८ । सुर. पृ० १७१.१४ (भर्तृ°) ॥

सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चेदह ह कष्टमपण्डितता विधेः ॥८६॥

सृजतीति ॥ तावत्प्रथमं विधिर्ब्रह्मा अशेषाणां समग्राणां गुणानां बलबहुगुणश्रुत्यादीनां आकरं जन्मस्थानं पुरुषरत्नं नरश्रेष्ठम्। 'रत्नं स्वजातिश्रेष्ठेऽपी'त्यमरः। भुवः भूमेः अलंकरणं भूषणभूतं सृजति उत्पादयति। तत्पुरुषरत्नं भूम्यलंकरणमपि तस्मिन्नेव क्षणे भङ्गि नश्वरं, अचिरकालस्थायीत्यर्थः। करोति विदधाति चेत् विधेर्विधातुः अपण्डितता अविवेकित्वम्। अह ह अद्भुते खेदे च। 'अह हेत्यद्भुते खेदे चे'त्यमरः। इदं कष्टं गहनं ईदृगिति निरूपयितुमशक्यमिति यावत्। 'कष्टं तु कृच्छ्रगहने' इत्यमरः। बहुगुणशालिनं पुमांसं चिरकालस्थायिनं निर्मिमीते चेत् तदानीं ब्रह्मणः कृत्यं समञ्जसं नो चेदसमञ्जसमित्यर्थः ॥ [ द्रुतविलम्बितम् ]

१) तु. °गुणाकरः। —३) सु. ना३.५. ग्र१–३. म१–३. च (तत्)। —४) तु१. अपण्डिततां ॥

भ. ७१६३ (३२८९); सुभाष्. ६८। शा. ४०००। सु. ३१२६ (फल्गुहस्तिन्याः)। सूमु. १३१.३९ (फल्गुहस्तिन्याः)। सुर. पृ० ७१.१५ (भर्तृ°)। सुभा. पृ० ९२.१७। सूहा. ३६.४ (फल्गुहस्तिन्याः) ॥

*येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः ।
तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ ८७ ॥

येनेति ॥ निशि रात्रौ चन्द्रमाश्चन्द्रो येनैवाम्बरखण्डेन नभोभागेन वासश्छेदेन। 'अम्बरं व्योम्नि वाससी'त्यमरः। संवीत आवृतः तेनैवाम्बरखण्डेन दिवा दिवसे भानुरर्कश्च संवीतः आवृतः। एतयोश्चन्द्रभान्वोः दौर्गत्यं दारिद्र्यम्। अहो आश्चर्यम्। अम्बरशब्दश्लेषेण कविरिन्द्वर्कयोर्दारिद्र्यमुत्पादयति ॥ [ अनुष्टुप् ]

[ रा१. कोशे नास्ति; रा२. कोशे तु टीकायां प्रक्षिप्तः; अडयार् २२. बी. १० कोशेऽपि नास्ति]। १) ते२. एनैव (येनैव)। —२) ना२. सेवितो; ग्र४. संवृतो (संवीतो)। —३) तु२. तेनैव दिवसे भानुर्। —४) ना१. दौर्गमम्; ग्र५. दारिद्र्यम् (दौर्गत्यम्)। तु. एवयोः (एतयोः) ॥

भ. ५५४४ (२५१०)। सुभा. पृ० ६५.५ ॥

*प्रियसख विपद्दण्डाघातप्रपातपरंपरा-
परिचयबले चिन्ताचक्रे निधाय विधिः खलः ।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालव-
द्भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥ ८८ ॥

प्रियसखेति ॥ हे प्रियसख अभिमतमित्र। खलो दुर्जनो विधिर्ब्रह्मा मनश्चित्तं मृदं मृत्तिकामिव बलात्प्रसभं पिण्डीकृत्य अपिण्डमेव पिण्डं कृत्वा। 'अभूततद्भावे च्विः'। 'अस्य च्वा'वितीत्वम्। 'ऊर्यादिच्विडाचश्चे'ति गतिसंज्ञायां 'गतिकारके'-त्यादिना समासः। समासेन पूर्वोक्तो ल्यप्। प्रगल्भकुलालवत् प्रौढकुम्भकार इव विपद आपद एव दण्डस्य लगुडस्य आघातानां ताडनानां प्रपातानां पातानां परंपरा आवृ{त्तिस्तस्याः यः परिचयः संस्कारः निबिडावयवपरस्परसंनिवेशश्च स एव बलं दार्ढ्यं यस्य तस्मिन्-रा} (त्तयः ताभिः परिचयेन संस्तवेन चले लोले) चिन्ताचक्रे आध्यान एव च क्रोडागारे घटनिर्माणसाधने वलये भ्रमयति। अत्र अस्मान्किं विधास्यति न जानीमः ॥ [हरिणी]

[ना१.२. अडयार् २८. एमू. ५६ कोशेषु नास्ति] १) सु. ग्र४. म१. प्रियसखि; ते२. प्रिय निज-। तु. °द्दण्डाघाताद्; ग्र१. दण्डारवात-। तु. °विघात°; ना५. रा. ग्र५. °प्रवात; ग्र१. म१–३. °प्रघात°; ग्र४. °प्रतप्त°; म५. °प्रभाव° (°प्रपात°)। —२) ग्र३ (मू). °परिचल°। तु१. सु. ना५. ग्र२–४. °चले; तु२. °चलत्– (°बले)। सु (मू). विधाय (निधाय)। ग्र४. खलम्। —३) ग्र४. बन्धीकृत्य (पिण्डीकृत्य)। ते२. प्रचण्ड° (प्रगल्भ°)। — ४) ग्र४. विधास्यते ॥

भ. ४३५३ (१९२१)। शा. ४५१ (विज्जकायाः)। सु. ३१३७। सुभा. पृ० ९३.८६ (विज्जकायाः) ॥

*विरम विरमायासादस्माद्दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे।
अयि जडविधे कल्पापाये व्यपेतनिजक्रमाः
कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥ ८९ ॥

विरमेति ॥ अयि जड अज्ञ विधे विधातः विपद्यापदि महतामुदाराणां धैर्य-ध्वंसं धृतिनाशं ईक्षितुं द्रष्टुं यदि ईहसे इच्छसि चेत् (विरसायासादीक्षणस्वरूपा) अस्माद्दुरध्यवसायतो दुष्टोद्योगात् विरम निवर्तस्व। {विरम विरम आभीक्ष्ण्येन विरतो भव। 'नित्यवीप्सयो'रित्याभीक्ष्ण्यात् द्विरुक्तिः-रा} एते महान्तः कल्पापाये प्रलयकाले व्यपेतोऽपगतो निजक्रमः स्वप्रकारो येषां ते तथाविधाः क्षुद्राः स्वल्पाः कुलशिखरिणः कुलपर्वताः न भवन्ति। कुलशिखरिणामम्भोराशीनामपि प्रलया-पदि नाशोऽस्ति। महतां धैर्यस्य तु विपत्सहस्रेष्वपि ध्वंसो नास्तीत्यर्थः ॥ [हरिणी]

[ना१. ग्र४. म४.५. कोशेषु नास्ति] १) ना२. ग्र२.३. विरसा° (विरमा°) तु. दुराध्यवसा-यतो; ना२. दुर्व्यवसायतो। —२) म२. °ध्वंसं समीक्ष्य न लज्जसे। —३) सु. ना५. अपि (अयि)। तु. सु. ग्र३. जडविधेः। रा.ग्र१.३.५. म३. ऽप्यपेत° (व्यपेत°)। तु. °निजक्रमः ॥

भ. ६१४८ ॥

दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं
तत्तस्योपनमेन्मनागपि महान्नैवाश्रयः कारणम्।

सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥९०॥

दैवेनेति ॥ प्रभुणा सुखदुःखात्मकगुणनिर्माणसमर्थेन दैवेन भाग्येन जगति लोके यस्य जनस्य यद्धनादिकं प्रमाणीकृतमियत्तया परिमितम् । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृष्वि'त्यमरः । तत् धनादिकं तस्य जनस्योपनमेत्प्राप्तं भवेत् । महान्पृथुराश्रयोऽपि मनागल्पमपि कारणं हेतुर्नैव भवेत् । दृष्टान्तमाह । सर्वासामाशानां दिशां तृष्णानां च । 'आशा तृष्णापि चायते'त्यमरः । परिपूरके पूरयितरि जलधरे वारिवाहे प्रत्यहमनुवासरं वर्षति सत्यपि चातकस्य सारङ्गस्य पक्षिणो मुखे वदने द्वित्राः द्वौ वा त्रयो वा । 'संख्ययाव्ययासन्ने'त्यादिना बहुव्रीहिः । सूक्ष्माः श्लक्ष्णा एव पयोबिन्दवः वारिविप्रुषः पतन्ति । आश्रयमहत्त्वं फलमहत्त्वे कारणं न भवति । अपि तु भाग्यमेव । उक्तं च । "सख्यं वरेण्यघटितं द्रविणेश्वरेण कार्श्यं तथापि किमिदं तव नापनीतम् । वन्द्यः कृशस्तव न किं प्रथिमास्पदाभ्यां द्वाभ्यां सदा परिचितोऽपि पयोधराभ्याम् ॥" इति ॥ [ शार्दूलविक्रीडितम् ]

[ म२. कोशे नास्ति ] १) ग्र४. प्रभुणान्वहं । ग्र१. म३. स्वयं जगदिदं यस्य । —२) तु१. सु० म१. °नयेन्; तु२. ना२. °नयन्; ना१. °गमेन्; ग्र२(मू). °शमेन्; ग्र४. म४.५. °गमे; म३. °रमेन् (°नमेन्) । ग्र१. म३. तथा; ग्र४. महन् (महान्) । तु२. येवाश्रयः; ना१. नैवाश्रयं; म४. नेवाश्रयः; —३) ना१. °परिपूर्तके । —४) ते२. येव (एव) ॥

भ. २९८० (१२५५); सुभाष. ३१६ । सुभा. पृ० ९५.१२३ ॥

## नीतिशतके नवमपद्धतौ अधिकश्लोकाः ।

*अयममृतनिधानं नायकोऽप्योषधीनां
शतभिषगनुयातः शंभुमूर्धावतंसः ।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ॥ १ ॥

{अयमिति ॥ अयं परिदृश्यमानश्चन्द्रोऽमृतस्य निधानं स्थानमपि ओषधीनां संजीवन्यादीनां नायको नेतापि शतभिषजा नक्षत्रेण शतेन भिषग्भिर्वैद्यैश्च अनुयातोऽनुसृतोऽपि, किं बहुना शंभोः सकललोकक्षेमंकरस्य शंकरस्य मूर्ध्नोऽवतंसः शिरोभूषणमपि, एनमुक्तविशेषणविशिष्टं शशाङ्कं राजयक्ष्मा क्षयरोगो न च विरहयति न त्यजति खलु । अतो हतविधेर्नष्टदैवस्य परिपाको नियोगः केन वा पुंसा लङ्घनीयः । न केनापीत्यर्थः । हतेति निर्वेदानुसंधानार्थकः । (राजयक्ष्मेत्यत्र राज्ञश्चन्द्रस्य यक्ष्मा, राजा चासौ यक्ष्मेति वा विग्रहः ।) यथा वाहटः—"अनेकरोगानुगतो बहुरोगपुरोगमः । राजयक्ष्मा क्षयोऽशेषरोगराडिति च स्मृतः" ॥ इति ॥ [ मालिनीवृत्तम् ]—रा }

[सु. ग्र.२.३.५. कोशेषु गोमन्तककोशेष्वेकस्मिंश्च नास्ति] १) ना२. ग्र४. म१.२. स्वयम् (अयम्)। ग्र४. °निधानो। ना१.२. ते. ग्र१. औषधीनां।—२) तु. ना२. अमृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः। ना५. रा. शंभुमूर्ध्नोवतंसः। —३) तु. भवत विगतरश्मिर्मण्डलं प्राप्य भानोः। ना१. विहरयति यदेनं; ना२. तदपि च वियुक्ते; ग्र१. म३. ग्लपयति च तथैनं; म१. म१.२. परिहरति न चैनं; म४.५. विसृजति न हि चैनं (विरहयति न चैनं)। —४) तु. परसदननिविष्टः को लघुत्वं न याति ॥

भ. ५५१। सुभा. पृ० ९३.८४। चाणक्यनीतिदर्पणे १५.१४ ॥

पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः।
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ २ ॥

[ना२. नीति. ९.४; गोमन्तककोशे नीति. ८३] [भ. ३८८६ (१६८५); सुभाष. १९५। शा. ४८६। सु. २२२। सुभा. पृ० ४५.३०। सुभाषितार्णवे २४.११८।]

उडुगणपरिवारो नायको यः सुधायाः
शतभिषगनुयातः शंभुमूर्धावतंसः।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ॥ ३ ॥

[तु. नीति. ८९] [भ. ११६८; सुभाष्. २७७। सुर. पृ० ७५.१ (कल्पतरौ)। सु. ५७६। सुभा. पृ० ९६.४। सुभाषितार्णवे. ३१.४। सभातरङ्गे २५.६।]

रामस्य व्यसनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य विपदं भीष्मस्य शत्रोर्हतिम्।
विष्णोर्वामनतां तथार्जुनवधं संचिन्त्य लङ्केश्वरं
सर्वं दैववशादुपैति पुरुषः कः कं परित्रायते ॥ ४ ॥

[अडयार् २९ ई२. नीति. ९. १२] [भ. ५७८२ (२६३०); पञ्चतन्त्रे ५.६८; भोजप्रबन्धे; विक्रमचरित्रे ८०]

भगवन्तौ जगन्नेत्रौ सूर्याचन्द्रमसावपि।
काले गच्छत एवास्तं नियतिः केन लङ्घ्यते ॥ ५ ॥

[अडयार् २९ ई२. नीति. ९. १३] [भ. ४५२७ (२०११)। दण्डितः काव्यादर्शे २. १७२। सुभा. पृ० ९०.५ (दण्डी)। शा. ४४९]

येन यत्र च भोक्तव्यं सुखं वा दुःखमेव वा।
स तत्र रज्ज्वा बद्ध्वेव बलाद्दैवेन नीयते ॥ ६ ॥

[ अडयार् २९ ई २. नीति. ९. १४ ] [ सुभा. पृ० ९१.३३ । ]

यस्माच्च येन च यदा च यथा च यच्च यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तदा च तथा च तच्च तावच्च तत्र च विधातृवशादुपैति ॥ ७ ॥

[ अडयार् २९ ई २. नीति. ९. १५ ] [ भ. ५३४३ (२४१८); पञ्चतन्त्रे २.१८ (१७); हितोपदेशे १.३४ (४१) । सुभा. पृ० ९२.७१ । सुर. पृ० ७६.४ ( हितोपदेश ) ]

व्योम्न्येकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्ति क्षतिं
बध्यन्ते निपुणैरगाधसलिलान्मीनाः समुद्रादपि ।
[ दुर्नीतं किमिहास्ति किं सुचरितं ]कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ ८ ॥

[ अडयार् २९ ई २. नीति. ९. १६ ] [ भ. ६३३६ (२९२२) । सक. ५.७२.२ (पृ० ३२५, वसुभागस्य ) । सुर. पृ० १००.१ ( हितोपदेशे ) । सुभा. पृ० ३७४.२०३ । ]

## ॥ कर्मपद्धतिः ॥

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं यदि किमपरैः किं च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ९१ ॥

**नमस्याम इति ॥ देवानमरान्नमस्यामो वन्दामहे । 'नमो वरिवश्चित्रङः' क्यच् । नन्विति शङ्कायाम् । 'शङ्कासमुच्चयप्रश्नानुनयामन्त्रणे ननु' इत्यमरः । परिहरति । तेऽप्यमराः हतविधेर्दुष्टदैवस्य वशगाः परतन्त्राः । पक्षान्तरमाशङ्कते । विधिर्वन्द्यो नमस्कार्यः । उक्तमपि पक्षं परिहरति । सोऽपि विधिः प्रतिनियतस्य प्रतिपुरुषं भिन्नस्य कर्मणः सुकृतदुष्कृतरूपस्य एकस्य फलं ददातीति तथाविधः । यदि तर्हि फलं कर्मायत्तं न देवायत्तं नापि विध्यायत्तं तदानीम[ परैरन्यैः ]( मरैर्देवैः ) किं प्रयोजनं विधिना च किं प्रयोजनम् । न किंचित्प्रयोजनम् । तत् तस्मात् विधिरपि येभ्यः कर्मभ्यो न प्रभवति न समर्थो भवति । तेभ्यः कर्मभ्यो नमः । कर्माण्येव फलदानि । विधिस्तु कर्मानुरूपं फलमनुभावयतीत्यर्थः ॥** [ शिखरिणी ]

१) तु२. देवाः मनु; सु. ना२. देवाननु; म३. दैवान्न तु; म४.५. देवान्न तु । तु. सु. प्र१. म. बत विधेः; ना१. हितविधेः । प्र१. म१–३. सत्त्वविवशा ( तेऽपि वशगा ) । ना१. वशजाः । —२) प्र१. म३. °रचैक° (°कर्मैक°) । —३) म५. कर्मायुक्तं । प्र१. म१–४. यदिदम् ( यदि किम् ) । तु. सु. ना२. प्र२.३. अमरैः । ना१. हि; प्र४. नु ( च ) । प्र४. विधिनो । —४) प्र४. नमः; म३. नमः स्तात् ( नमस्तत्- ) । प्र३. म३.५. कर्मेभ्यो ॥

भ. ३३६७ (१४३१); सुभाष्. ३०५ । शान्तिशतके १.१ (हे. पृ० ४१०)। शा. ४३६ (भर्तृ°)। सु. ३०७९। सुर. पृ० ७१.११ (भर्तृ°)। सुभा. पृ० ९३.८८ (भर्तृ°)। सूहा. ३४.२४ (काव्यप्रकाशे)। सोमदेवस्य यशस्तिलकचम्प्वां (का० ७०. २. पृ० २५६)॥

*ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥९२॥

ब्रह्मेति ॥ ब्रह्मा विधाता येन कर्मणा ब्रह्माण्डानामेव भाण्डानां कुम्भानामुदरे मध्ये कुलालवत्कुम्भकार इव नियमितो निबद्धः क्षणमपि विश्रान्तिं नानुभवति। विष्णुर्हरिरपि येन कर्मणा दशभिरवतारैर्मत्स्यकूर्मादिभिः गहने कलिले महासंकटेऽधिकसंबाधे क्षिप्तो निपातितः। रुद्रो हरोऽपि येन कर्मणा कपालपाणिपुटके करोटिरूपभाजने भिक्षाटनं भिक्षार्थं परिभ्रमणं [सेवते श्रयति] (कारितो विधापितः)। सूर्यः सवितापि येन कर्मणा नित्यं सर्वदैव गगने व्योम्नि भ्राम्यति परिभ्रमति। तस्मै कर्मणे नमः। ब्रह्मादयोऽपि स्वकृतकर्मानुरूपं फलमनुभवन्तीत्युक्ते सति किमुतान्येषां मानुषादीनामित्यर्थः॥ [शार्दूलविक्रीडितम्]

[तु. कोशयोर्नास्ति] ३) सु. शंभुर् (रुद्रो)। ग्र२ (मू).° लपात्रपुटके। ना.१ भिक्षाटणं; म४. भिक्षाशनं। सु. ना२. ग्र३.५. म१–३. कारितः; ग्र१. कुर्वते; ग्र२ (मू). कार्यतः (सेवते)। —४) म५. भ्रम्यति। ना ५. गहने॥

भ. ४४९७ (१९९४)। शा. ४३५ (भर्तृ°)। सु. ३१०२। अष्टरत्ने ४ (हे० ८)। विक्रमचरित्रे २६१। सुभा. पृ० ९३.९८ (भर्तृ°)। सुर. पृ० ७६.१ (शार्ङ्ग°)। गरुडमहापुराणे ११३.१५॥

या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥९३॥

या साधूनिति। हे साधो सज्जन या सत्क्रिया सत्कर्म साधून्सज्जनान् खलान्दुष्टान्करोति विदधाति। विदुषो विशेषान्मूढान्करोति। हितान्प्रियान्द्वेषिणः शत्रून्करोति। प्रत्यक्षं दृश्यमानं परोक्षमप्रत्यक्षं कुरुते करोति। अमृतं सुधां हालाहलं कालकूटं कुरुते। एवंविधां भगवतीं षड्गुणैश्वर्यसंपन्नां तां सत्क्रियां आराधय सेवस्व। विपुलेषु विशालेषु गुणेषु रूपादिषु व्यसनैर्दोषैः वाञ्छितमिष्टं फलं भोक्तुं अनुभवितुं वृथा व्यर्थं आस्थां तात्पर्यं मा कृथाः मा कार्षीः। वृथा व्यसनासक्तिं परित्यज्य अघटनाघटनसमर्थं कर्मैव भजस्वेत्यर्थः॥ [शार्दूलविक्रीडितम्]

२) तु२. प्रत्यक्षे। —३) ना२. चण्डिकां (सत्क्रियां)। ना३.४. भोक्तुः। —४) तु. सु. ना२. त्वमतो; ग्र२.४. व्यसने (व्यसनैर्)। तु१.सु. ग्र३. म१–४. विफलेष्वास्थां; तु२. विफलेष्वास्था; म५. विपुलैष्वास्थां ॥

भ. ५४९९ (२४८७); सुभाष. ३०७। सु. ३०७४ (श्रीवर्धनस्य)। सुभा. पृ० ९३. ९७। सुर. पृ० ७६.८ (सभातरङ्गे) ॥

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते स्थिरमनुस्यूते शुभे कर्मणि।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥९४॥

शुभ्रमिति॥ शुभ्रं धवलं सद्म गृहम्। सविभ्रमा विलाससहिता युवतयस्तरुण्यः। श्वेतेन पाण्डरेण आतपत्रेण छत्रेणोज्ज्वला विमला लक्ष्मीः संपत्तिरिति एतत्सर्वं शुभे कर्मणि पुरा कृते स्यूतेऽविच्छिन्ने सति स्थिरमनश्वरमिव अनुभूयते ज्ञायते। विच्छिन्ने नष्टे शुभकर्मणि सति नितरामत्यर्थमनङ्गकलहक्रीडया प्रणयविग्रहलीलया त्रुटत्तन्तुकं छिन्नसूत्रकं (°त्तन्तुके छिन्नसूत्रके) मुक्ताजालं मौक्तिकसमूह इव झटिति शीघ्रं भ्रश्यत् विशीर्णं सत् दिशो हरितः प्रयाति गच्छति। दृश्यतां विलोक्यताम् ॥ [शार्दूलविक्रीडितम्]

२) तु. सु. ना २–४. ग्र२.३.५. स्थिरमिव; ना५. रा. वे. ग्र४. चिरमनु-। तु. सु. ना२. ग्र१.२. स्फीते (–स्यूते)। —३) ना५. संछिन्ने। सु. ना२. ऽतितरां। ना१. °महत्कंतुकं; ना३. म२. °त्रुटत्कन्दुकं; ग्र१. म३. °त्रुटत्कंचुकं; ग्र२.५. °त्रुटत्तंतुके; ग्र४. त्रुटत्कंतुकं। —४) तु२ (मू). मुक्ताज्वाल; ग्र१. मुक्ताहार। ग्र२. प्रयांति। ना१. सततं (झटिति)। तु. सु. ग्र१. म. भ्रश्यदृशो; ना१. भ्रश्यन्दृशौ। सु. ऽदृश्यतां; ते२. विश्वसा ॥

भ. ६४९५ (३००३); काव्यसं. ९७ ॥

गुणवदगुणवद्वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्मणामा विपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ९५ ॥

गुणवदिति॥ गुणवत् अनिन्द्यं अगुणवत् निन्द्यं वा कार्यजातं कर्तव्यसामान्यं कुर्वता विदधता जनेन। पण्डितेन धीमता यत्नतः महता यत्नेन परिणतिः परिपाकः अवधार्या निश्चेया। अन्यथा दोषं दर्शयति। अतिरभसेन अत्यन्तं त्वरया कृतानामनुष्ठितानां कर्मणां व्यापाराणां विपाकः विपरिणामः आ विपत्तेः मरणपर्यन्तं

शल्येन शङ्कुना तुल्यं सदृशो हृदयदाही चित्तपरिदाही भवति । यत्किंचित्कार्यं कुर्वन्स विचारयेत् अन्यथा पश्चात्तापं च नयेदित्यर्थः । उक्तं च ।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः" ॥

इति ॥ [ मालिनी ]

१) सु (टी). उचितमनुचितं वा । तु. कुर्वतो । ते२. कार्यजालं । — ३) तु. आविपत्तौ — ४) ना५. हृदयदावा; म४.५. °यतापी ॥

भ. २१२२ (८४३) । शा. १३९१ । सु. २३९४ । सुर. पृ० ७७.९ (पृ० २४३. १३; भर्तृ° ) । सुभा. पृ० ९३. ८२ ( पृ० १७६.९७३ ) ॥

स्थाल्यां वैडूर्यमय्यां पचति तिलखलं चान्दनैरिन्धनौघैः
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कतूलस्य हेतोः ।
छित्त्वा कर्पूरखण्डान्वृतिमिह कुरुते कोद्रवाणां समन्ता–
त्प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः ॥९६॥

स्थाल्यामिति ॥ मन्दभाग्योऽल्पपुण्यो यो मनुजः इमां कर्मभूमिं कर्मक्षेत्रं मर्त्यलोकं प्राप्य आसाद्य तपो न चरति न करोति स वैडूर्यमय्यां वालवायजमणिनिर्मितायां स्थाल्यामुखायां चान्दनैर्मलयजैरेव इन्धनानामेधसां ओघैः स्तोमैः तिलखलं तिलपिण्याकं पचति रन्धयति । सौवर्णैः सुवर्णमयैर्लाङ्गलाग्रैः हलमुखैः अर्कतूलस्य हेतोरर्कतूलाय । 'षष्ठी हेतुप्रयोगे' इति षष्ठी । वसुधां भूमिं विलिखति कृषति । कर्पूरषण्डान् घनसारतरुनिचयान् छित्त्वा खण्डयित्वा कोद्रवाणां कोरदूषकाणां वृतिमावरणं समन्तात्परितः कुरुते रचयति । एतानि स्थाल्योक्तानि त्रीणि कर्माणि यथात्यन्तासंगतानि तथा कर्मभूमौ तपोविषयान्यकर्मानुष्ठानं अत्यन्तासंगतमित्यर्थः ॥ [ स्रग्धरा ]

[ना१. कोशे नास्ति] १) तु१. स्थाल्या । तु१. वैडुर्य°; तु२. वैदुर्य°; ना ३–५. रा. ते. वैदूर्य° । सु. ना२. तिलखलिं; सु१. ना३. तिलकणं; सु२.३. च लशुनं; ग्र१. म१–३. तिलगणं; ग्र२ (मू). तिलखिलं; म४.५. तिलमलं । तु. ग्र१.३. म. चन्दनैर् । तु१. सु. इन्धनाद्यैः; ते. ग्र१. म. इन्धनोघैः; ग्र२ (मू). इन्दनोघैः । — २) तु२. ना२. विलखति; ते१. विलिखत– । तु २. कर्ममूलस्य; सु२. –कर्मतूलस्य; ना२. अर्कमूलस्य । — ३) ना३. ग्र२.३. कर्पूरषण्डान् । तु. कृषिमिव; सु. कृषिमिह; ग्र५. वृतिमिव; म३. वृतिरिह (वृतिमिह) । —४) ना४. रा. ते. ग्र४. भजति (चरति) ॥

भ. ७२२६ (३३११) । सु. ३०४५ । सुभा. पृ० ९५.१२७ । सुर. पृ० ७७.१० (भर्तृ°) ॥

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु संचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ९७ ॥

नैवाकृतिरिति ॥ आकृतिराकारो नैव फलति। कुलमभिजनो नैव फलति। शीलं सद्वृत्तं च न फलति। विद्या वेदशास्त्रादिरपि न फलति। यत्नेनोद्योगेन कृता सेवा आश्रयवृत्तिरपि न फलति। यदि सौन्दर्यकुलशीलादिकं न फलति तर्हि किं फलतीत्याह। पूर्वेण पुरातनेन तपसा अहिंसाब्रह्मचर्यादिना संचितानि संगृहीतानि भाग्यान्यदृष्टानि पुरुषस्य यथैव वृक्षास्तरवः काले समये फलन्ति पच्यन्ते तथैव काले फलन्ति ॥ [ वसन्ततिलका ]

१) तु२. भवति (फलति)। तु१. च शीलं। —२) ना२. विद्या च नैव; म५. विद्या न चैव। ते१. च न यत्न°। —३) ग्र१. म१–३. पुण्यानि (भाग्यानि)। ना१. पूर्वतपसां। तु. सु. किल; ना१. फल– (खलु)। —४) तु१. पुरणस्य (पुरुषस्य)। म४.५. यथा हि ॥

भ. ३८२५ (१६४८); सुभाष. १०८; विक्रमचरित्रे १७३ (२६३)। सु. ३१०० (अश्वघोषस्य)। सुर. पृ० ७६.६ (सभातरङ्गे)। सुभा. पृ० ९२.७२ (अश्वघोषस्य)। सूहा. ३४.५० (विदग्धजनवल्लभायां)। तन्त्राख्यायिकायां २.११५। प्रबन्धचिन्तामणौ ३.१७०। गरुडमहापुराणे (उपजातिवृत्ते) ११३.५२ ॥

मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवनं च सकला विद्याः कलाः शिक्षतु।
आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः॥९८॥

मज्जत्विति। अयं लोकः अम्भसि जले मज्जतु मग्नो भवतु। मेरोः सुरालयस्य शिखरं शृङ्गं यातु गच्छतु। आहवे समरे [ शत्रून्विपक्षान् ] (शक्त्या बलेन) जयत्वभिभवतु। वाणिज्यं वणिक्कर्म कृषिः कर्षणं सेवनं प्रभुपरिचर्या [ च तयोः समाहारः कृषिसेवनं ] एतान्यादिर्यासां ताः सकलाः सर्वा अपि चतुःषष्टिकला विद्याः शिक्षतु अभ्यस्यतु। खगवत् विहंग इव परमुत्कृष्टं प्रयत्नं प्रयतनं कृत्वा विधाय विपुलं विस्तृतं आकाशं गगनं प्रयातु व्रजतु। तथापीह संसारे कर्मवशतः सुकृतदुष्कृतवशात् अभाव्यं अभवितव्यं न भवति। भाव्यस्य भवितव्यस्य नाशोऽभावः कुतः। उक्तं च।

"यदभावि न तद्भावि भावि चेन्न तदन्यथा।
इति चिन्ताविषण्णोऽयमगदः किं न पीयते ॥
(°विषण्णो यस्तस्य वै किं न विद्यते–पा०) ॥
अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम्।
सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते" ॥ [ शार्दूलविक्रीडितम् ]

१) तु. सु३. म४. शत्रुं; ना१. शूरं; ना३.४. ग्र२.३. शक्त्या (शत्रून्)। तु२. जयत्वाहवे। —२) सु. ना१–४. ग्र२–५. °सेवनादि; ना५. रा. ते. °सेवने च। ना१. ग्र४. म३. सकलं। तु१. विद्याः खलाः। —३) म२. त्यक्त्वा। म२. परान्; म५. वरं (परं) ॥

भ. ४६५४ (२०८५); शतकावली ८६ । शा. ४३८ (भर्तृ°) । सुर. पृ० ७२.२० (भर्तृ°) । सुभा. पृ० ९४.११६ ॥

वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि ॥९९॥

वन इति ॥ वने अरण्ये वा रणे संग्रामे वा शत्रूणां वैरिणां जलस्योदकस्य अग्नेर्वह्नेर्मध्ये वा महत्यर्णवे समुद्रे वा पर्वतस्य शैलस्य मस्तके मूर्ध्नि वा सुप्तं शयालुमपि वा प्रमत्तमनवहितं वा विषमे स्थाने चोरव्याघ्रादिसंकुले स्थितं वा पुराकृतानि जन्मान्तरानुष्ठितानि पुण्यानि सुचरितानि रक्षन्ति पान्ति। एकं भागधेयं मुक्त्वा नान्यच्छरणमस्तीत्यर्थः ॥ [ उपजाति ]

१) म१.२. वने जने; म३. परे वने । —२) तु. ग्र२.३. म३. °मस्तके च; ना१. °संकटे वा; ते२. °कन्दरायां; म४. °मस्तकेव । —३) ग्र४. °स्थले (°स्थितं) । तु. ग्र४. च (वा) । —४) म२. पुरातनानि ॥

भ. ५९३३ (२७२०); सुभाष्. ११०; विक्रमचरित्रे ४२ । सुभा. पृ० ९२.५६ । सुर. पृ० ७६.७ (सभातरङ्गे ) । सुभाषितार्णवे २४.६३ ॥

अमुमेवार्थं फणित्यन्तरेणाह ।

भीमं वनं भवति तस्य पुरं प्रधानं
सर्वो जनः स्वजनतामुपयाति तस्य ।
कृत्स्ना च भूर्भवति संनिधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ १०० ॥

भीममिति ॥ यस्य नरस्य पुंसो विपुलं महत्पूर्वसुकृतं पुरातनसुचरितमस्ति तस्य भीमं भयंकरं वनमरण्यं प्रधानमुत्तमं पुरं पत्तनं भवति । सर्वो जनः समस्तो लोकः (सद्यः तत्क्षणे) [तस्य] स्वजनतां बन्धुत्वमुपयाति प्राप्नोति । कृत्स्ना अखिला भूः धरित्री संनिधौ समीप एव रत्नैः पद्मरागादिमणिभिः श्रेष्ठैश्च वस्तुभिः पूर्णा पूरिता भवति । यदि पुराकृतं सुकृतं न विद्यते तदानीं प्रधानं पुरमपि भीमं वनं भवति । सर्वोऽपि जनः शत्रुतामुपयाति । कृत्स्ना च भूः शून्या भवतीति व्यतिरेकफलमपि ज्ञातव्यम् । उक्तं च ।

"पृथिव्यामन्नपूर्णायां वयमन्नस्य काङ्क्षिणः ।
सौमित्रे नूनमस्माभिर्न ब्राह्मणमुखे हुतम् ॥" इति ॥

[ वसन्ततिलका ]

इति भर्तृहरिनीतिशतकं सटीकं समाप्तम् । दक्षिणामूर्तये नमः ।
शुभमस्तु । श्रीपद्मनाभो रक्षतु ।

१) ना३.४. विशतु (भवति)। ना३–५. रा. ग्र५. यस्य। ते१. पुरप्रधानं। —२) तु. ना१. २. ते२.ग्र४. सर्वे जनाः। तु. सु. ग्र१. म३.५. सुजनताम् (स्वजनताम्)। तु. ना१.२. ते२. ग्र४. उपयान्ति। सु२. यस्य; ग्र२.५. सद्यः (तस्य)। —३) ना५. कृत्वा च। म५. भूमिवति (भूर्भवति)॥

म. ४५९४ (२०५१); सुभाष. ४१। सुभा. पृ० ९२.७४॥

## नीतिशतके दशमपद्धतौ अधिकश्लोकाः॥

अज्ञं कर्माणि लिम्पन्ति तज्ज्ञं कर्म न लिम्पति।
लिप्यते रसनैवैका सर्पिषा करवद्यथा॥ १॥

[ना१. नीति. ९६]

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी।
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता॥ २॥

[ना२. नीति. १०.११; अडयार् २९ ई२. नीति. ४.२.] [म. १५६८ (६११)। सुभा. पृ० १६१.३७५। चाणक्यनीतिदर्पणे १३.१८। सुभाषितार्णवे १५.८।]

आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः।
नास्त्युद्यमसमो बन्धुर्यत्कृत्वा नावसीदति॥ ३॥

[ना२. नीति. १०.१२; अडयार् २९ ई२. नीति. ३.४.] [म. १०३० (३८९); संस्कृतपाठ पृ० ६२। सुर. पृ० ७४.७ (भर्तृ°)। सुभा. पृ० ८३.१५।]



# शृङ्गारशतकम् ।

श्रीगुरुभ्यो नमः अविघ्नमस्तु । १ । स्त्रीप्रशंसा ।

शंभुस्वयंभुहरयो हरिणेक्षणानां
येनाक्रियन्त सततं गृहकुम्भदासाः ।
वाचामगोचरचरित्रपवित्रिताय
तस्मै नमो भगवते मकरध्वजाय ॥ १ ॥

शंभ्विति ॥ येन {मकरध्वजेन-रा-} (कुसुमायुधेन) शंभुस्वयंभुहरयः कपर्दिपरमेष्ठिपद्मनाभाः सततं सार्वकालं हरिणेक्षणानां मृगदृशां गृहकुम्भदासाः गृहेषु घटभारवाहाः अक्रियन्त व्यधीयन्त । वाचां गिरां अगोचरेण अविषयेण चरित्रेण धृत्तेन पवित्रिताय पाविताय भगवते तस्मै मकरध्वजाय मन्मथाय नमः नमस्क्रिया । यः हरहिरण्यगर्भहरीनपि नारीपरवशान्कृतवान् तथाविधो मदनः सर्वेषां लोकानां वन्द्यः । भगवत इत्यत्र भगशब्देन 'भगश्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः । ते अस्य सन्तीति भगवान् तस्मा इत्यर्थः ॥ [ वसन्ततिलका ]

[ ना५. कोशेऽयं श्लोको नास्ति ] १) तु. हरिणेक्षणीनां । —२) तु१.२ (टी). सु. म४.५. °कर्मदासाः; ते२. °कुम्भवासाः । —३) तु. सु. ना४. रा. ते. °चरित्रविचित्रिताय; म४.५. विचित्रचरित्रकाय । —४) ना१. म४.५. कुसुमायुधाय (मकर°) ॥

भ. ६४०८ (२९५७); शतकावलौ ६१ । सुभा. पृ० २५०.१२ । सुर पृ० १२५.१ (भर्तृ°) ॥

स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः ।
वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु बन्धनं स्त्रियः ॥२॥

स्मितेनेति ॥ स्मितेन ईषद्धासेन भावेन प्रेम्णा लज्जया व्रीडया भिया साध्वसेन पराङ्मुखैः पराचीनैः अर्धकटाक्षवीक्षणैः लेशापाङ्गावलोकनैः वचोभिर्भाषितैः ईर्ष्याकलहेन अक्षान्तिविग्रहेण लीलया क्रीडया चेत्येवंरूपैः समस्तभावैः संचारिभिरतिहासादिभिः स्त्रियो बन्धनं प्रसिद्धं खलु ॥ [ वंशस्थम् ]

१) रा (टी.पा). हावेन; प्र४. हासेन (भावेन) । ना५. रा (टी.पा) प्र१. म२.३. गुणैः (भिया) । —२) तु. सु. °वीक्षितैः । — ४) तु१. स्त्रिया ॥

भ. ७२६१ (३३१९) । सु. ३३८३ । सुर. पृ० २७१.९ (भर्तृ°) । सुभा. पृ० २५१.३७॥

भ्रूचातुर्यात्कुञ्चिताक्षाः कटाक्षाः स्निग्धा वाचो लज्जितान्ताश्च हासाः ।
लीलामन्दं प्रस्थितं च स्थितं च स्त्रीणामेतद्भूषणं चायुधं च ॥ ३ ॥

भ्रूचातुर्यादिति ॥ भ्रुवोश्चातुर्यात्पेशलतया कुञ्चिताक्षाः कुण्डलीकृतनेत्राः कटाक्षाः अपाङ्गविलोकितानि। स्निग्धा मसृणा वाचो गिरश्च लज्जितान्ता व्रीडितावसाना हासा हसितानि च। लीलया विलासेन मन्दमलसं प्रस्थितं गमनं च स्थितमवस्थानं चेत्येतत् स्त्रीणां भूषणं आभरणमायुधं च। दर्शनीयत्वाद्भूषणं, पुंसां व्यथाजनकत्वादायुधम् ॥ [ शालिनी ]

१) तु. म१–३. °र्यांकुञ्चि°; म४.५. °र्यं कुञ्चि°। ग्र४. कुञ्चितान्तान्ताः; म४. कुञ्चितार्धाः। —२) ग्र४. लक्षितान्ताश्च; म३. लज्जितास्ते च। —३) ग्र४. लीलामन्दप्र° ॥

भ. ४६४६ (२०८१)। शा. ३९५४ (भर्तृ°)। सु. २२२७ ( कविपुत्रौ )। सुभा. पृ० २५१.४१ (भर्तृ°)। सुर. २७०.६ (भर्तृ°) ॥

क्वचित्सभ्रूभङ्गैः क्वचिदपि च लज्जापरिगतैः
क्वचिद्भूरित्रस्तैः क्वचिदपि च लीलाविलसितैः।
कुमारीणामेतैर्मदनसुभगैर्नेत्रवलितैः
स्फुरन्नीलाब्जानां प्रकरपरिकीर्णा इव दिशः ॥ ४ ॥

क्वचिदिति ॥ क्वचित्कुत्रचित्सभ्रूभङ्गैः भ्रुकुटिसहितैः क्वचिदपि लज्जया व्रीडया परिगतैः प्राप्तैः क्वचिद्भूरित्रस्तैः (त्रासैः) बहुलसाध्वसयुक्तैः क्वचिदपि च लीलया शृङ्गारचेष्टया विलसितैः शोभमानैः मदनसुभगैर्मन्मथेन रम्यैः। एतैः कुमारीणां कन्यानां नेत्राणां नयनानां वलितैः परिवर्तितैः दिशः ककुभः स्फुरतां प्रकाशमानानां नीलाब्जानामिन्दीवराणां प्रकरैः समूहैः परिकीर्णा व्याप्ता इव ॥ [ शिखरिणी ]

१) तु. सु. ना२. म४.५. सुभ्रूभङ्गैः। —२) तु. सु२. भीतित्रस्तैः; ना१.३.४. ग्र२.३.५. भूरित्रासैः; ना५. भ्रूविन्यासैः; म४.५. त्रस्तापाङ्गैः (भूरित्रस्तैः)। —३) तु. सु१. ग्र४. म३. नयन°; ना१. म४.५. वदन° (मदन°)। ना५. °विभवैः (°वलितैः)। —४) तु. सु. स्फुरल्लोला°। म३. °परिपूर्णा इति दिशः। तु२. सु. ना१.२.५. दशः (दिशः) ॥

भ. १९८६ (७७१); शतकावलौ ६१। सुभा. पृ० २५३.२९ ॥

वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने
वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानां चयः।
वक्षोजाविभकुम्भविभ्रमहरौ गुर्वी नितम्बस्थली
वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥५॥

वक्त्रमिति ॥ चन्द्रवि[कासि चन्द्रवद्विकसनशालि](लासि चन्द्रवद्विलासि) रम्यं वक्त्रं मुखम्। पङ्कजपरीहासक्षमे कमलाधिक्षेपशक्ते लोचने नयने। स्वर्णं हाटकम्।

अपाकरिष्णुः क्षिप्तुः । 'अलंकृतनिराकृते'त्यादिना इष्णुच् । 'न लोके'त्यादिना षष्ठीप्रतिषेधः । वर्णः शरीरवर्णः । अलिनीजिष्णुः भृङ्गाङ्गनापरिभूष्णुः । कचानां कुन्तलानां चयः कलापः । इभस्य गजस्य कुम्भयोः शिरःपिण्डयोर्विभ्रमं विलासं हरत इति तथोक्तौ । वक्षोजौ स्तनौ । गुर्वी दुर्वहा नितम्बस्थली । स्त्रीकटिपश्चाद्भागभूमिः । वाचां गिरां हारि वल्गु मार्दवं सौकुमार्यं चेत्येतत् सर्वं युवतिषु तरुणीषु स्वाभाविकमकृत्रिमं मण्डनं भूषणम् ॥ [ शार्दूलविक्रीडितम् ]

१) तु. सु. °विडम्बि; ना१. °विलास–; ना५. प्र२.३. म१.२. °विलासि ( °विकासि ) । प्र४. वारिज° ( पङ्कज° ) । तु१. °परीहासाक्षमे । —२) प्र१. म३. वर्णं । सु. अलिनीर्; ना१. आलिनां; प्र१. म३. –रजनी; प्र४. अलिनो ( अलिनी– ) —३) म१–३. °विभ्रमकरौ । म३. गर्वी ( गुर्वी ) । —४) तु. वाचा–; म३. द्राचां ॥

भ. ५८९६ (२६९६) । सुभा. पृ० २५४.४३ । सुर. पृ० २७१.१७ ( प्रसङ्गरत्नावल्याम् )॥

स्मितं किंचिन्मुग्धं सरलतरलो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतानामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिव न हि रम्यं मृगदृशः ॥ ६ ॥

स्मितमिति ॥ तारुण्यं यौवनं स्पृशन्त्याश्चुम्बन्त्या मृगदृशो हरिणाक्ष्याः संबन्धि चेष्टितं किमिव न रम्यम् । सर्वमपि मञ्जुलं हि । तदेव रम्यं चेष्टितमाह । स्मितं मन्दहासः किंचिन्मुग्धं ईषत्प्रौढम् । दृष्टेरवलोकनस्य विभवः संपत्सरलतरलः अजिह्मचलः । वाचां गिरां परिस्पन्दो रचना अभिनवाभिर्नूतनाभिर्विलासोक्तिभिः विलापितैः । रसेन सह वर्तत इति सरसः मधुरः । गतानां गमनानामारम्भ उद्योगः किसलयितलीलापरिकरः पल्लवितलीलाप्रकरः । इवेति वाक्यालंकारे ॥ [ शिखरिणी ]

१) तु. सु१.२. ना२. किंचिद्वक्रं; सु३. किंचिद्वक्रे; ते१. मुग्धं किंचित् । प्र१. म. तरलतरलो । —२) ते१. °विलासोपि; प्र४. म१.२. °विलासैक– ( °विलासोक्ति– ) । तु. –सुरसः; ना२. –रसिकः; प्र४. –चतुरः । म१.२. –निलयः; म४. –करसा ( –सरसः ) । —३) तु. सु. गतीनाम्; प्र१. म१–३. रतानाम् । ना२. किसलयसलीला–; प्र१. म३. कलयितसुलीला–; म४.५. करिकलभलीला– । —४) ना२. ते१. प्र१. किमिह । तु२. सु. न हिरण्यं; ना१. प्र२.३.५. हि न रम्यं; ना२. न हि न रम्यं । ना१. मृगदृशाम् ॥

भ. ७२६० (३३१८) । सु. २२३६ । ध्वन्यालोके ४ ( का० २५. पृ० २९४ ) । सुभा. पृ० २५५.९ । सुर. पृ० २८५.२ (भर्तृ°) । अलंकारमहोदधौ १५२ । साहित्यमीमांसायां ६ ( पृ० १०० ) । हेमचन्द्रस्य काव्यानुशासने ७ ( का० ७१, पृ० ३१० ) ॥

द्रष्टव्येषु किमुत्तमं मृगदृशः प्रेमप्रसन्नं मुखं
घ्रातव्येष्वपि किं तदास्यपवनः श्राव्येषु किं तद्वचः ।
किं स्वाद्येषु तदोष्ठपल्लवरसः स्पृश्येषु किं तद्वपु-
र्ध्येयं किं नवयौवनं सहृदयैः सर्वत्र तद्विभ्रमाः ॥ ७ ॥

द्रष्टव्येष्विति ॥ द्रष्टव्येषु दर्शनीयेषूत्तमं श्रेष्ठं किमिति प्रश्नः । मृगदृशो हरिणाक्ष्याः प्रेमप्रसन्नं प्रेम्णा स्वीकृतं मुखं वदनमित्युत्तरम् । घ्रातव्येषु घ्रेयेष्वपि किमुत्तममिति प्रश्नः । तस्या मृगदृश आस्यपवनो मुखमारुत इत्युत्तरम् । श्राव्येषु श्रोतव्येषु किमुत्तममिति प्रश्नः । तद्वचस्तस्या वचनमित्युत्तरम् । स्वाद्येष्वास्वादनीयेषु किमुत्तममिति प्रश्नः । तदोष्ठपल्लवरसः तस्या अधरकिसलयसार इत्युत्तरम् । स्पृश्येषु स्पर्शनीयेषु किमुत्तममिति प्रश्नः । तद्वपुस्तस्याः शरीरमित्युत्तरम् । ध्येयं ध्यातव्यं किमिति प्रश्नः । [ नवयौवनं नूतनतारुण्यमित्युत्तरम् ] ( नवयौवने नूतनतारुण्ये ) सहृदयैरनन्यमनस्कैः कर्तृभिः सर्वत्र सर्वस्मिन्नपि स्थाने तस्या विभ्रमाः विलासा ध्येया इत्युत्तरम् । अपीति सर्वत्र संबन्धः । नेत्रघ्राणश्रवणरसनस्पर्शनध्यानानां ( ध्येयानां ) षण्णामपीन्द्रियाणां विषयास्तस्यामेव सन्तीत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) ना२. मृगदृशां । —२) तु. सु. म४.५. च ( अपि ) । ते२. °पवनं । म३. तद्वयः । —३) तु१. सु. ग्र४. आस्वाद्येषु; तु२. अस्वाद्येषु; ना१.२.४. ग्र२.३. कः स्वाद्येषु । ना२. पश्येषु ( स्पृश्येषु ) । तु. तत्तनुर् । —४) ग्र२.३. °यौवने; म२. °यौवनो । तु. सु१.२. सुहृद्यैः; ना२. किमपरं; ग्र१. म३. च हृदये; म४. सहृदये । म४.५. स्त्रीणां विलासान्वितं । तु. सु. ना३–५. ग्र५. तद्विभ्रमः; ग्र१. तद्विभ्रमं ॥

भ. २९९९ (१२६५); प्रसङ्गाभ° १४ । सुभा. पृ० २५२.५५ । सुर. पृ० २७१.१२ (भर्तृ°) ॥

एताश्चलद्वलयसंहतिमेखलोत्थ-
झंकारनूपुररवाहृतराजहंस्यः ।
कुर्वन्ति कस्य न मनो विवशं तरुण्यो
वित्रस्तमुग्धहरिणीसदृशैः कटाक्षैः ॥ ८ ॥

एता इति ॥ चलतां कम्पमानानां वलयानां करभूषणानां संहतेः समूहात् मेखलाया रशनायाश्च सकाशादुत्तिष्ठन्तीति चलद्वलयसंहतिमेखलोत्थाः । झंकारैर्नूपुराणां रवैः मञ्जीराणां शब्दैराहृता आकारिता राजहंस्यो राजहंसानां स्त्रियो याभिस्ता एतास्तरुण्यो युवतयो वित्रस्ताभिर्विविग्नाभिर्मुग्धाभिरप्रौढाभिर्हरिणीभिः मृगीभिः सदृशैस्तुल्यैः । मृगीकटाक्षतुल्यैरित्यर्थः । कटाक्षैरपाङ्गविलोकितैः साधनैः कस्य पुरुषस्य मनश्चित्तं परवशं न कुर्युर्न विदधीरन् । सर्वेषामपि मनः परवशं कुर्वन्ती(कुर्युरि)त्यर्थः ॥ [ वसन्ततिलका ]
नी० श० ९ (भ० श०)

१) म४. एकाश्व° । सु१.३. °मेखलेत्थं; ते. °मेघलोत्थ° । —२) ना२. °झुंकार° । तु. सु. °रवाजित°; रा. ते. म४.५. °पराजित°; ग्र३ (मू). रवामृत°; ग्र५. °रवाहत°; म३. °वराहृत° (रवाहृत°)। तु. °राजहंसा; सु. ना१.४. ग्र४. म१.२. °हंसाः; ग्र२ (मू). °हंस्याः; ग्र३ (मू). °हंस्युः। —३) तु. सु. विकचं; ग्र२(मू). –धिवशं । तु. तरुण्याः । —४) तु. सु. °सदृशाक्षपातैः; ग्र५. °सदृशाक्षिपातैः ॥

भ. १४५६ (५७३) । सुभा. पृ० २५३.२५ ॥

कुङ्कुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ।
नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ॥ ९ ॥

कुङ्कुमेति ॥ कुङ्कुमस्य घुसृणस्य पङ्कः कर्दमस्तेन कलङ्कितः पाटलीकृतो देहो यस्यास्तथोक्ता । गौरयोः पीतयोः पयोधरयोः स्तनयोरधिकरणयोः लम्बिता लम्बमाना हारा मुक्तावल्यो यस्याः सा तथोक्ता । नूपुराभ्यां मञ्जीराभ्यां हंसाभ्यां पादकटकाभ्यां रणती पदपद्मे पादपङ्कजे यस्यास्तथोक्ता रामा रमणी भुवि भूमौ कं पुरुषं न वशीकुरुते । सर्वमपि जनं वशीकरोतीत्यर्थः ॥ [दोधकम्]

२) ग्र१. म३. तुङ्ग° (ग्र१. गौर° इत्यपि); ग्र४. पीन° (गौर°) । ना१.३.४. ग्र२.३. °लम्बित–; ग्र५. °चञ्चल– (°कम्पित)— ३) म४.५. नूपुररत्न° । ग्र१. म३. °लसत्–(ग्र१. °रणत्– इत्यपि) ॥

भ. १७८७ (६९१) । सु. १२७५ । सुभा. पृ० २५३.१३ । सुर. पृ० २७१.११ (भर्तृ°) ॥

नूनं हि ते कविवरा विपरीतवाचो
ये नित्यमाहुरबला इति कामिनीस्ताः ।
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ॥ १० ॥

नूनमिति ॥ ये कविवराः काव्यकर्तृश्रेष्ठाः याः कामिनीर्वामलोचनाः अबला बलहीना इति नित्यं संततमाहुर्वदन्ति । ते कविवरा विपरीतवाचः असत्यवचनाः । नूनं निश्चये । 'नूनं निश्चयतर्कयो'रित्यमरः । हि यस्मात्कारणात् शक्रादयः इन्द्रमुखा अपि याभिस्तरुणीभिर्विलोलतरतारकदृष्टिपातैः अतिचपलकनीनिकावदृष्टिपातैः करणैः विजिताः पराभूतास्ताः स्त्रियः कथमबलाः । सबला एवेत्यर्थः ॥ [वसन्ततिलका]

१) म२. सुकवयो (कविवरा) । तु.सु. ग्र४.५. म४.५. °रीतबोधा । —२) तु. ना२. कामिनीनां; सु कामिनीर्हि; ना३.४. ग्र२.३. कामिनीर्याः; ना५. कामिनीति । —३) ग्र.१. म३. यासां; ग्र२ (मू). ताभिर् (याभिर्) । ग्र४. म४. °कातर° (°तारक°) । —४) म२. ईशाद° (शक्राद°) । तु. अबलाः; ना२. ह्यबलाः (स्वबलाः) ॥

म. ३८०४ (१६३५)। सु. १२८७। सुभा. पृ० २५२.४२। सुर. पृ० २७२.२० (भर्तृ°)॥

नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः ।
यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ ११ ॥

नूनमिति ॥ मकरध्वजो मदनस्तस्याः सुभ्रुवः सुन्दर्या आज्ञाकरो निदेशकारी। नूनं निश्चयः। यतः यस्मात्कारणात् तन्नेत्रसंचारसूचितेषु तस्या नेत्रयोर्नयनयोः संचारेण प्रचारेण सूचितेषु निर्दिष्टेषु प्रवर्तते संचरति। तस्मान्मकरध्वजः सुभ्रुव आज्ञाकर एव ॥ [ अनुष्टुप् ]

२) ग्र१. म१-४. सुदृशो ( सुभ्रुवो )। —३) तु. यस्तद्भ्रूभङ्ग°; सु. यत्तद्भ्रूभङ्ग°; ना२. यद्भ्रूभङ्गनेत्र°; ना५. यन्नेत्र° ( यतस्तन्नेत्र° )। तु.सु. °संचारैः; ना२. °संचारः ॥

म. ३८०७ (१६३७)। शा. ३२९८। सु. १२२७। कवीन्द्रवचनसमुच्चये २३७। सूमु. ५३.१०। सुभा. पृ० २५९.६०। सुर. पृ० २७५.१ (पृ० १२६.२)॥

केशाः संयमिनः श्रुतेरपि परं पारंगते लोचने
अन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः ।
मुक्तानां सतताधिवासरुचिरौ वक्षोजकुम्भाविमा-
वित्थं तन्वि वपुः प्रशान्तमपि ते रागं करोत्येव नः ॥१२॥

केशा इति ॥ हे तन्वि कृशाङ्गि ते तव केशाश्चिकुराः संयमिनः बद्धाः ऋषयश्च। ते लोचने नेत्रे श्रुतेः श्रवणस्य पारं तीरं गते प्राप्ते वेदपारं गते च ते। अन्तर्वक्त्रं वदनकुहरमपि स्वभावशुचिभिः स्वतःसिद्धशुभ्रैः स्वरूपतः पवित्रैः द्विजानां दन्तानाम्। 'दन्तविप्राण्डजा द्विजा' इत्यमरः। ब्राह्मणानां गणैः समूहैः पूर्णं व्याप्तम्। ते इमौ वक्षोजकुम्भौ स्तनकलशौ मुक्तानां मौक्तिकानां निष्कर्मणां सतताधिवासरुचिरौ संततनिवाससुभगौ। ते वपुः शरीरं प्रशान्तमपि नितान्तशान्तमपि नः अस्माकं तापं मदनज्वरदाहं करोति रचयत्येव। ते केशाः संयमिनः। ते लोचने श्रुतिपारंगते। ते वदनमध्यं द्विजगणावृतम्। ते कुचौ मुक्तास्पदौ। एवमपि मां बाधन्ते। इत्यनेन त्वदवयवसौन्दर्यं दृष्ट्वा अहं धैर्यं ग्रहीतुं न शक्नोमि। तस्मान्मामनुगृहाणेति तात्पर्यम् ॥ [ शार्दूलविक्रीडितम् ]

२) सु. ऽप्यन्तर्; ना२. ग्र१.५. म१-३. चान्तर्; ग्र४. त्वन्तर् ( अन्तर् )। ना१.३-५. ग्र२.३. पूर्णं ( कीर्णं )। ना१. गुणैः; ना२. गणौ। —३) तु. सु. म४.५. °रुचिरं वक्षोजकुम्भद्व —४) तु. सु. हीत्थं; म४.५. चित्रं ( इत्थं )। ना१.३.४. ग्र२-४. तापं ( रागं ) ॥

म. १९३६ (७३९)। सुभा. पृ० ३१४.६९। सुर. पृ० २८५.३ (भर्तृ°) ॥

मुग्धे धानुष्कता केयमपूर्वा त्वयि दृश्यते ।
यया विध्यसि चेतांसि गुणैरेव न सायकैः ॥ १३ ॥

मुग्ध इति ॥ हे मुग्धे उदययौवने अपूर्वा पूर्वं न दृष्टा इयं त्वयि वर्तमाना धानुष्कता धनुर्धरत्वं का । इत्थमिति वक्तुं न शक्या सती दृश्यते । मयेति शेषः । अपूर्वत्वमेव विशिनष्टि । ययेति । यया धानुष्कतया कर्त्र्या गुणैर्मौर्वीभिरेव सुगुणैरेव करणैः चेतांसि चित्तानि विध्यसि वेधनं करोषि । सायकैर्बाणैस्तु न विध्यसि । धानुष्कस्य बाणैर्मर्मवेधनं लोकप्रसिद्धम् । एतस्या धानुष्कतायास्तु गुणैर्मनोवेधनमुक्तम् । इत्यनेन इयं बाला स्वसौन्दर्यादिगुणैरेव सकललोकचित्ताकर्षिणी जातेति तात्पर्यम् ॥ [ अनुष्टुप् ]

२) ग्र१. म३. पूर्वता ( अपूर्वा ) । तु. ना२. तव; ते१. दृषि ( त्वयि ) । —३) ना१. विन्ध्यसि; म१.३. विध्यति । —४) ना५. गणैरेव ॥

भ. ४८९२ (२२१४); शतकावली ६३; सुभाष्. १३ । शा. ३६५४ । सु. २०२५ । सूसु. ७४.१८ । सुभा. पृ० ३१२.१ ॥

सति प्रदीपे सत्यर्के सत्सु तारामणीन्दुषु ।
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ १४ ॥

सतीति ॥ प्रदीपे प्रकृष्टदीपे सति । अर्के सूर्ये सत्यपि । तारामणीन्दुषु नक्षत्ररत्नचन्द्रेषु सत्सु । एतेषु विद्यमानेषु सत्स्वित्यर्थः । मे मम मृगशावाक्ष्याः मृगीदृशा विना अन्तरेण इदं परिदृश्यमानं जगत् लोकः तमोभूतमन्धीभूतम् । तरुणीमन्तरेण मे सकलं जगदन्धकारमिव तिष्ठतीत्यर्थः ॥ [ अनुष्टुप् ]

१) रा. ते. सत्यग्नौ ( सत्यर्के ) । —२) तु. तारासु चन्द्रमा । —३) ते१. तन्–; म४.५. तु (मे) । ना१.२. ग्र१–३. मृगशावाक्ष्यास् ॥

भ. ६७०० (३३१८); काव्यसं° १५ । सु. १२३५ । अमरुशतके १५३ । सुभा. पृ० २७७.९ ( अमरुकस्य ) ॥

उद्वृत्तः स्तनभार एष तरले नेत्रे चले भ्रूलते
रागाधिष्ठितमोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् ।
सौभाग्याक्षरपङ्क्तिरेव लिखिता पुष्पायुधेन स्वयं
मध्यस्थापि करोति तापमधिकं रोमावली केन वा ॥ १५ ॥

उद्वृत्तेति ॥ उद्वृत्तः उन्नतवर्तुल उद्धतश्च । एषः स्तनभारः कुचभारः तरले लोले चापल्ययुक्ते च नेत्रे नयने । चले चञ्चले चपलस्वभावे च । भ्रूलते भ्रूवल्यौ

{ रागाधिष्ठितं रागेण लौहित्येन मात्सर्येण चाधिष्ठितं तद्भूयिष्ठमित्यर्थः । -रा- } ( रागावेष्टितं रक्तिमावृतं मात्सर्याविष्टं च ) इदमोष्ठपल्लवं अधरकिसलयं { व्यथां मनःपीडां कुर्वन्तु नाम नामेति कुत्सायाम्-रा- } (कामव्यथां मन्मथबाधां प्रकृष्टपीडां च) कुर्वन्तु विदधतु । पुष्पायुधेन मदनेन सौभाग्याक्षरपङ्क्तिरेव सौन्दर्यवर्णराजिरेव लिखिता रोमावली रोमपङ्क्तिः स्वयं मध्यस्थापि अवलग्नस्थितापि मध्यस्थभावं गतापि [ केन वा हेतुना ] अधिकमत्यन्तं तापं बाधां करोति विदधाति । लोके उद्धताश्चपला अव्यवस्थामात्सर्याविष्टाः जनस्यात्यर्थं बाधां कुर्वन्ति । मध्यस्थस्तु न बाधते । हे वनिते तवोद्वृत्तः स्तनभारस्तरले नेत्रे चलद्भ्रूलते (रागावेष्टितमोष्ठपल्लवं) कामव्यथां कुर्वन्तु । तथैव पुष्पायुधेन लिखितैषा सौभाग्याक्षरपङ्क्तिरेव रोमराजिः स्वयं मध्यस्थाप्यधिकतापकारिणी जातेत्यनेन रोमावल्याः स्तननेत्रादिभ्योऽतिशयेन दर्शनीयत्वं मदनोद्दीपकत्वं च व्यज्यते ॥ [ शार्दूलविक्रीडितम् ]

१) तु. ना२. ते. म्र१-४. उद्वृत्त- । ना५. चञ्चचलद्- । म्र१. म३. नेत्रे च तद्-(नेत्रे चले) । —२) ना१.३.४. म्र२.३. रागावेष्टित° । तु१. °तदोष्ठ° ( °तमोष्ठ° ) । ना१. °पल्लवदलं । ना१. कामं; ना३.४. म्र२.३. म५. काम- ( नाम ) । —३) ना३.४. सौभाग्याधर° । तु. रा. ते. म्र४.५. म५. °मालिकेव; ना१. °पङ्क्तिरैव; ना२. °पङ्क्तिकेव । —४) तु२. तापमनिशं । ना३-५. रा. ते. रोमावलिः । तु२. ना१. मे; ना२. ते२. म४.५. सा; ते१. ता ( वा ) ॥

भ. १२५९ (४७२); शतकावली ६३ । सु. १३५४ । सक. २.७७.४ ( पृ० ११९ ) ॥

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ।
पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ १६ ॥

मुखेनेति ॥ सा रमणी चन्द्रकान्तेन चन्द्रवद्रम्येण चन्द्रकान्तमणिना च मुखेन आननेन महानीलैरत्यन्तश्यामलैरिन्द्रनीलैश्च शिरोरुहैः केशैः पद्मरागाभ्यां कमलारुणाभ्यां पद्मरागरत्नाभ्यां पाणिभ्यां हस्ताभ्यां रत्नमयीव श्रेष्ठस्वरूपेव रेजे बभौ । 'रत्नं मणौ च श्रेष्ठे चे'ति विश्वः । तस्या मुखादीनां चन्द्रकान्तादिविशेषणैः रत्नमयीत्वं द्योत्यते ॥ [ अनुष्टुप् ]

२) सु१.२. सरोरुहैः । —३) रा. ना३. कराभ्यां ( पाणिभ्यां ) । —४) ना२. रत्नमयैव सा ॥

भ. ४८८५ (२२११) । शा. ३३७१ । सु. १२३६ । सूमु. ५३.९७ ( शकवृद्धेः ) । सुभा. पृ० २७०.२ । सुर. पृ० २७२.१९ (भर्तृ°) ॥

गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ।
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ १७ ॥

गुरुणेति ॥ सा तरुणी गुरुणा अधिकेन स्तनभारेण भास्वता प्रकाश्य[श]मानेन मुखचन्द्रेण आननशशिना शनैश्चराभ्यां मन्दसंचाराभ्यां पादाभ्यां चरणाभ्यां ग्रहमयी ग्रहस्वरूपेव रेजे चकाशे । ग्रहमयीत्वमस्या गुरुचन्द्रभास्वच्छनैश्चरैः द्योतितम् ॥ [ अनुष्टुप् ]

[ अ४. कोशेऽयं श्लोको नास्ति ] २) ते२. मुखे चन्द्रेण । अ१. भासता । —३) ते१. स्तनै-स्तावां । —४) तु१, ग्राहमयीव; अ१. गृहमयीव ॥

भ. २१६९ (८६५) । कवीन्द्रवचनसमुच्चये २५५ । सु. १२३३ । सूसु. ५३.९३ । श्रीकृष्णकवेर्मन्दारमरन्दचम्प्वां १०.१७८ ( का० ५२. पृ० १४४ ) । सुभा. पृ० २७०.३ ( शङ्कुकस्य ) । सुर. पृ० २७१.१८ (भर्तृ°) ।

तस्याः स्तनौ यदि घनौ जघनं च हारि
वक्त्रं च चारु तव चित्त किमाकुलत्वम् ।
पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा
पुण्यैर्विना न हि भवन्ति समीहितार्थाः ॥ १८ ॥

तस्या इति ॥ तस्या रमण्याः स्तनौ पयोधरौ घनौ पृथुलौ यदि । जघनं कटिपुरोभागः हारि मनोहारि यदि । वक्त्रं मुखं चारु रम्यं यदि । हे चित्त मनः तव ते आकुलत्वं व्याकुलभावः किं किमर्थम् । तेषु स्तनादिषु तव ते वाञ्छा स्पृहा अस्ति यदि विद्यते चेत् । पुण्यं धर्मं कुरुष्व विधत्स्व । हि यस्मात्कारणात् समीहितार्था वाञ्छितार्थाः पुण्यैर्विना धर्ममन्तरेण न भवन्ति न विद्यन्ते । अनेन तस्याः स्तनजघनमुखसौन्दर्याधिक्यं तेष्वासक्तिश्च द्योत्यते ॥ [ वसन्ततिलका ]

[ तु कोशे. सु. टीकायां च पूर्वार्धस्थाने, पीनस्तनौ कनककुम्भमयौ सुचारु वक्त्रं तथैव जघनं रुचिराखिलाङ्गम् । ] १) अ४. तस्या; म४.५. यस्याः ( तस्याः ) । अ१. म३. भारि ( हारि ) । —२) सु. चित्तमिहाकुलं किम् । —३) ना२. पुण्यां कुरु; अ४. पुण्यं कृतं तु । तु२. तासु ( तेषु ) । —४) म२.४.५. फलन्ति ( भवन्ति ) । तु१. समेहितार्थाः; म४.५. समीहितानि ॥

भ. २५२९ (१०३६); शतकावलौ ६३ ॥

इमे तारुण्यश्रीनवपरिमलाः प्रौढसुरत-
प्रतापप्रारम्भाः स्मरविजयदानप्रतिभुवः ।
चिरं चेतश्चोरा अभिनवविकारैकगुरवो
विलासव्यापाराः किमपि विजयन्ते मृगदृशाम् ॥ १९ ॥

इम इति ॥ इमे परिदृश्यमानाः तारुण्यश्रीनवपरिमलाः यौवनलक्ष्मीनूतनसुरभयः तारुण्येनाभिरामा इत्यर्थः । प्रौढसुरतप्रतापप्रारम्भाः गाढरतिप्रतापोद्योगाः प्रौढरतिकरवाञ्छा इत्यर्थः । स्मरविजयदानप्रतिभुवः मन्मथजयदानलग्नकाः । 'स्युर्लग्नकाः प्रतिभुव' इत्यमरः ( मन्मथजयप्रदानदक्षाः ) । चेतश्चोराश्चित्ततस्कराः सकलजनमनोहरा इत्यर्थः । अभिनवविकारैकगुरवः नूतनचेष्टामुख्याचार्याः मृगदृशां स्त्रीणां विलासव्यापाराः लीलाव्यापाराः किमपि इत्थमिति वक्तुमशक्यं यथा तथा चिरमनेककालं विजयन्ते सर्वोत्कर्षेण वर्तन्ते ॥ [ शिखरिणी ]

१) तु सु. ग्र४. °परिमल-; ते२. °परिमिलाः । ग्र४. °प्रौढधुरता । —२) म४.५. °प्रदोष° (°प्रताप°) । ग्र४. °प्रारम्भ- । ग्र१. °मान° (°दान°) । —३) ना१.२. ग्र३. त्वभिनव° । ग्र४. म२.३. °विलासैकगुरवो । —४) ग्र१. म२.३. विशाल° (विलास°) । ग्र२ (मू). ४. किमिव (किमपि) । ग्र१. म३. मृगदृशः ॥

भ. ११२३ (३७५२) । सुभा. पृ० २५५.३० ॥

*प्रणयमधुराः प्रेमोद्गाढा रसार्द्रयुतास्तथा
भणितिमधुरा मुग्धप्रायाः प्रकाशितसंमदाः ।
प्रकृतिसुभगा विस्रम्भार्द्राः स्मरोदयदायिनो
रहसि किमपि स्वैरालापा हरन्ति मृगीदृशाम् ॥ २० ॥

प्रणयेति ॥ प्रणयमधुराः प्रणयेन प्रेम्णा मधुरा ललिताः प्रेमोद्गाढाः स्नेहपरिपूर्णाः [ रसार्द्रयुतास्तथा ] ( रसैः कृतनिर्भराः ) भणितिमधुराः भणनरम्याः मुग्धप्राया अतिसुन्दराः [ प्रकाशितसंमदाः ] { प्रकाशितः प्रकटीकृतः संमदो हर्षो यैस्ते -सु- } (प्रकाशितमन्मथाः प्रकटीकृतकुसुमायुधाः) । प्रकृतिसुभगाः स्वभावतो मनोहराः विस्रम्भार्द्राः विश्वासाप्लु( °सापर )ताः स्मरोदयदायिनः कामोदयदायिकाः मन्मथाविर्भावहेतवः मृगीदृशां हरिणेक्षणानां किमपि इत्थमपि [ मिति ? ] वक्तुमशक्यं । यद्वा किं वेदि [ वेति ? ] काकुः [ स्वैरालापाः ] { नर्मोक्तयः -रा- } ( स्मेरालापाः ईषद्धाससहितभाषितानि ) हरन्ति गृह्णन्ति । मे मनः इति शेषः ॥

[ म४.५. कोशयोः अड्यार् २२. बी. १० कोशे च नास्ति । १) तु. सु. ना१.५. प्रेमोद्गारा; ना४. रा. ते. ग्र४.५. प्रेमोदारा । तु. सु. रसादलसास्तथा; ना१. रसार्द्रयुतास्तदा; ना२. रसार्द्रतराः सुधा-; ना३.५. रा. ते. रसाश्रयतां गताः; ग्र१. रसार्द्रं यथा तथा; ग्र३. रसैः कृतनिर्भरा; ग्र४. रसोदयो यथा; ग्र५. रसाश्रयतां तथा; म१. रसार्द्रकराः सुधा-; म२. रसोदयधातवो; म३. रसार्द्रतया तथा । —२) तु. सु. भणित-; ना१. ग्र४. प्रणति-; ना३–५. रा. ते२. फणिति-; ते१. पणिति-; ग्र२. प्रणित- । म३. °मधुना । ग्र३. मुग्धाः प्रायाः । ना१.३. ग्र२.३.५. °मन्मथाः; ग्र१.४. म२.३. °संमताः ( °संमदाः ) । —३) ग्र२ (मू). प्रकृतिस्वभगा । तु१. सु. विस्रम्भार्हाः; तु२. विश्रम्भार्हाः; ना१. विश्रम्भार्द्राः; ना२. विश्वम्भार्द्राः; ते२. विस्रम्भद्राः; ग्र२. म१–३. विस्रम्भार्द्रा- । —४) म३. हरसि ( रहसि ) । सु. म३. कमपि ( किमपि ) । ना१.३.५. ग्र२.३. स्मेरालापा । ग्र४. जयन्ति ( हरन्ति ) । म३. मृगीदृशः ॥

भ. ४२१८ (१८३६); शतकावलौ ६५ ॥

## शृङ्गारशतके प्रथमविंशतौ अधिकश्लोकौ ।

यूनामनङ्गं जयतां विशालाः शीलाश्च लीलागृहचन्द्रशालाः ।
गात्राणि पात्राणि विलासिनीनां मध्यं च वेदी भणितं च मन्त्राः ॥ १ ॥

[ तु. शृङ्गार. २१ ]

मधुरमधुरस्निग्धं चाङ्गं सुचन्दनरूषितं
मृदुभुजलतापाशाश्चामी सुकङ्कणभूषिताः ।
प्रकृतिसुरभिस्वैरालापाः स्मरोदयदायिनो
विरहविधुरस्यैते चित्तं हरन्ति च सेन्द्रियम् ॥ २ ॥

[ म४.५. शृङ्गार. १.२० ]

## ॥ संभोगादिप्रसङ्गः ॥

विश्रम्य विश्रम्य वनद्रुमाणां छायासु तन्वी विचचार काचित् ।
स्तनोत्तरीयेण करोद्धृतेन निवारयन्ती शशिनो मयूखान् ॥ २१ ॥

विश्रम्येति ॥ काचित्तन्वी कृशाङ्गी वनद्रुमाणामुद्यानवनवृक्षाणां छायास्वनातपेषु विश्रम्य विश्रम्यानेकवारं विश्रान्तिं कृत्वा करोद्धृतेन हस्तविकीर्णेन स्तनोत्तरीयेण कुचसंव्यानेन शशिनश्चन्द्रस्य मयूखान्किरणान् । 'किरणोऽस्रमयूखांशु'-रित्यमरः । निवारयन्ती व्यपोहयन्ती सती विचचार संचारं कृतवती । विरहि[णी]-लक्षणमेतत् ॥ [ उपजाति ]

१) म४. विश्राम्य विश्राम्य । —३) तु. करोन्नतेन ॥

भ. ६१९९ (२८५२) । शा. ३३९९ । सुभा. पृ० २७५.१६ ॥

अदर्शने दर्शनमात्रकामा दृष्ट्वा परिष्वङ्गरसैकलोला ।
आलिङ्गितायां पुनरायताक्ष्यामाशास्महे विग्रहयोरभेदम् ॥ २२ ॥

अदर्शन इति ॥ अदर्शने नयनगोचरे दर्शनमात्रकामा(ः) अवलोकनमात्रवाञ्छा(ः) { दृष्ट्वा प्रियतममिति शेषः -रा- } दृष्टा(ः) दैवान्नयनगोचराश्चेत् । परिष्वङ्गरसैकलोला(ः) आलिङ्गनास्वादतृष्णा(ः) । आयताक्ष्यां विशाललोचनायां आलिङ्गितायां पुनः आलिङ्गनं कृतायां चेद्विग्रहयोः शरीरयोः । 'शरीरं वर्ष्म विग्रह' इत्यमरः । अभेदमैक्यमाशास्महे ईहामहे । वयमिति शेषः ॥ [ उपजाति ]

२) तु. ना२. ग्र१. म२–५. दृष्टे; ना१. ग्र२.४. दृष्टा; ग्र३. दृष्टाः । तु. रा. ते. म१. °सुखैक° ( °रसैक° ) । तु. सु. ना२. ग्र३. म१.५. °लोलाः; ग्र१. म३. °कामा । —३) तु. आलिङ्गितायाः ॥

भ. १९० (७१) ॥

मालती शिरसि जृम्भणोन्मुखी चन्दनं वपुषि कुङ्कुमाविलम् ।
वक्षसि प्रियतमा मदालसा स्वर्ग एष परिशिष्ट आगमः ॥ २३ ॥

मालतीति ॥ शिरसि मस्तके । केशपाशे इति यावत् । जृम्भणोन्मुखी विकासाभिमुखी । मालती । जातिपुष्पमालिकेति यावत् । वपुषि देहे । कुङ्कुमाविलं घुसृणकलुषितं चन्दनं चन्दनचर्चा । वक्षसि हृदये मदालसा प्रमदविक्लवा प्रियतमा कामिनी । एषः अयमेव स्वर्गः त्रिविष्टपः । आगमः वेदशास्त्रादिस्तु परिशिष्टः अवशिष्टः ॥ [ रथोद्धता ]

१) ना३–५. रा. ते. ग्र५. जृम्भणं मुखे; ग्र४. जृम्भणोन्मुखा; म२. जृम्भणोन्मुख; म५. भृङ्गिणोन्मुखी । —२) ग्र१.३.४. म. कुङ्कुमारुणं ( ग्र३. °माविलम् इत्यपि । —३) तु१. वक्ष्यसि । ग्र१. मदालस; म४.५. रसालसा । —४) ग्र१.२.४ म१–३. एव ( एष ) । तु.सु. परितुष्ट; ना५. परिसिद्धिर् । तु. सु. ना१.२. म. आगतः ॥

भ. ४८४२ (२१९२); प्रसङ्गाभ° १४ । सु. २२२८ ॥

प्राञ्मा मेति मनागनागतरसं जाताभिलाषं ततः
सव्रीडं तदनु श्लथोद्यममनु प्रत्यस्तधैर्यं पुनः ।
प्रेमार्द्रस्पृहणीयनिर्भररहःक्रीडाप्रगल्भं ततो
निःसङ्गाङ्गविकर्षणाधिकसुखं रम्यं कुलस्त्रीरतम् ॥ २४ ॥

प्रागिति । प्राक्प्रथमं मा मेति मनागीषदनागतरसं अज्ञातशृङ्गारं ततोऽनन्तरं जाताभिलाषं उत्पन्नवाञ्छं तदनु ततः सव्रीडं सलज्जं अनुक्रमेण श्लथोद्यमं गलितोद्यमं पुनः अपि च प्रत्यस्तधैर्यं त्यक्तधीरत्वं प्रेमार्द्रं हार्दक्लिन्नं ततः परं स्पृहणीयनिर्भररहःक्रीडाप्रगल्भं अभिलषणीयात्युत्कटरहस्यक्रीडाप्रगल्भं निःसङ्गाङ्गवि(नि)कर्षणाधिकसुखं निरर्गलदेहविक(घ)र्षणात्यन्तसुखं कुलस्त्रीणां स्वभार्याणां रतं रतिः रम्यं मनोहरं भवतीति शेषः ॥ [ शार्दूलविक्रीडितम् ]

१) तु. प्राग्वामेति; ग्र१. म३. प्रज्ञामेति ( प्राञ्मामेति ) । तु. मनोरमागतगुणं; ग्र१. म३. मनागनारतरतं; म४.५. मनागसंगतरसं । सु३. जाताभिलाषा । —२) ग्र१. म२.३. तदथो ( तदनु ) । तु. श्लथीकृततनु; ना३–५. रा. ते. ग्र५. श्लथोद्यममथ; ग्र१. मिथोद्यममनु; ग्र४. श्लथोद्धतमनः–; म४. श्लथन्कचभरं; म५. श्लथत्कचभरं । ना२. प्रध्वस्थ°; ना५. रा. ते. ग्र५. म४.५. प्रध्वस्त°; ग्र१. म२.३. व्यत्यस्त° । —३) ना३.४. प्रेमार्द्रः; ना५. रा. ते. ग्र१.५. म. प्रेमार्द्र । ग्र२ (मू). °गर्भर°; म४.५. °मन्मथ° ( °निर्भर° ) । तु. °रसक्रीडा°; ग्र१. म३. °रहःप्रौढ° । म४. रणक्रीडा.° —४) तु. निःशङ्काङ्क°; सु. निःशङ्काङ्ग°; म४.५. निःसङ्गादिव । सु२. °विघर्षणाधिक°; ग्र१. म१–३. °विकर्षणोदित°; ग्र२.३.५. °निकर्षणाधिक°; म४.५. कर्षणाधिक° । म३. रम्यं च कुस्त्रीवृतम् ॥

भ. ४२९९ (१८८५); शतकावलौ ६४; प्रसङ्गाभ°. ९ । सु. २२४२ । सुभा. पु० ३१७.७ ॥

उरसि निपतितानां स्रस्तधम्मिल्लकानां
मुकुलितनयनानां किंचिदुन्मीलितानाम् ।

उपरिसुरतखेदस्विन्नगण्डस्थलीना-
मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ २५ ॥

उरसीति ॥ भाग्यवन्तः भागधेयवन्तः विलासिन इत्यर्थः । उरसि हृदये निपतितानां शयानानां, उपरिसुरतखेदवशादित्यर्थः । स्रस्तधम्मिल्लकानां विस्रस्तकेशग्रन्थीनां मुकुलितनयनानां निमीलिताक्षीणां सुखपारवश्यादित्यर्थः । किंचिदुन्मीलितानां ईषद्विकसितनयनानां उपरिसुरतखेदस्विन्नगण्डस्थलीनां पुरुषायितायासस्विद्यत्कपोलतलानां वधूनां स्त्रीणामधरमधु अधरामृतं पिबन्ति पानं कुर्वन्ति ॥ [मालिनी]

१) तु. उपरि ( उरसि )। — ३) तु. सुरतजनितखेदखिन्न° । ना ३. °खेदखेद°; ग्र१. °वेगखिन्न°; ग्र५. °खिन्नखेद°; म३. °तान्तखिन्न° । ना३. रा. ते. ग्र५. °स्थलानाम् ॥

म. १३१५ (४९२); शतकावलौ ६५; प्रसङ्गाभ° ८ । सु. २१३५ ॥

*आमीलितनयनानां यः सुरतरसोऽनुसंविदं भाति ।
मिथुनैर्मिथोऽवधारितमवितथमिदमेव कामनिर्वहणम् ॥ २६ ॥

आमीलितेति ॥ आमीलिते ईषन्मुकुलिते नयने नेत्रे यासां कुलवधूनामित्यर्थः । यः सुरतरसः सुरतानुरागः सुरतानुभव इति यावत् । { अनुसंविदं संविदमनु ज्ञानमनुसृत्य } ( अनुसंपदं संपदे……भवति स्यात् ) भाति [ प्रतिभाति ] । मिथुनैर्द्वंद्वैः वाणीहिरण्यगर्भादिभिर्वा । इदमेव सुरतमेव कामि(म)निर्वहणं कामपुरुषार्थनिर्वाहः । अवितथं यथार्थं यथा तथा मिथोऽन्योन्यमवधारितं निश्चितम् । स्वस्त्रीसुरतमेव कामपुरुषार्थ इति ब्रह्मादिभिर्निश्चितत्वादवश्यं निजरमणीसुरतं कर्तव्यमेवेति भावः ॥ [ आर्या ]

[ म४.५. कोशयोरिदं पद्यं नास्ति ] १) तु२. अमिलित° । — २) ग्र१. सुरतरसानुभवसंविदां भाति । म१–३. यत्सुरत; ग्र४. अधः सुरत° । म१.२. °महोत्सवात्सुखं भवति । तु. ग्र. न (ऽनु°) । ना१.३.४. ग्र२.३.५. °संपदं; ना२. °संविदो । तु.सु. कुरुते; ना१. ग्र२.३. म३. भवति ( भाति ) । — ३) ग्र१. मिथोपधारित° । ग्र४. विभाति; म३. धारितं ( ऽवधारितम् ) । — ४) ग्र४. मीलितनयनकामनिर्वाणम् । ग्र१. म२. विततम् । तु. अपि ( इदम् ) । सु. ना१–३. कामनिर्हरणं; ग्र२.३. कामिनिर्वहणं; म३. कामिनीवहनम् ॥

म. ९७७ (३६५) ॥

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ।
तदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥२७॥

इदमिति ॥ पुंसां पुरुषाणामिदमेतदनुचितमयोग्यम् । अक्रमः व्युत्क्रमश्च । यत् यस्मात्कारणात् इहास्मिन् जरास्वपि वार्धक्येष्वपि मान्मथा मदनसंबन्धिनो

विकाराश्चेष्टाः । उद्गच्छन्तीति शेषः । अपि च किंच तत्तस्मात्कारणात् नितम्बिनीनां स्त्रीणां स्तनानां कुचानां पतनावधि पतनपर्यन्तं जीवितं प्राणधारणं रतं सुरतं वा {न कृतं तदप्यनुचितम् -सु-॥ न कृतमिति यत् । ब्रह्मणेति शेषः । तदिति संबन्धः -रा-} (निकृतं निन्दितम्) तदिदं पुंसां वृद्धत्वेऽपि च सुरतवाञ्छा स्त्रीणां स्तनपतनपर्यन्तं प्राणधारणं वा सुरतं वा निकृतमेवेति भावः ॥ [पुष्पिताग्रा]

१) सु. आश्रमस्थ–; प्र४. म४.५. अक्रमं च । —२) सु१. जरासु मन्मथा; सु२. जरासु मान्मथा । ना१. म१.२. मान्मथो; प्र२ (मू). मन्मथा । प्र२ (मू). म१.२. विकारः । —३) प्र१.४. यदपि । ना३. म१.२.४. विकृतं; ना५. प्र२.३.५. म३.५. निकृतं; प्र१. निकृतिर् । —४) प्र२(मू). °पतनादधि ॥

भ. ११०३ (४२२) । शा. ५६४ (शीलभट्टस्य भोजराजस्य च) । सुभा. पृ० २०५.७ (शीलभट्टारकस्य भोजराजस्य च) । अलंकारमहोदधौ ३४१ । काव्यप्रकाशे ५.७.२६४ (७. २२२) । काव्यप्रदीपे (का० २४. पृ० २५१) । उदाहरणचन्द्रिकायाम् ॥

## ॥ अनन्तरं यौवनप्रसङ्गः ॥

राजंस्तृष्णाम्बुराशेर्न हि जगति गतः कश्चिदेवावसानं
को वार्थोऽर्थैः प्रभूतैः स्ववपुषि गलिते यौवने सानुरागे ।
गच्छामः सद्म यावद्विकसितकुमुदेन्दीवरालोकिनीना-
माक्रम्याक्रम्य रूपं झटिति न जरया लुप्यते प्रेयसीनाम् ॥२८॥

राजन्निति ॥ हे राजन् नृपते जगति लोके तृष्णाम्बुराशेराशाजलधेरवसानं विरामं कश्चित्कोऽपि पुरुषो न गतो हि न प्राप्तः खलु । सानुरागे प्रेमसहिते यौवने तारुण्ये स्ववपुषि निजदेह एव गलिते भ्रष्टे सति प्रभूतैः प्रचुरैरर्थैर्धनैः को वार्थः किं वा प्रयोजनम् । न किंचित्प्रयोजनमित्यर्थः । विकसितकुमुदेन्दीवरालोकिनीनां उत्फुल्लकैरवनीलोत्पलसदृशप्रेक्षणवतीनां प्रेयसीनां प्रियतमानां रूपं सौन्दर्यं कर्म जरया कर्त्र्या आक्रम्याक्रम्य पदं निधाय यावन्न लुप्यते नोन्मूल्यते तावत्सद्म गृहं गच्छामः प्राप्नुमः ॥ [स्रग्धरा]

१) प्र४. जगति ततः किंचिदे° । —२) तु. वाप्यर्थैः; प्र१. म२. वाथोर्थं°; प्र३. वार्थोत्थैः; प्र४. वार्थैस्तैः; म३. वार्थैस्तैः । प्र१. म२. –प्रभावैः । ना२. यौवनं । तु. सानुरागः । —३) ना२. सप्त (सद्म) । रा. ते. प्र४. तावद् । प्र४. मुकुलित– । तु. सु. प्र४. °नयनेन्दी°; प्र२ (मू). °कुसुमेन्दी° । —४) तु२. सटिति; ना२. झटति; ते. झडिति । ना५. रजसा (जरया) । तु. लुप्यते; प्र१. लुप्यसे; प्र४. म४.५. लुप्यते ॥

भ. ५७३९ (२६०१) ॥

रागस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतु-
र्मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य ।

कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं
लोकेऽस्मिन्न ह्यनर्थव्रजकुलभवनं यौवनादन्यदस्ति ॥ २९ ॥

रागस्येति ॥ रागस्यानुरागस्य एकं मुख्यं अगारं निलयः । नरकाणां निरयाणां शतैः समूहैः महादुःखस्य अत्यन्तकष्टस्य संप्राप्तेरागमस्य हेतुः कारणम् । मोहस्याज्ञानस्योत्पत्तेर्जननस्य बीजं कारणम् । ज्ञानताराधिपस्य ज्ञानचन्द्रस्य जलधरपटलं मेघसंघः । कन्दर्पस्य मन्मथस्य एकं मित्रं मुख्यबन्धुः । प्रकटितानां प्रख्यातानां विविधानां नानाविधानां स्पष्टानां दोषाणां पापानां प्रबन्धं ग्रन्थिः । अथ वा प्रख्यातनानाविधशब्दार्थवाक्यगतदोषाणां प्रबन्धं काव्यम् । अस्मिँल्लोके भुवने यौवनात्तारुण्यात् । अनर्थव्रजकुलभवनं अनर्थसंघकुलजन्मस्थानम् । अन्यत् अवशिष्टं नास्ति न विद्यते । यौवनमेव सकलानर्थहेतुरित्यर्थः ॥ [ स्रग्धरा ]

१) अ१.३ (मू). ५. म२–४. °स्याकार° । सु१.२. अ५. °संप्राप्तहेतुर्; म५. °संप्राप्तिहेतुं । —२) अ४. °तारापथस्य । —३) तु१. अ२(मू). °विविधस्पृष्ट°; अ१. °विविधस्पर्श°; अ४. विभवस्पष्ट° । अ१. म१.२. °दोषप्रवृद्धं; अ४. म४.५. °दोषप्रसङ्गं । — ४) अ१. म१.२. अपि (हि) । तु२. ह्यनर्थं । तु. °स्मरकुसुमवनं; सु. °व्रजकुसुमवनं । अ१. म१.२. अस्ति नान्यत् ॥

भ. ५७२८ (२५९५) ॥

शृङ्गारद्रुमनीरदे प्रसृमरक्रीडारसस्रोतसि
प्रद्युम्नप्रियबान्धवे चतुरवाङ्मुक्ताफलोदन्वति ।
तन्वीनेत्रचकोरपार्वणविधौ सौभाग्यलक्ष्मीनिधौ
धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने ॥३०॥

शृङ्गारेति ॥ { शृङ्गारः संभोगविप्रलम्भरूपशृङ्गाररस एव द्रुमो वृक्षः तस्य नीरदे अम्बुवाहे-रा-} (संसारद्रुमस्य भवपादपस्य नीरदे जलदे) प्रसृमरस्य विसृत्वरस्य क्रीडारसस्य लीलारागस्य स्रोतसि प्रवाहे । प्रद्युम्नस्य कुसुमायुधस्य प्रियबान्धवे अभीष्टस्वजने । चतुरवाचां पेशलवचसामेव मुक्ताफलानां मौक्तिकानां उदन्वति रत्नाकरे । तन्वीनां तरुणीनां नेत्राणि लोचनान्येव चकोराश्चन्द्रिकाहाराः पक्षिविशेषाः । तेषां पार्वणविधौ पूर्णिमासुधाकरे । सौभाग्यलक्ष्म्याः सौन्दर्यश्रियो निधौ शेवधौ । एवंगुणविशिष्टे नवे नूतने यौवने तारुण्ये प्राप्ते समागते सति कोऽपि धन्यः कृतार्थः विक्रियां मन्मथविकृतिं न कलयति न प्राप्नोति । न तु सर्वः । नवयौवनमेव संसारद्रुमवृद्धिहेतुत्वान्नीरदः । संसारवृद्धिश्च स्रक्चन्दनवसनवनितादिभोगबाहुल्यात् । क्रीडारसस्रोतांसि यौवन एव बहुलीभवन्ति न बाल्यवार्धकादौ । प्रद्युम्नोऽपि यौवनमेवालम्ब्य लोकान्विजयते । तस्माद्यौवनं प्रद्युम्नस्य प्रियबान्धवः । चतुरा वाचो यौवन एवोन्मिषन्ति । यौवनमेव तन्वीनेत्रचकोराणां पार्वणविधुर्भवति । यस्मात्तन्व्या युवान एव नेत्रैः पीयन्ते (ईक्ष्यन्ते) । यौवनमेव सौभाग्यलक्ष्म्या निधिर्भवति । यस्माद्दर्शनीयोऽपि तारुण्ये सुभगतमो भवति ॥ [ शार्दूलविक्रीडितम् ]

१) सु. ना१. प्र२.३.५. संसार-; म४. शृङ्गारे । म४.५. °नीरसे । म४. प्रसृमरे । ना३-५. प्र४. म३. °क्रीडासर° । —२) म४.५. प्रद्योतप्रिय° । तु. सु. चतुरता-; प्र१-३. चतुरवान्; प्र४. चपलता-; म४.५. पितुरवान् । म३. °दश्वति (°दन्वति)। —३) प्र४. म३. ५. °पारणविधौ । प्र१. °लक्ष्मीविधौ । —४) तु. रा. प्र४.५. कलयते ॥

भ. ६५१८ (३०१८); काव्यस° ६३; शतकावलौ ७२ । पद्मानन्दस्य वैराग्यशतके १७ ॥

अनन्तरं स्त्रीणां परित्यागप्रसङ्गः ।

संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवाकलङ्क-
व्यासङ्गव्यस्तधैर्यं कथममलधियो मानसं संविदध्युः ।
यद्येताः प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः
प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभाजस्तरुण्यः ॥ ३१ ॥

संसार इति ॥ असारे निरुपादेयेऽस्मिन्संसारे भवे प्रोद्यत उदीयमानस्य इन्दोश्चन्द्रस्य द्युतिनिचयभृतः कान्तिनिचयहारिण्यः अम्भोजनेत्राः सरसिजनयनाः। प्रेङ्खत्काञ्चीकलापाः चलद्रशनाभरणाः । स्तनभरविनमन्मध्यभाजः कुचभरावनतावलग्नभृतः एता अमूस्तरुण्यो युवतयो यदि न स्युः न भवेयुः । तदानीममलधियो निर्मलबुद्धयो धीराः कुनृपतेः दुर्भूभृतः संबन्धिनो भवनद्वारस्य गृहप्रतिहारस्य सेवा परिचर्यैव कलङ्कोऽपवादः तद्व्यासङ्गेन तत्सङ्गेन व्यस्तधैर्यं व्यावृत्तधृति मानसं चित्तं कथं संविदध्युः कथंकारं कुर्युरेवेत्यर्थः ॥ [ स्रग्धरा ]

१) प्र४. खिन्नसारे; म४.५. ऽस्मिन्नपारे । तु२. °भुवन°; सु (मू). °सदन° (°भवन°)। —२) म४.५. °व्यस्तधैर्ये । तु. वा विदध्युः; ना१. प्र४. म४.५. संनिदध्युः । —३) प्र१. °धृता (°भृतो)। —४) तु. सु. ना२. °कलाप- । तु. सु. ना१. प्र.१.४. म४. °न्मध्यभागास् ॥

भ. ६६४१ (३०८०); काव्यस. ५८ । सु. २२४५ । सुभा. पृ० २५२.६१ । सक. ५, ५७.५ (पृ० ३१५) ॥

सिद्धाध्यासितकन्दरे हरवृषस्कन्धावरुग्णद्रुमे
गङ्गाधौतशिलातले हिमवतः स्थाने स्थिते श्रेयसि ।
कः कुर्वीत शिरःप्रणाममलिनं मानं मनस्वी जनो
यद्वित्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥३२॥

सिद्धाध्यासितेति ॥ सिद्धैर्देवयोनिभिः अध्यासितकन्दरेऽधिष्ठितदरीके हरस्य परमेश्वरस्य वृषेण शाक्करेण स्कन्धेन ककुदेन । वृषेणेति कर्तरि तृतीया । अवरुग्णद्रुमे भग्नपादपे गङ्गया भागीरथ्या धौतानि क्षालितानि शिलातलानि ग्रावस्वरूपाणि यस्मिंस्तादृशे । स्थिरशब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति ईयसुनि

कृते 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवबंहिगर्वर्षित्र-ब्द्राघिवृन्दाः' इति [ स्थिरशब्दस्य स्थादेशे गुणे च रूपम् ]। स्थेयसि स्थिरतरे। हिमवतो हिमाचलस्य संबन्धिनि स्थाने प्रदेशे स्थिते विद्यमाने सति। शिरसो मस्तकस्य प्रणामेन हेतुना मानं चित्तसमुन्नतिं मलिनं गतश्रीकं मनस्वी धृतिमान्को जनो लोकः कुर्वीत विदधीत। न कोऽपि कुर्वीतेत्यर्थः। वि(उत्)त्रस्तानामुद्विग्नानां कुरङ्गशावानां हरिणशिशूनां नयनानि नेत्राणि यासां ताः स्त्रियो नार्य एव स्मरास्त्रं मन्मथबाणः यदि न स्युर्न भवेयुः। मनस्विनोऽपि जना नारीनिमित्तमेव स्वकीयं मानं मलिनयित्वा तपोविमुखाश्च भूत्वा धनिकान् प्रणमन्तीत्यर्थः॥ [शार्दूलविक्रीडितम्]

१) ना२. सिद्धाध्यूषित° । तु. °कन्धरे । ते१. हरिवृष° । ग्र२ (मू). °स्कन्दावरुग्न°; ग्र४. °स्कन्धादिरुग्ण° । —२) ना१. ग्र२.३ (टी). म१–३. स्थिते स्थेयसि; ना२. स्थितः स्थेयसे; ना४.५. स्थिते प्रेयसि; ग्र१. शुभे स्थेयसि; ग्र३ (मू). स्थितः श्रेयसि; ग्र४. सिते प्रेयसि; म४.५. स्थितप्रेयसि । —३) म३. परप्रणाम° । ना२. मानी; ना३–५. रा. ते. म्लानं । —४) ना१. ग्र२. ३.५. यद्युत्रस्त°; ग्र३ (मू). यद्यत्रस्थ–; म४.५. यद्यात्रस्त– । तु. सु. ना. °शाव° (°शाब°) । म३. स्मरास्त्राः ॥

भ. ७०४७ (३२५४); काव्यस° ५९ । सु. २२४४ । सक. ५.५७.४ (पृ० ३१५) ॥

संसार तव पर्यन्तपदवी न दवीयसी ।
अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ ३३ ॥

संसारेति ॥ संसार तव पर्यन्तस्य परिसरभूमेः पदवी पद्धतिः दवीयसी दूरतरा न भवति। संसारमध्यमग्नानां प्राणिनां त्वां निस्तीर्य पर्यन्तपदवीं गन्तुं सुलभमेव। दुस्तरो न भवति। दवीयसीति दूरशब्दादीयसुनि 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' इति र इत्येतस्य लोपे पूर्वस्य दू इत्यत्रोकारस्य ओकारे गुणेऽवादेशे कृते दवीयस् इत्येवं निष्पन्नम्। 'कृत्तद्धितसमासाश्चे'ति प्रातिपदिकसंज्ञायां 'उगित'श्चेति ङीपि रूपम्। यदि दुस्तरा लङ्घयितुमगोचरा मदिरेक्षणा मदहेतुभूतनयना नार्यः अन्तरा मध्ये न स्युर्न भवेयुः। नार्य एव संसारनिमज्जनहेतवः नान्यत्। तस्मान्नार्यः अन्तरा न चेत्संसारः सुतर इत्यर्थः॥ [अनुष्टुप्]

१) तु. संसारस्तव । ना१ (शोधनात्परं). °तट°; ना२. म३–५. °ताप°; ग्र१. म२. °दाव°; म१. °सार° (तव) । —४) ना१. यदीमा; ना३.४. ग्र२.३. यदिमा; रा. ते. यदि ते; ग्र१. म१–४. यदि चेन्; ग्र४. म५. यदिमे । तु१. मन्दिरेक्षणाः; ना२. मदिरेक्षणः; म३. मदिरेक्षणा ॥

भ. ६६४३ (३०८२); काव्यस° ६०; सुभाष. ३७ । शा. ४१९३ । सुर. पृ० ९९.१ (भर्तृ०) । सुभा. पृ० ८८.१ ॥

पक्षद्वयनिरूपणम्।

दिश वनहरिणीभ्यो वंशकाण्डच्छवीनां
कवलमुपलकोटिच्छिन्नमूलं कुशानाम् ।

शकयुवतिकपोलापाण्डुताम्बूलवल्ली-
दलमरुणनखाग्रैः पाटितं वा वधूभ्यः ॥ ३४ ॥

दिशेति ॥ वनहरिणीभ्यः काननमृगीभ्यो वंशकाण्डच्छवीनां वेणुदण्डकान्तीनां कुशानां दर्भाणां उपलकोट्या शिलाकोणेन छिन्नमूलं लूनजटं कवलं पूलं दिश प्रयच्छ । अथ वा वधूभ्यस्तरुणीभ्यः अरुणनखाग्रैरव्यक्तरागकररुहशिखरैः पाटितं द्विधाकृतं शकयुवतीनां शकदेशतरुणीनां कपोलवद्गण्डस्थलानीव आसमान्तात्पाण्डुरं ताम्बूलवल्लीदलं नागवल्लीपत्रं दिश । संसारं निर्मूल्य वने वसन्द्वयहरिणीभिर्मैत्रीं बद्ध्वा निवसेत् । अथ वा सम्यक्सांसारिकसुखमनुभवेत् । न तूभयत्रभ्रष्टो भवेदित्यर्थः ॥ [ मालिनी ]

१) तु१. दिशि वन°; तु२. दिशि दिशि; ना१. दशवदन° । ना३-५. रा. म१.२. °हरिणेभ्यो; म३. °करिणीभ्यो । तु१. शंसुशूक्तिष्टवीनां; तु२. शंसुशुक्तिच्छवीनां; ना२. वंशकण्डस्थवीनां । —२) तु. °च्छन्नमूलं । —३) म४.५. अपि मधुरमुखीभ्यः पाण्डुताम्बूलवल्ली- । तु. ग्र४. शुक°; सु. वर°; ना१. शर° ( शक° ) ॥

भ. २८०९ (११६१) ॥

असाराः सन्त्वेते विरतिविरसा वादविषया
जुगुप्स्यन्तां यद्वा ननु सकलदोषास्पदमिति ।
तथाप्येतद्ब्रूमो न हि परहितात्पुण्यमधिकं
न चास्मिन्संसारे कुवलयदृशो रम्यमपरम् ॥ ३५ ॥

असारा इति ॥ एते {वादविषया मद्वचनार्था-सु-} विषयाः शब्दस्पर्शादयः असाराः क्षणिकत्वादनुपादेयाः सन्तु भवन्तु विरताववसाने विरसा अस्वादवः । ननु यद्वा सकलानां दोषाणामास्पदं निवासभूमिरिति जुगुप्स्यन्तां निन्द्यन्ताम् । तथाप्येतदिदं वक्ष्यमाणं ब्रूमो वदामः । किं तदित्याह । अस्मिन्संसारे परहितात्परोपकारादन्यदधिकं पुण्यं सुकृतं नास्ति । हि कुवलयदृश इन्दीवराक्ष्या अपरमन्यद्रम्यं मनोहरं वस्तु च नास्ति ॥ [ शिखरिणी ]

१) ग्र४. उपायाः ( असाराः ) । ना३. रा. ते. सर्वे ते; ना५. संसाराः; म३. सन्त्येते ( सन्त्वेते ) । ना५. विरतिविषयाः । तु१. यच्च; तु२. याश्च; ना२.ऽऽस्वाद°; ना३. पापि°; ना४.५. रा. ते. ग्र५. पाप°; ग्र१. म१.२.४.५. वाथ; ग्र४-पायि°; म३. वादि° ( वाद° ) । —२) तु१. ना१. जिगुप्सन्तां; तु२. सु. ग्र४. म३.५. जुगुप्सन्तां; ना२. म४. जुगुप्सन्तं । ना२. न तु ( ननु ) । ते२. ग्र४. अपि ( इति ) । —३) ग्र४. अथाप्येत° । तु. सु. ना३-५. रा. ते. ग्र४.५. भूमौ ( ब्रूमो ) । —४) ते२. सत्सारे ( संसारे ) । ना२-४. म४.५. रम्यमधिकम् ॥

भ. ७७६ (२८९); शतकावलौ ६८ ॥

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥३६॥

मात्सर्यमिति ॥ हे आर्या विद्वांसः मात्सर्यं परगुणद्वेषं उत्सार्य दूरीकृत्य कार्यं कर्तव्यं विचार्य परामृश्य समर्यादं न्यायसहितं यथा भवति तथा इदं वक्ष्यमाणं वदन्तु कथयन्तु । किं तदित्याह । भूधराणां शैलानां नितम्बाः कटकाः सेव्याः सेवनीयाः । किमु विकल्पे । उत अथ वा स्मरेण मदनेन हेतुना स्मेराणामीषद्धासवतीनां विलासिनीनां लीलावतीनां नितम्बाः कटिपश्चाद्भागाः सेव्याः । ऐहिकसुखं क्षणिकमिति ये मोहान्न जानन्ति तेषां, स्मरस्मेरविलासिनीनां नितम्बाः सेव्याः । ये तु सांसारिकसुखं क्षणं दुःखहेतुश्चेति सम्यक् व[वि]दन्ति तेषां मते भूधराणां नितम्बाः सेव्या इत्यर्थः ॥ [ उपजातिः ]

२) ना२. वदन्ति । —३) ग्र४. सेवा- ( सेव्या ) । ग्र४. खलु ( किमु ) । —४) म३. कुतः ( उत ) । ग्र२ ( मू ). स्मरसैर;° म४. स्मितस्मेर°; म५–स्ततः स्मेर° ॥

भ. ४८११ (२१७७); काव्यप्रकाशे ६०; दशरूपावलोकटीकायां ( पृ० १६२ ); उदाहरणचन्द्रिकायाम् । वाग्भटस्य काव्यानुशासने २. (का० ४३, पृ० २८) । सु. २२२९ । सुभा. पृ० २५१.३६ । अलंकारमहोदधौ २७८ । चन्द्रालोकटीकायां ७.२ ( पृ० १३० ) । अलंकाररत्नाकरे २६६ । काव्यप्रकाशे ५.१३३ (७.२६२) । काव्यप्रदीपे (का० २४. पृ० १८८,२८०) । दण्डिनः काव्यादर्शे (टी) ३.१३९ ॥

संसारे स्वप्नसारे परिणतितरले द्वे गती पण्डितानां
तत्त्वज्ञानामृताम्भःप्लवलुलितधियां यातु कालः कदाचित् ।
नो चेन्मुग्धाङ्गनानां स्तनजघनघनाभोगसंभोगिनीनां
स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोलोद्यमानाम् ॥३७॥

संसार इति ॥ स्वप्नसारे स्वप्नसंदर्शनतुल्येऽस्थिरांशे परिणतौ परिपाके विरसे अस्वादौ । (परिणतितरल इति पाठे परिपाकेन हेतुना तरले चञ्चले) संसारे भवे पण्डितानां विदुषां द्वे गती द्वौ मार्गौ । गती एव दर्शयति । तत्त्वज्ञानं ब्रह्मज्ञानमेव अमृताम्भस्यमृतजलधौ प्लवेन निमज्जनेन लुलितधियां व्यासक्तबुद्धीनां सतां कदाचित् एकदा कालोऽनेहा यातु गच्छतु । नो चेदेवं न भवति चेत् स्तनानां जघनानां च घनेन महता आभोगेन विस्तारेण संभोगिनीनां संभोगवतीनां मुग्धाङ्गनानां सुन्दराङ्गवतीनाम् । 'मुग्धः सुन्दरमूढयोरिति' विश्वः । स्थूलोपस्थस्थली(ले)षु पीवरमदनसदनप्रदेशेषु स्थगितेनाच्छादितेन करतलेन हस्ततलेन { स्पर्शः संपर्कः स एव लीला तत्रोद्यम उद्योगो येषां तेषां -रा- } स्पर्शे स्पृष्टौ लोलोद्यमानां सतृष्णोद्योगानाम् । 'लोलश्चसतृष्ण यो'रित्यमरः । सतां कदाचित् कालो यातु ॥ [ स्रग्धरा ]

१) तु. सु. ऽस्मिन्नसारे; ना१.२.५. ग्र१. म. स्वल्पसारे; ना१ ( प्रान्ते ). खल्वसारे । तु. सु. ग्र२ ( मू ). ५. म१–३. °विरसे ( °तरले ) । —२) तु. सु. °ज्ञानाम्बुराशौ; ग्र१. °ज्ञानाद्र-

वाग्भः- । तु. सु. ना२. -श्रुत- । ना१-३.५. रा. ते. ग्र१. °ललित°; ना४. ग्र४. °तुलित° । सु. °धिया । ग्र२ ( मू ).म३. कालाः; ग्र४. कामः ( कालः ) । रा. ते. ग्र१.५. म१.२.४. कथंचित्; ग्र३. कथंचित् ( इत्यपि ) । — ३) तु१. ना३-५. रा. ते. ग्र५. स्तनघनजघना°; ना२. स्तनजघनभरा°; म३. स्तनभरजघना° । ना२. °संसर्गिणीनां । —४) तु. सु. ग्र२.३. °स्थस्थलेषु; ना१. °स्थस्थलान्तः-; ना३.४. °स्थस्थलान्त-; ग्र५. °स्थान्तराल-; म१.२. °स्थत्रिकोण- ( °स्थस्थलीषु ) । ग्र४. त्रुटित° ( °स्थगित° ) । ना१. लोलोज्यमानां; ना२. °संमीलितानां; रा. ते. ग्र१. म३-५. °लीलोद्यमानां; ग्र४. म१.२. °लीलोद्यतानां ॥

भ. ६६४२ (३०८१); शतकावलौ ६४ । सुभा. पृ० २५२.६० ॥

आवासः क्रियतां गाङ्गे पापहारिणि वारिणि ।
स्तनद्वये तरुण्या वा मनोहारिणि हारिणि ॥ ३८ ॥

आवास इति ॥ पापं किल्बिषं हरतीति तथोक्तं तस्मिन् । गाङ्गे गङ्गासंबन्धिनि वारिणि जले आवासः स्थानं क्रियतां विधत्तां [ विधीयताम् ] । अथ वा हारिणि मुक्ताहारवति मनोहारिणि चित्ताकर्षके { तरुण्याः नवयौवनायाः -रा- } (नारीणां तरुणीनां ) स्तनद्वये कुचयुगले वा आवासः क्रियताम् । जनैरिति शेषः । विषयासक्तिर्नो चेद्गङ्गातीरवास उचितः । अथ वा विषयानुरक्तिश्चेन्नारीकुचद्वयावास एव योग्य इति भावः ॥ [ अनुष्टुप् ]

२) तु१. सु. ना१.५. पापवारिणि । —३) ग्र२.३. ऽथ नारीणां (तरुण्या वा) । —४) ग्र१. वारिणि ( हारिणि ) ॥

भ. १०४० (३९४) । सु. ३४२५ । सुभा. पृ० १५९.२९३ ॥

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै-
र्द्वयमिह पुरुषाणां सर्वदा सेवनीयम् ।
अभिनवमदलीलालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ ३९ ॥

किमिहेति ॥ इह संसारे युक्तिशून्यैर्युक्तिरहितैः बहुभिर्भूरिभिः { प्रलापैः अनर्थकवचनैः । रा. } (वचोभिः वाक्यैः किम्) । किमपि प्रयोजनं नास्ति । पुरुषाणां नृणां सर्वदा सर्वस्मिन्काले द्वयं द्वितयं सेवनीयम् । किं तदित्याह । अभिनवाभिः प्रत्यग्राभिर्मदलीलाभिर्दर्पक्रीडाभिः लालसं रमणीयं स्तनभरेण कुचभारेण परिखिन्नं क्लिष्टं सुन्दरीणां रमणीनां यौवनं तारुण्यं वा वनं काननं वा ॥ [ मालिनी ]

१) सु१.२. ना१.३.४. ग्र२.३. वचोभिः ( प्रलापैः ) । —३) तु२. °मदमल्लीलालसं ॥

भ. १७७१ (६८५) । सु. ३४५३ (भट्टोद्भटस्य) । सुभा. पृ० २५२.५२ (भट्टोद्भटस्य) ॥
नी० श० ११ (भ० श०)

सत्यं जना वच्मि न पक्षपाताल्लोकेषु सप्तस्वपि तथ्यमेतत् ।
नान्यन्मनोहारि नितम्बिनीभ्यो दुःखैकहेतुर्न च कश्चिदन्यः ॥ ४० ॥

सत्यमिति ॥ हे जना लोकाः सत्यं यथार्थं वच्मि वदामि । पक्षपातात्स्त्रीपक्षावलम्बनात् न वच्मि । सप्तस्वपि लोकेषु भुवनेषु भूर्भुवःसुवरादिषु एतद्वक्ष्यमाणं वाक्यं सत्यं तथ्यम् । किं तदित्याह । नितम्बिनीभ्यो युवतीभ्योऽन्यद्वस्तु । 'अन्याराद्तिरर्ते'त्यादिना पञ्चमी । मनोहारि रमणीयं नास्ति । दुःखस्य व्यथाया एको हेतुरसहायं कारणं च कश्चित्कोऽप्यन्य इतरो नास्ति ॥ [ इन्द्रवज्रा ]

[ अडयार्. २८. एम्. ५६ कोशे नास्ति ] १) तु. सु. सत्यं जनान्; म१.५. भो सज्जना । ग्र१. म४.५. पक्षपातो; म१.३. पक्षपातं । —२) तु. ग्र१.२.४. म१.२. सत्यमेतत्; म४.५. मध्यमेतत् । —३) तु२. म३–५. नान्यं । ना२. विलासिनीभ्यो । —४) ग्र२ (मू). दुःखस्य; ग्र४. न दुःख–(दुःखैक–) । ना२. हि (च) । ग्र४. किंचिदस्ति; म१. किंचिदन्यत्; म२. किंचिदन्यः; म३. कश्चिदन्यत्; म४.५. कश्चिदेव ॥

भ. ६७२० (३१२७) । सु. २२३१ ॥

## शृङ्गारशतके द्वितीयविंशतौ अधिकौ ।

अवचनं वचनं प्रियसंनिधावनवलोकनमेव विलोकनम् ।
अवयवावरणं च यदंशुकं व्यतिकरेण तदङ्गसमर्पणम् ॥ १ ॥

[ना२. शृङ्गार. २.२ ] [ सक. २.८.४. ( पृ० ७३, कालिदासस्य ) ]

काचिन्मृगाक्षी प्रियविप्रयोगे गन्तुं निशापारमपारयन्ती ।
उद्गातुमादाय करेण वीणामेणाङ्कमालोक्य शनैरहासीत् ॥ २ ॥

[म४.५. शृङ्गार. २.२] [शा. ५१९ । सुर. पृ० १४७.६ (शार्ङ्ग०) । सुभा. पृ० १८५.३१]

## ॥ कामिनीगर्हणम् ॥

*कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युन्नम-
त्पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ।
दृष्ट्वा माद्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि
प्रत्यक्षाशुचिभस्त्रिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ॥४१॥

कान्तेति ॥ विद्वान्धीरोऽपि प्रत्यक्षां दृग्गोचरां अशुचिभस्त्रिकां अपवित्रमयचर्मभस्त्रिकाम् । अशुचिपुत्रिकामिति पाठे अपवित्रमयपाञ्चालिकां

स्त्रियं नारीं दृष्ट्वा विलोक्य कान्ता रमणीयेति उत्पललोचना कुवलयनयनेति विपुलश्रोणीभरा पृथुकटिभारेति उन्नमन्तावुद्गच्छन्तौ पीनौ पीवरावुत्तुङ्गावुच्छ्रितौ पयोधरौ कुचौ यस्याः सा तथाविधेति सुमुखाम्भोजा शोभनवदनकमलेति सुभ्रूः शोभनभ्रूकेति माद्यति उन्मत्तो भवति मोदते हृष्यति अभिरमते क्रीडति प्रस्तौति प्रसञ्जयति । मोहस्य मायाया दुश्चेष्टितं दुश्चरित्रं अहो आश्चर्यम् । मूढं माया मोहयतु नाम विद्वांसं कथं मोहयतीति चित्रम् ॥ [ शार्दूलविक्रीडितम् ]

[ म४.५. कोशयोर्नास्ति ] १) ना२. °श्रेणीभरे° । —३) ना५. च (ऽभि°) । —४) तु. सु१.२. ना१.२. रा (टी.पा) °पुत्रिकां; ते२ °पुत्रिभञ्जिकां (°भञ्जिकां) । ना२. होमस्य दुश्चेष्टितम् ॥

भ. १६३३ (६३५) । सुभा. पृ० २५०.१९ ॥

स्मृता भवति तापाय दृष्टा चोन्मादवर्धिनी ।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥ ४२ ॥

स्मृतेति ॥ या [ स्मृता चिन्तिता ] ( श्रुता आकर्णिता ) तापाय ज्वराय भवति । दृष्टा अवलोकिता चेत् उन्माद [ वर्धिनी ] ( कारिणी ) चित्तविभ्रमविधायिनी भवति । स्पृष्टा संसक्ता मोहाय मूर्च्छायैव भवति । सा तादृशी दयिता नाम कथम् । दुःखहेतोर्वस्तुनो दयितत्वं विरुद्धम् । तस्मात्तथाविधा दयिता प्रिया न भवतीत्यर्थः । नामशब्दः कुत्सने । 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः ॥ [ अनुष्टुप् ]

१) ना१.२. म्र१.३.५. म३. श्रुता; ना५. श्रुत्वा ( स्मृता ); म्र२ (मू). श्रुतं । सु (मू). पापाय (तापाय) । —२) तु२. म्र४. म२.३. दृष्ट्वा; ते२. दृष्टा । सु२. ना१.५. रा. ते. म्र१–३.५. चोन्मादकारिणी । —३) तु२. म्र४. स्पृष्ट्वा; ते२. स्पृष्टा । सु२. भवतु । म्र१. पापाय ( मोहाय ) । ना५. साधूनां ( सा नाम ) ॥

भ. ६५६५ (३३२०); सुभाष. १७ ( १३३, २९३ ) । सु. १२२५ । सूहा. १८३.३ ( वल्लभस्य ) ॥

तावदेवामृतमयी यावल्लोचनगोचरा ।
चक्षुःपथादतीता तु विषादप्यतिरिच्यते ॥ ४३ ॥

तावदिति ॥ यावत् यावत्पर्यन्तं लोचनगोचरा प्रत्यक्षा भवति । तावत्तावत्पर्यन्तं अमृतमयी अमृतस्वरूपिणी । कामिनीति शेषः । चक्षुःपथाल्लोचनमार्गात् । 'पथिमथी'[ऋक्पूरि]त्यादिना अकारान्तः । अतीता अतिक्रान्ता तु । दृग्गोचरा न चेदित्यर्थः । विषात् गरलादपि अतिरिच्यते अतिशेते । कामिनी नरस्य संभोगावधि सुधास्वादनवद्वर्तते । भोगानन्तरं विषतुल्या भवतीति भावः ॥ [ अनुष्टुप् ]

३) तु२. सु१.३. ना१.२. रा१. ते. म्र१.४. चक्षुष्पथाद्; सु२. चतुष्प° । तु. सु. अपेता; ना२. अपेत्ता (अतीता) । —४) म्र१. सा नारी विषवल्लरी ॥

भ. २५४६ (१०२८)। सु. १२४४ ॥

नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् ।
सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥ ४४ ॥

नामृतमिति ॥ नितम्बिनीं ललनामेकां(तां) मुक्त्वा त्यक्त्वा अमृतं पीयूषं गरलं विषं किंचिन्नास्ति। नितम्बिन्येवामृतं नितम्बिन्येव विषं चेत्यर्थः। कस्यामवस्थायाममृतं कस्यामवस्थायां विषमित्याकाङ्क्षायामाह। सैव नितम्बिन्येव रक्ता अनुरागवती भवति चेत् अमृतलता पीयूषवल्ली। विरक्ता अनुरागरहिता चेत् सैव नितम्बिन्येव विषवल्लरी क्ष्वेलव्रततिः ॥ [अनुष्टुप्]

[ग्र१. कोशे श्लोको नास्ति।] —१) ना२. विनामृतं विषं किंचिद्। तु१. ग्र२ (मू). नाविषं; ना३. न मृषं (न विषं)। —२) तु२. ना२. म१. विना; ना१.३. ग्र३.४. एतां; ग्र५. म४.५. एनां; म३-एक-(एकां)। तु. मुक्तां; ना२. मुग्धा; म१. मुग्धां; म३. मुक्ता। —३) ग्र२ (मू). °मृतरसालक्ता; ग्र४. °मृतमयीरक्ता। —४) ना५. वियुक्ता (विरक्ता) ॥

भ. ३६०८ (१५४९); पञ्चतन्त्रे ४.३४(३२); सुभाष्. १२। सुभा. पृ० २५१.१० सुर. पृ० ११४.११ (भर्तृ°) ॥

आवर्तः संशयानामविनयभवनं पट्टणं साहसानां
दोषाणां संनिधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।
स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं
स्त्रीयन्त्रं केन सृष्टं विषममृतमयं प्राणिलोकस्य पाशः ॥ ४५ ॥

आवर्त इति ॥ संशयानां संदेहानामावर्तः भ्रमः। अविनयानां दुर्नयानां भवनं निवासः। साहसानामविमृश्यकार्याणां पट्टणं नगरम्। दोषाणां दुर्गाणां (दुर्गुणानां) संनिधानं सुनिक्षेपः। कपटानां दम्भानां शतानि समूहास्तन्मयं तत्स्वरूपम्। अप्रत्ययानां अबोधानां (अविश्वासानां। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः) क्षेत्रं आकरः। स्वर्गद्वारस्य त्रिदिवगोपुरस्य विघ्नः प्रत्यूहः। 'विघ्नोऽन्तरायः प्रत्यूह' इत्यमरः। नरकपुरस्य निरयनगरस्य मुखं द्वारम्। सर्वासां अशेषाणां मायानां शाम्बरीणां करण्डं समुद्गकः। प्राणिलोकस्य जन्तुसमूहस्य पाशो बन्धनरज्जुः। अमृतमयं सुधाप्रचुरं विषं गरलं सुखदुःखयोर्हेतुत्वात्। एवंविधं स्त्रीयन्त्रं स्त्रीरूपं कूटं उन्माथ इति यावत्। केन हेतुना सृष्टं निर्मितं। विधिनेति शेषः ॥ [स्रग्धरा]

१) म३. आवासः (आवर्तः)। तु१. शंसयानां। सु३ (मू). अभिनवभवनं; ना३-५. रा. ग्र५. अविनयभुवनं। सु. ग्र५. पत्तनं; म४.५. मण्डपं। —२) तु१. देवानां (दोषाणां)। ग्र१. कृमिशतनिलयं क्षेत्र°। —३) तु१. ना२. ग्र१. म४. विघ्नं; तु२ (मू). विप्रं (विघ्नो)। म३. सर्व-

मायाकराणां । —४) प्र४. दृष्टं (सृष्टं) । सु१. जीवलोकस्य; सु२.३. प्राणिनामेक–; ग्र१. म१. प्राणिलोकैक–; म२. सर्वलोकैक–। म४.५. प्राणिनां प्राणहारि । ग्र१.४. पाशं (पाशः) ॥

भ. १०३८ (३९२); शान्तिशतके २.३; पञ्चतन्त्रे १.२०४ (१५२, १९१)। सुभा. पृ० ३५०.८३ ॥

नो सत्येन मृगाङ्क एष वदनीभूतो न चेन्दीवर-
द्वंद्वं लोचनतां गतं न कनकैरप्यङ्गयष्टिः कृता ।
किं त्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि
त्वङ्मांसास्थिमयं वपुर्मृगदृशां मन्दो जनः सेवते ॥४६॥

नो इति ॥ सत्येन परमार्थेन मृगाङ्कश्चन्द्र [एषोऽयं] (एव) वदनीभूतो मुखीभूतो नो न भवति । मा नो वा (अमानो न) प्रतिषेधे । वदनीभूत इति अभूततद्भावे च्विः । अस्य च्वावितीत्वम् । इन्दीवरद्वंद्वं नीलोत्पलयुगलं लोचनतां नेत्रत्वं न गतं न प्राप्तम् । अङ्गयष्टिरपि यष्टितुल्या तनुश्च कनकैर्हाटकैः कृता निर्मिता न भवति । किंतु अपि तु । एवमनेनोक्तप्रकारेण कविभिः काव्यनिर्माणकुशलैः प्रतारितमनाः वञ्चितचेताः सन् तत्त्वं यथार्थं रूपं विजानन्नवगच्छन्नपि मन्दो जनः मूढलोकः त्वङ्मांसास्थिमयं अजिनामिषकीकसविकारं मृगदृशां हरिणलोचनानां वपुः शरीरं सेवते भजते ॥ [ शार्दूलविक्रीडितम् ]

१) ना२. नो सत्येव; ग्र४. नो सत्येषु; म३. नासत्येन । सु१. ग्र२.३. (टी).४. एव ( एष ) । —२) ना२. लोचनतागतं । ना२. कुसुमैरप्यङ्ग°; ग्र४. कनकैरस्याङ्ग° । ना२. °यष्टीकृता । —३) ना२. त्वैवं । सु. प्रतारितमतस्; ग्र१. प्रतारिरगुणं । ते१. स्वत्वं । तु. न जानन्नपि । —४) ते१. सेव्यते ॥

भ. ३८३८ (१६५४) ॥

लीलावतीनां सहजा विलासास्त एव मूढस्य हृदि स्फुरन्ति ।
रागो नलिन्या हि निसर्गसिद्धस्तत्र भ्रमत्येव मुधा षडङ्घ्रिः ॥४७॥

लीलावतीनामिति ॥ लीलावतीनां विलासवतीनां विलासाः शृङ्गारचेष्टाः सहजाः स्वाभाविकाः । त एव विलासा मूढस्याज्ञानिनो हृदि चित्ते स्फुरन्ति प्रकाशन्ते । मामेवोद्दिश्यैतान्विलासान्दर्शयन्तीति मूढः प्रत्यवबुध्यते । नलिन्याः कमलिन्या रागो रक्तता निसर्गसिद्धः स्वभावसिद्धो हि । षडङ्घ्रिः षट्पदः मुधा व्यर्थमेव तत्र नलिन्यां भ्रमति परिभ्रमति । रागशब्देन रक्तवर्णः अनुरागश्चोच्यते । भ्रमतीत्यनेनापि परिभ्रमणं भ्रान्तिज्ञानं चोच्यते ॥ [ उपजातिः ]

१) म३. विलासिनीनां । तु२. महजा; ग्र३. सहसा ।—२) वे१. ता एव । —३) तु. ऽथ; ग्र१.४. म१.२.४. च (हि) ।—४) तु२. सु (मू). भ्रमत्येष । ना२. ते. ग्र३ (मू). म१–३. मुदा; ना३–५. रा. वृथा ॥

भ. ५८५७ (२६७३); सुभाष. २१२ । सुर. पृ० २७१.१० ( स्फुटश्लोके ) ॥

यदेतत्पूर्णेन्दुद्युतिहरमुदाराकृतिधरं
मुखाब्जं तन्वङ्ग्याः किल वसति यत्राधरमधु ।
इदं तत्किंपाकद्रुमफलमिदानीमतिरसं
व्यतीतेऽस्मिन्काले विषमिव भविष्यत्यसुखदम् ॥ ४८ ॥

यदेतदिति ॥ पूर्णेन्दोरखण्डसुधाकरस्य द्युतिहरं कान्तिचोरं उदाराकृतिधरं सुन्दराकारधरं तन्वङ्ग्याः कृशाङ्ग्याः मुखाब्जं वदनकमलम् । यत्र (तत्र) तस्मिन्वदनकमले अधररूपमधुमाक्षिकं वसति तिष्ठति किल । किलेति वार्तायाम् । तदिदं किंपाकद्रुमफलं विषवृक्षप्रसूनरूपकमिदं विषवृक्षफलतुल्यमित्यर्थः । अधरमधुनः किंपाकद्रुमस्य च साम्यमाह अस्मिन्काले व्यतीते सति । एतस्मिन्ननुभवसमयेऽतिक्रान्ते सति विषं गरलमिव असुखदं दुःखदायि भविष्यति । सुखं दुःखमेव भविष्यतीत्यर्थः । इदानीमनुभवनकाले अतिरसमतिस्वादु ॥ [ शिखरिणी ]

१) तु. ग्र३ (मू). °द्युतिधरम्; ग्र१. म१.२.४.५. °द्युतिभरम् । ना२.३. रा. ते. परं; ना५. म४.५. वरं; म३.-रसं (-धरं) ।—२) सु (मू). ना१.३.४. ग्र२.३. तत्राधर° ।—३) ग्र१. °त्किंपतद्रुम°; ग्र४. °त्किंपाकभ्रम° । तु. इवास्तां च विरसं; ना५. इदानीमविरसं ।—४) ग्र४. विषयेन्दुसुखदः; म४.५. भविष्यत्यनुपमं ॥

भ. ५२५५ (२३७९); शतकावलौ ७३ ॥

उन्मीलत्त्रिवलीतरङ्गवलया प्रोत्तुङ्गपीनस्तन-
द्वंद्वेनोद्धतचक्रवाकयुगला वक्त्राम्बुजोद्भासिनी ।
कान्ताकारधरा नदीयमभितः क्रूरात्र नापेक्ष्यते
संसारार्णवमज्जनं यदि ततो दूरेण संत्यज्यताम् ॥ ४९ ॥

उन्मीलदिति ॥ उन्मीलन्त्यः स्फुटीभवन्त्यः त्रिवल्यः वलित्रयमेव तरङ्गवलयं ऊर्मिमण्डलं यस्याः सा । प्रोत्तुङ्गयोः प्रकृष्टोत्सेधयोः पीनयोः स्थूलयोः स्तनयोर्वक्षोजयोः द्वंद्वेन युगलेन उद्धतचक्रवाकयुगला गर्वितकोकमिथुना । प्रोत्तुङ्गपीनस्तनद्वंद्वमेव चक्रवाकयुगलमित्यर्थः । वक्त्रेण मुखेनैव अम्बुजेन पद्मेन उद्भासिनी प्रकाशमाना । अभितः अग्रे ( पुरतः ) क्रूरा अनिष्टा । कान्ताकारधरा स्त्रीवेषधारिणी । इयं नारी तरङ्गिण्येव न तु स्त्रीति विश्वसनीया । अत्र अस्यां नद्यां संसारार्णवमज्जनं भवजलधिमो(मे)लनं यदि नापेक्ष्यते नाभिलष्यते । ततः तर्हि इयं नदी दूरेण दवीयसा आवेशेन संत्यज्यताम् । यस्तु कान्ताकारधरायां नद्यां निपतितस्तया नद्या वेगेनाकृष्टः संसारार्णवे न मज्जतीत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) तुर (मू). ना३.५. रा. ते. म१. म३. °निलया; म४. म१.२. °निचया; म५. °वलय- । —२) तु. म४. म४.५. °द्वंद्वेनोद्यत°; सु. ना२. °द्वंद्वेनोद्धृत°; ना३.४. रा. ते. म३. °द्वंद्वेनोद्गत°; ना५. °द्वंद्वेनोपरि; म१. °द्वंद्वोन्मादिनि । म४. –चक्रवाल– । तु. ना२. °मिथुना; सु१.२. °युगुला; म२ (मू). °युगळी । म४. म४.५. धैर्यद्रुमध्वंसिनी । —३) ना५. कान्ताकान्त्युदका; म३. कान्ता-कारमहा-। तु. क्रूराशया नेक्षते; सु. क्रूराशया नेक्ष्यते; सु (टीपा). ना३–५ रा. क्रूरात्र नापेक्षते; म४. क्रूरात्रिनावेक्षते; म१. क्रूरात्र संलक्ष्यते; म२. क्रूरात्र सा लक्ष्यते; म३. क्रूराननापेक्षते; म४.५. क्रूरोत्तरा लक्ष्यते । —४)ना५. °लङ्घनं यदि तदा; रा. ते. °मज्जनं यदि तदा; म१. म१–३ °लङ्घन-क्षमधिया ॥

भ. १२६९ (४७७); शतकावलौ ७३ ॥

जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृद्गतं चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ ५० ॥

**जल्पन्तीति ॥ अन्येन परेण सार्धं जल्पन्ति वाक्केलिं कुर्वन्ति । सविभ्रमा विलाससहिताः सत्यः प्रकटितविलासा इत्यर्थः । अन्यं जनं पश्यन्ति विलोकयन्ति । हृद्गतं हृदयस्थितमन्यं पुरुषं चिन्तयन्ति विचारयन्ति । तरुण्य इति शेषः । योषितां स्त्रीणां को नाम को वा पुरुषः प्रियो भवति । न कोऽपीत्यर्थः । स्त्रीणां चञ्चलचित्तत्वादेकस्मिन्पुरुषेऽनुरागो नास्ति । अनुरक्ता इव चेष्टाः प्रकटयन्तीति भावः ॥** [ अनुष्टुप् ]

[ अड्यार् २८ एम्. ५६ कोशे नास्ति ] १) तु१. जल्लन्ती; तु२. जल्पलन्ती; ते. ज्वलन्ति । ना२. सार्थम° । —२) सु१.२. पश्यत्यन्यं; म४.५. विशन्त्यन्यं । सु३. म३. सविभ्रमा; म४. ससंभ्रमाः । —३) तु. हृदये; म. हृद्गदं । तु२. सु. ना१.२. चिन्तयत्यन्यं । —४) सु. योषितः ॥

भ. २३७१ (९५१); पञ्चतन्त्रे १.१५१ (१३५); सुभाष्. २३ । विक्रमचरित्रे ३४ । शा. १४९७ । सु. २७७१ (श्रीव्यासमुनेः) । सुर. पृ० ११५.१३ (स्फुटश्लोके) । सुभा. पृ० ३४८. ५ ( व्यासस्य ) । चाणक्यनीतिदर्पणे १६.२ । सूहा. ५४.२ ( प्रतापरुद्रीये ) ॥

मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् ।
अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥ ५१ ॥

**मध्विति ॥ योषितां युवतीनां वाचि वचने मधु क्षौद्रम् । हृदि मनसि केवलमत्यन्तं हालाहलं कालकूटविषमेव तिष्ठति वर्तते । अतस्तस्मात्कारणादेव वदने मधुनश्चित्ते कालकूटस्य च स्थितिहेतोरित्यर्थः । अधरः अधरोष्ठो निपीयते पानं क्रियते । कामिभिरिति शेषः । हृदयं उरः मुष्टिभिः मुष्टिहस्तैस्ताड्यते आहन्यते । स्त्रीणां वचसि माधुर्यं मनसि कौटिल्यमेवेति तात्पर्यम् ॥** [ वियोगिनी ]

[ रा. ते१. अड्यार् २५ एल् २ कोशेषु अयं श्लोकः तृतीयविंशत्यन्ते दृश्यते ] २) सु (मू). हालाहालम्; ना२. हलाहलम्; म२. हालाहल । —३) म४. अधरं (अधरो) ॥

भ. ४६७७ (२०९७); सुभाष्. १७। पञ्चतन्त्रे १.१५१ (१८९)। हितोपदेशे ६५.८। शृङ्गारबिन्दौ। कुवलयानन्दे। सु. ३३८० (कालिदासमाघौ)॥

*अपसर सखे दूरादस्मात्कटाक्षविषानला-
त्प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः।
इतरफणिना दष्टः शक्यश्चिकित्सितुमौषधै-
श्चतुरवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः॥ ५२॥

अपसरेति॥ हे सखे प्रियमित्र। कटाक्षादपाङ्गादेव विषानलात्क्ष्वेलाग्नेः प्रकृतिविषमात्स्वभावत एव दुष्टात्क्रूरादित्यर्थः। विलासा लीला एव फणाः स्फुटा बिभर्तीति तथोक्तः। तस्मादस्मात्पुरो विद्यमानात् योषित्सर्पात्स्त्रीरूपभुजंगात् दूराद्दवीयसो देशादपसर त्यज। दूरं यथा तथा विसृजेत्यर्थः। किमर्थमित्याकाङ्क्षायामाह। इतरेति। इतरफणिना योषित्सर्पादन्यविषधरेण। सहजभुजंगेनेत्यर्थः। दष्टः संदंशितो जनः औषधैर्मूलपत्रादिविषहरैश्चिकित्सितुं विषप्रतिक्रियां कर्तुं शक्यो योग्यः। चतुरवनिताभोगिग्रस्तं सुन्दररमणीरूपसर्पदष्टं जनं मन्त्रिणो मन्त्रज्ञास्त्यजन्ति विसर्जयन्ति। महान्तः स्त्रीलोलं पुरुषं न परिगृह्णन्ति। अपि तु दूरत एव निन्दन्ति। तस्मादत्यन्तं स्त्रीसंसक्तिं परिहरेदिति तात्पर्यम्॥ [हरिणी]

[तु. कोशे. नास्तीदं पद्यम्; सु टीकायां तु क्षेपकत्वेन निर्दिष्टम्] १) सु. ना१. खेदात् (अस्मात्)। ग्र१. °विशिखानलात्; म४.५. विषोल्बणात्। —२) म४.५. °स फणानिलात्। —३) ते२. °भणिना। —४) ग्र५. म४.५. चटुल° (चतुर°)। म१.२.४.५. मन्त्रिकाः॥

भ. ४१० (१४२)॥

विस्तारितं मकरकेतनधीवरेण
स्त्रीसंज्ञितं बडिशमत्र भवाम्बुराशौ।
येनाचिरात्तदधरामिषलोलमर्त्य-
मत्स्यान्विकृष्य विपचत्यनुरागवह्नौ॥ ५३॥

विस्तारितमिति॥ अत्र अस्मिन् भवः संसार एवाम्बुराशिः समुद्रस्तस्मिन्। मकरकेतनेन धीवरेण मदनदाशेन। 'कैवर्तो दाशधीवरा'वित्यमरः। स्त्रीसंज्ञितं स्त्रीनामधेयं बडिशं मत्स्यग्रहणजालम्। 'बडिशं मत्स्यबन्धन'मित्यमरः। विस्तारितं विपुलीकृतं विक्षिप्तमिति यावत्। येन बडिशेन। तदधरामिषलोलमर्त्यमत्स्यान् तासां स्त्रीणामधरोष्ठा एवामिषं मांसं तस्मिन् लोलाः सतृष्णाः ते च ते मर्त्या मनुष्यास्त एव मत्स्या मीनास्तान्विकृष्य आकृष्य अचिराच्छीघ्रमेव। अनुरागोऽभिलाषः स एव वह्निस्तस्मिन्विपचति विशिष्य पाकं करोति। जनानां स्त्रिय एव मोहकारणं नान्यदिति भावः॥ [वसन्ततिलका]

२) ना२. °संज्ञकं बिडिश°; ते२. °संज्ञतं बरिश° । —३) तु. येनानिशं तद°; ना२. येनात्त-चित्तम° । ना१. तवधरामिव; ना३.४. ग्र४. म३. तदधरामृत-( तदधरामिष- ) । —४) ना१. –मच्छान् । तु. सु. ना१.२. ग्र१. स पचत्य° ॥

भ. ६२३७ (२८७७); शतकावलौ ७४ ॥

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।
मा संचर मनःपान्थ तत्रास्ते स्मरतस्करः ॥ ५४ ॥

**कामिनीति ॥ हे मनःपान्थ चित्ताध्वनीन । कुचाभ्यां स्तनाभ्यामेव पर्वताभ्यां शैलाभ्यां दुर्गमे गन्तुमशक्ये कामिनीकाये वनितादेह एव कान्तारे महारण्ये । 'महारण्ये दुर्गपथे कान्तारं पुंनपुंसकमि'त्यमरः । मा संचर नो गच्छ। संचरणे को बाध इत्याशङ्क्याह तत्र कामिनीकायकान्तारे स्मरतस्करः कन्दर्प एव चोरः आस्ते तिष्ठति । असौ धैर्यस्वं अपहरतीति तत्र संचरणस्य प्रतिषेधः ॥** [ अनुष्टुप् ]

[ म३. कोशे पूर्वोत्तरार्धौ व्यत्यस्तौ ] २) म१.२. स्तन° ( कुच° ) ॥

भ. १६६० (६४२); सुभाष. १४ (२४५) । सु. १२५६ । सुर. पृ० १२७.३ ॥

व्यादीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना
नीलाब्जद्युतिनाहिना परमहं दष्टोऽस्मि तच्चक्षुषा ।
दष्टे सन्ति चिकित्सका दिशि दिशि प्रायेण धर्मार्थिनो
मुग्धाक्षीक्षणवीक्षितस्य न हि मे वैद्यो न चाप्यौषधम् ॥ ५५ ॥

**व्यादीर्घेणेति ॥ व्यादीर्घेणात्यायतेनातिविस्तारिणा च वक्रगतिना कुटिलगमनेन तेजस्विना प्रतापवता कान्तिमता च भोगिना फणवता सुखवता च । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययो'रित्यमरः। नीलाब्जद्युतिना नीलोत्पलच्छायेन अहिना विषधरेण तस्या वनितायाश्चक्षुषा नेत्रेण । कटाक्षेणेति यावत् । परमत्यर्थं यथा भवति तथा । दष्टोऽस्मि कवलितोऽस्मि । व्यादीर्घेणेत्यादिविशेषणविशिष्टकामिनीचक्षुषा सर्पेण वा दष्टोऽस्मीत्यर्थः । उभाभ्यां दष्टे विविच्य कार्यं दर्शयति । दष्टे सर्पेण कवलिते सति धर्मार्थिनः धर्मकाङ्क्षिणश्चिकित्सका रोगहारिणः । विषवैद्या इति यावत् । दिशि दिशि प्रतिदिशम् । वीप्सायां द्विर्भावः । प्रायेण प्राचुर्येण सन्ति विद्यन्ते । मुग्धाक्षीक्षणवीक्षितस्य सुन्दरलोचनासकृद्विलोकितस्य मे मम वैद्यश्चिकित्सको न हि नास्ति हि। औषधं रोगप्रतीकारसाधनं च नास्ति॥** [ शार्दूलविक्रीडितम् ]

१) तु. ज्यादीर्घेण; ना५. भ्रूदीर्घेण; ग्र१. व्यादीर्णेन; म४.५. व्याकीर्णेन । म. खलेन ( चलेन )। तु१. ग्र२ ( मू ). वक्तृगतिना; ग्र४. वक्तृशशिना । —२) तु२. °नाहिमा । ना२. °नापि सादरमहो । सु१.२. वरमहं; ग्र४. म३. परमहो । तु१. सु१.२. ना२. रा. ते.ग्र१.४. दष्टो न; तु२. दृष्टो न; म३. दोषोस्ति । ग्र४. मच्चक्षुषा; म३. तच्चक्षुषां । —३) तु. दृष्टे; ना३–५. रा. दष्टः । ग्र१.४. म. धर्मा

त्मनो—४) ग्र३ ( मू ). मुग्धाक्षि । म१.२. °क्षणमीक्षितस्य; म४.५. °क्षणवेधितस्य । ना२. च ( हि ) । तु. मन्त्रो; ना२. ग्र१. वैद्या । सु.ग्र१. चान्यौषधम्; म४.५. चान्यौषधः ॥

भ. ९३५ (३४२); शतकावली ७४ ॥

इह हि मधुरगीतं नृत्तमेतद्रसोऽयं
स्फुरति परिमलोऽसौ स्पर्श एष स्तनानाम् ।
इति हतपरमार्थैरिन्द्रियैर्भ्राम्यमाणः
स्वहितकरणधूर्तैः पञ्चभिर्वञ्चितोऽस्मि ॥ ५६ ॥

इहेति ॥ इहास्मिन्वधूजने मधुरं श्रवणसुखावहं गीतं गानम् । इहास्मिन्वधूजने एतदिदं नृत्तं लास्यम् । इहास्मिन्वधूजने अयं रसो माधुर्यम् । इहास्मिन्वधूजने मलयजातिवासोद्भूतः परिमलो मनोहरोऽसौ । इहास्मिन्वधूजने स्तनानां कुचानामेष स्पर्शः । इयं सृष्टिः स्फुरतीति सर्वत्र संबन्धः । इत्यनेन प्रकारेण हतपरमार्थैः नाशिततत्त्वरूपैः {स्वहितकरणधूर्तैः आत्महिताचरणतत्परैरिव स्थितैः-रा-} (अहितकरणधूर्तैरनिष्टविधानकितवैः) पञ्चभिः पञ्चसंख्याकैः इन्द्रियैः श्रोत्रनेत्ररसनाघ्राणस्पर्शनसंज्ञकैः करणैर्भ्राम्यमाणः पर्याकृष्यमाणः सन्वञ्चितोऽस्मि प्रतारितोऽस्मि । तुशब्दोऽवधारणे । वञ्चित एवासीत्यर्थः ॥ [ मालिनी ]

१) सु. ना१. इह तु; ग्र२ ( मू ). इह ह; म३. इति हि । तु.सु. रूप°; ना२. ते२. नृत्य° ( नृत्त° ) । —२) ना२. ग्र४. ऽयं ( ऽसौ ) । —३) ना२. इतिवदपर° । म४. भ्राम्यमाणैः । —४) सु( टीपा ). ना१. ग्र२.३. त्वहित° । ग्र४. °भूतैः ( °धूर्तैः ) ॥

भ. ११४७ (४३४) ॥

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः ।
भ्रमावेशादङ्गे किमपि विदधद्भङ्गमसकृ-
त्स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ ५७ ॥

नेति ॥ अयं परिदृश्यमानः स्मरापस्मारो मन्मथोन्मादो मन्त्राणां मनूनां न गम्यो गन्तुं न शक्यः । भैषज्यस्य चिकित्साया विषयो गोचरो न भवति । विविधैर्नानाविधैः शान्तिकशतैः प्रशमनप्रयोगैः प्रध्वंसं नाशं न च व्रजति न याति । भ्रमावेशादज्ञानवशात् अङ्गेऽवयवे {असकृद्बहुवारं-रा-} (असममतुलं) किमपि इत्थमिति वक्तुमशक्यं भङ्गं व्यथां विदधत् विधित्सन् भ्रमयत्यावर्तयति । दृशं दृष्टिं घूर्णयति उन्मेषयति केनापि अपरिहार्योऽयं स्मरोन्मादः कामपि व्यथां करोतीति भावः ॥ [ शिखरिणी ]

१) म४.५. अगम्यो। ते१. न भवति च। ना२.ग्र४. °विषया। —२) ना३.४. न चाति-। ते१. प्रध्वस्तं। तु(मू). म१.२.४.५. शान्तिशतकैः; म३. शान्तिकृतमैः। —३) ना१.३.४. ग्र३ (मू). ४. °दङ्गैः। ना ३-५. रा. ते. कमपि। सु. च विपद्-; ग्र१. विविदद्-; ग्र४. विविध°; म४. विपदद् (विदधद्)। सु. संगमनकृत्; ना१. भंगमनसं; ना२. ग्र२.३. म२. भंगमसमं; ग्र१. म४.५. भङ्गुरसमं; ग्र४. ध्वंसमसकृत्। —४) तु. स्मरोप°। तु. मनो; ग्र१.२. (मू). म२.४.५. मृशं; म३. दिशं (दृशं)। म३. पूर्णयति ॥

भ. ३२१७ (१३६५); शतकावलौ ७४। सूमु. ७०.५ (त्रिविक्रमभट्टस्य)। सुभा. पृ० २५०. १८. सुर. पृ० १२६.३ (शार्ङ्ग°) ॥

जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च।
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥५८॥

**जात्यन्धायेति ॥** जात्यन्धाय जन्मप्रभृति दृगिन्द्रियविहीनाय दुर्मुखाय दुष्टलपनाय। च जरया वार्धक्येन जीर्णानि विशीर्णानि अखिलानि सर्वाण्यङ्गानि करचरणादीनि यस्य तस्मै तथाविधाय। ग्रामीणाय ग्राम्याय च। भण्डायेति यावत्। दुष्कुलाय दुष्टवंशाय। गलता भ्रश्यता कुष्ठेन त्वग्रोगेणाभिभूताय तिरस्कृताय। मनोहरं सुन्दरं निजं स्वकीयं वपुः देहं कर्म। लक्ष्मीलवश्रद्धया संपल्लेशतात्पर्येण यच्छन्तीषु ददतीषु। विवेकः विवेचनमेव कल्पलतिका कल्पवल्ली तस्याः शस्त्रीषु छुरिकासु पण्यस्त्रीषु वारवधूषु। कः पुरुषो रज्येत अनुरक्तो भवेत्। न कश्चिदित्यर्थः ॥ [शार्दूलविक्रीडितम्]

१) ग्र४. दुष्कुलाय; म४. दुर्बलाय (दुर्मुखाय)। ग्र३. (मू). °कीर्णाखिला°। —२) सु१. ना१. ग्रामीण्याय; ग्र१. ग्रामिण्याय। तु. च दुष्कुलाय; ग्र४. च दुर्मुखाय; म४.५. गलद्विजाय। म४. ५. तथा (गलत्-)। म३. °जाताय (°भूताय)। —३) ना२. यच्छन्तीह; ते२. यच्छन्तेषु; ग्र२(मू). गच्छन्तीषु। ना२. मनोरमं। —४) ग्र२(मू). ३ (शोधनात्पूर्वं). पुण्यस्त्रीषु। तु. °सुस्त्रीषु सज्येत कः; ना१. °शास्त्रेषु सज्येत कः; ना४. ग्र३ (मू). °शास्त्रेषु लज्जेत कः; ते१. ग्र२.४. म१. °शास्त्रेषु रज्येत कः; ग्र१. न स्त्रीषु लज्जा कुतः; म२. °शास्त्रेषु लज्जा कुतः; म३. °शस्त्रीषु लज्जा कुतः; म४. °शास्त्रेषु रम्येत कः; म५. °शास्त्रेषु रञ्जेत कः ॥

भ. २३९१ (९६७)। सुभा. पृ० ३५५.१। सुर. पृ० १०५.४ ॥

वेश्यासौ मदनज्वाला रूपेन्धनविवर्धिता।
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ ५९ ॥

**वेश्येति ॥** असौ वेश्या प्रसिद्धवेश्या रूपेन्धनेन सौन्दर्यसमिधा करणेन विवर्धिता समेधिता मदनज्वाला मन्मथानलार्चिः। यत्र यस्यां वेश्यारूपायां ज्वालायां

कामिभिः कामुकैः यौवनानि तारुण्यानि धनानि वित्तानि च हूयन्ते दीयन्ते । वाराङ्गनाकामुकस्य न केवलं धनमेव क्षीयते अपि तु यौवनमपीत्यर्थः ॥ [ अनुष्टुप् ]

१–२) ग्र४. वेश्या नाम मदज्वाला रागेन्धन° । ग्र१. वेश्या सा; म४.५. वेश्याग्नौ । म४.५. मदनज्वाले । तु. °समेधिता; ना२. °समृद्धिता; म२. °विवर्जिता; म४.५. °विवर्धिनी । —३) ग्र१. हूयेत ॥

भ. ६२८७ (२८९७) । सुभा. पृ० ३५५.१ । सुर. पृ० १०४.१ ( भर्तृ° ) ॥

*कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि ।
चारभटचोरचेटकनटविटनिष्ठीवनशरावम् ॥ ६० ॥

क इति ॥ चारभटानां प्रणिधिरूपभृत्यानां चोराणां तस्कराणां चेटकानां भुजिष्याणां नटानां शैलूषाणां एवंविधानां विटानां पल्लविकानां नटानां निष्ठीवनस्य निष्ठ्यूतस्य शरावं वर्धमानकं वेश्याधरपल्लवं वाराङ्गनोष्ठकिसलयं मनोज्ञं मञ्जुलमपि कुलपुरुषः सत्कुलप्रसूतः कश्चुम्बत्यास्वादयति । न कोऽपीत्यर्थः । यदि चुम्बति तदानीमसौ कुलपुरुष एव न भवति । अपि तु प्रतिलोमज एवेति ज्ञेयम् ॥ [ आर्या ]

[ म१. कोशे., अडयार् २८ एम् ५६, अडयार् २२. बी. १० कोशयोश्च नास्ति ] २) ग्र४. °रफल्लवं । —३) ग्र५. राज–; म३. जार– (चार–) । तु१. ग्र१. म४. -चेट- ( –चेटक- ) । —४) ना१. ३–५. रा. ते. ग्र३.५. म२. °विटनट° ( °नटविट° ) । तु१. °निष्ठीमन°; तु२. °नष्टीचमन°; सु१. °विष्टीवन° ॥

भ. १५९३ (६२०); सुभाष. २९४ ॥

## शृङ्गारशतके तृतीयविंशतौ अधिकौ ।

किंचिदन्तर्हिते भानौ पद्मिनी वीतरागिणी ।
आलिङ्ग्य मधुपः शेते प्रियः को नाम योषिताम् ॥ १ ॥

[ ग्र१. शृङ्गार. ३.१०; म१.२. शृङ्गार. ३.११; अडयार् २२ बी १०. शृङ्गार ३.११ ]

आपन्मूलं खलु युवतयस्तन्निमित्तोऽवमान-
स्तासां यावत्सलिललहरीभङ्गुरः पक्षपातः ।
अप्येवं भो परिणतशरच्चन्द्रबिम्बाभिरामं
दूरीकर्तुं वदनकमलं नालमस्मत्प्रियायाः ॥ २ ॥

[ म४.५. शृङ्गार. ३.२० ]

## ॥ सुविरक्तदुर्विरक्तपद्धतिः ॥

धन्यास्त एव धवलायतलोचनानां
तारुण्यदर्पघनपीनपयोधराणाम् ।
क्षामोदरोपरि लसत्त्रिवलीलतानां
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ॥ ६१ ॥

धन्या इति ॥ धवलानि शुक्लान्यायतानि दीर्घाणि लोचनानि नेत्राणि यासां तासाम् । तारुण्यदर्पेण यौवनमदेन घना निबिडाः पीनाः पीवराः पयोधराः स्तना यासां तासाम् । क्षामस्य कृशस्योदरस्य जठरस्य उपरि उपरिष्टाल्लसन्त्यो भासमानास्तिस्रो वल्य एव लता व्रतत्यो यासां तासां तरुणीनामाकृतिं सौन्दर्यं दृष्ट्वा विलोक्य येषां जनानां मनश्चित्तं विकृतिं विकारं नैति न गच्छति त एव धन्याः श्लाघनीयाः । दुर्निवारस्य मनसो निवारणे येषामप्रतिहता शक्तिरस्ति त एव लोकेश्वराः श्लाघनीया इत्यर्थः । उक्तं च । "अहल्याया जारः सुरपतिरभूदात्मतनयां प्रजानाथोऽयासीदभजत गुरोरिन्दुरबलाम् । इति प्रायः को वा न पदमपथेऽकार्यत मया श्रमो मद्बाणानां क इव भुवनोन्मादविधिषु" ॥ "रम्यं सद्म नवाकृतिः सुनयना कूजद्द्विरेफा लताः प्रोन्मीलन्नवमल्लिकासुरभयो वाताः सचन्द्राः क्षपाः । यद्येतानि जयन्ति हन्त परितः शास्त्राण्यमोघानि मे तद्भोः कीदृगसौ विवेकविभवः कीदृक्प्रबोधोदयः" ॥ तथा च कालिदासः । "प्रत्यर्थिभूतामपि तां समाधेः शुश्रूषमाणां गिरिशोऽनुमेने । विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः" ॥ [वसन्ततिलका]

१) तु. सु. ना१ (शोधनानन्तरं). २. चपलायत°; ग्र१.४. म. तरलायत° । तु१. °लोचनीनां । —२) ग्र४. °दृप्त° (°दर्प°) । ते२. °घटपीन° । तु१. सु. °पयोधरीणां । —३) म५. °त्रिवलीरसानां । —४) ग्र१. एव (एति) । ना२. एषां (येषाम्) ॥

भ. ३०८१ (१३१०) । साहित्यमीमांसायां ६. (पृ० ८८) ॥

बाले लीलामुकुलितममी मन्थरा दृष्टिपाताः
किं क्षिप्यन्ते विरम विरम व्यर्थ एष श्रमस्ते ।
संप्रत्यन्ये वयमुपरतं बाल्यमास्था वनान्ते
क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ६२ ॥

बाल इति ॥ हे बाले शैशवतारुण्यमध्यस्थे अमी मन्थरा मन्दगामिनो लीलामुकुलितं विलासेन निमीलितं यथा भवति तथा दृष्टिपाता विलोकितानि किमपि क्षिप्यन्ते प्रेर्यन्ते । लीलामुकुलितमिति क्षेपणक्रियाविशेषणम् । विरम विरम निवर्तस्व निवर्तस्व । एषोऽयं भवत्याः श्रमः प्रयासो व्यर्थो निरर्थकः । संप्रति इदानीं

**वयमन्ये परे। पूर्वे न भवामः। बाल्यं शैशवमुपरतं विरतम्। वनान्ते वनमध्ये। आस्था तात्पर्यम्। मोहः क्षीणः अज्ञानं नष्टं जगज्जालं ( तं ) भुवनानां समूहं तृणमिव पलालवत् आलोकयामः पश्यामः॥** [ मन्दाक्रान्ता ]

१) तु. लीलाविलसितममी; ग्र१. लीलामुकुलितवली। ग्र१. मन्दरा; ग्र४. मन्धरा ( मन्थरा )। —३) तु. म४.५. संप्रत्येते। तु. वयमुपरता; ग्र४. वयमपि गतं; म३. वयमुपरतां। ना२. बाल्यमस्था वनान्ते; म३. बाल्यमास्थापनं ते। —४) ना२. नष्टो मोहस्; ग्र४. क्षीणामोदास्। ग्र२ ( मू ). जगज्जातम्॥

**भ. ४४४४ (१९६६); शतकावलौ ७५॥**

इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया।
गतो मोहोऽस्माकं स्मरशबरबाणव्यतिकर-
ज्वरज्वाला शान्ता तदपि न वराकी विरमति॥ ६३॥

**इयमिति॥ इयं बाला अनवरतं संततं इन्दीवरदलानां नीलोत्पलपत्राणां प्रभाचोरं कान्तितस्करं चक्षुर्नेत्रं मां प्रति मां लक्ष्यीकृत्य क्षिपति प्रेरयति। अनया बालया किमभिप्रेतं किं मनसि कृतम्। अस्माकं मोहो गतो नष्टः। स्मरस्य मदनस्यैव शबरस्य म्लेच्छस्य बाणस्य व्यतिकरेण संपर्केण {यो ज्वरः संतापस्तस्य ज्वाला} ( ज्वलन्ती दीप्यमाना ज्वाला ) वह्निशिखा शान्ता उपरता। तदपि तथापि वराकी लोला न विरमति तूष्णीं न तिष्ठति॥** [ शिखरिणी ]

२) तु. प्रभाचौरं। तु१. °प्रेत्य मनया, तु२. °प्रेत्यमनसा। —३) ग्र४. गते मोहे। —४) सु. °ज्वरज्वालाः; ना२. ग्र३. म. °ज्वलज्ज्वाला। तु२. सु. शान्तास्। ग्र४. तदपि च न पारे विरमते। म३. पताकी; म४. वरागी; म५. वियोगी ( वराकी )॥

**भ. ११३० (४२९); शतकावलौ ७५। सक. ५.६३.२ ( पृ० ३१९; ज्ञानशिवस्य )॥**

किं कन्दर्प शरं कदर्थयसि रे कोदण्डटंकारितै
रे रे कोकिल कोमलं कलरवं किं वा वृथा जल्पसि।
मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं
चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते॥ ६४॥

**किमिति॥ रे कन्दर्प नीच मन्मथ कोदण्डस्य चापस्य टंकारितैः टंकारध्वनिभिः [ शरं बाणं ] ( कथं केन प्रकारेण अस्मान् ) कदर्थयसि पीडयसि। किमित्याक्षेपे। अस्मान्पीडयितुं न शक्यत इत्यर्थः। रे रे कोकिल पिक कोमलं सुखकरं कलरवं अव्यक्तमधुरस्वरं वृथा व्यर्थमेव जल्पसि लपसि। किंशब्द आक्षेपे। कोकि-**

लरुतान्यपि नास्माकं विकारमुत्पादयितुं समर्थानीत्यर्थः। हे मुग्धे बुद्धिहीने स्निग्धैः मसृणैः विदग्धैः छेकैः मुग्धैः शारिकैः मधुरैः (सुंदरैः) लोलैः चपलैः कटाक्षैः अपाङ्गावलोकनैः अलम्। अलमिति वारणे। कामिनीकटाक्षाः नास्माकं विक्रियां जनयितुं समर्था इत्यर्थः। 'अलं भूषणपर्याप्तिशक्तिवारणवाचक' मित्यमरः। अस्मिन्नर्थे हेतुमाह। चेतः चित्तं चुम्बितमास्वादितं चन्द्रचूडस्य परमेश्वरस्य चरणयोः पदयोः ध्यानं चिन्तनमेव अमृतं पीयूषं येन तत्तादृशं वर्तते। स्मररिपोश्चरणौ ये ध्यायन्ति तान्स्मरविकाराः किमपि कर्तुं न समर्था इत्यर्थः॥ [शार्दूलविक्रीडितम्]

१) तु२. ना१.३.४. प्र२.३. कथं; ना२ म३. करं; प्र१.४. म१.२.४.५. वृथा (शरं)। प्र१.४. म१.२.४.५. मां; म३. ते (रे)। सु२. °ढङ्कारितै; ना२. °कङ्कारितं; ना५. रा. ते. प्र४. °टङ्कारित; प्र१. म२. झंकारवैः; प्र२.३. °ठंकारितैं; म३. °ठंकारितं। २)— तु. कोमलैः कलरवैः; ना२. कोमलं कलकलं। म. किं त्वं वृथा। प्र४. म३. जल्पसे। —३) तु.सु. ना५. रा. ते. प्र४. °चारु°; प्र१. म४.५. नर्म; म२.निर्म-(-मुग्ध-)। सु१. °मधुरैर्लोलैः; म३. हरिणीतुल्यैः; म४. मधुरालोकैं; म५. मधुरालोलैः। —४) तु१. चुम्बत; तु२. ना१. म३. चुम्बति; प्र१. म१.२.४.५. संप्रति (चुम्बित°)। प्र१. म१.२.४.५. चुम्बति; म३. संप्रति (वर्तते)॥

भ. ५७९९ (२६४०); शतकावलौ ७५। शा. ४०९६ (भर्तृ°)। सुभा. पृ० ३६९.७४ (भर्तृ°)॥

विरहेऽपि संगमः खलु परस्परं संगतं मनो येषाम्।
हृदयमपि विघटितं चेत्सङ्गो विरहं विशेषयति॥ ६५॥

विरह इति॥ येषां स्त्रीपुरुषाणां मनश्चित्तं परस्परमन्योन्यं संगतं संसक्तं चेत् विरहो वियोगोऽपि संगमः खलु। संयोगो हि हृदये मनसि विघटिते भग्ने सति [संगः] संगमः संयोगोऽपि विरहं वियोगमेव विशेषयति विशिनष्टि। येषां शरीरमात्रे विरहः मनः अन्योन्यासक्तं यदि स एव संगमः। मनोवियुक्तं देहमात्रसंयोगो व्यर्थ इति। मनोवियोगे देहमात्रसंयोगात् देहविरहे मनःसंसक्तेर्विशेषात्॥ उक्तं च॥ न तनुसंगम एव संगमो हृदयसंगम एव सुसंगम इति॥ [आर्या]

[अडयार् २२ बी १० कोशे नास्ति] १) तु. सु. ना१–४. प्र३.४. विरहोऽपि। म३. विरहिणः प्रहिणोति संगमं। —२) ना२. प्र१. परस्पर–; म३. खलु पर–। म३. -संगत-। प्र१. म३. मनो न (मनो)। तु१. ना२. एषाम् (येषाम्)। —३) तु.सु. हृदयमसंगतमेषां; ना५. रा२. हृदयं विघट्टितं चेत्; प्र१. हृदयमतिविघटितं; प्र२. हृदयेऽपि घटते; प्र३. हृदयेऽपि विघटिते; प्र५. हृदये विघटिते सति; म१. हृदयमपि घट्टितं तत्; म२. हृदयमविघट्टितं तत्; म३. हृदयमपि विघट्टितं; म४.५. न घटयति येषां हृदयं। —४) तु१. ना१. प्र२.३. संगमोऽपि; तु२. संगमो; ना २. म१. संगात्; प्र४. तत्संगो; म२.४.५. सङ्गे; म३. संगमे। ना२. विरहो (विरहं)। तु१. विशेषयन्ति; ते२. विशेषयते; म३. विशेषतः॥

भ. ६१७७ (५०१९)॥

किं गतेन यदि सा न जीवति प्राणिति प्रियतमा तथापि किम् ।
इत्युदीक्ष्य नवमेघमालिकां न प्रयाति पथिकः स्वमन्दिरम् ॥ ६६ ॥

किमिति ॥ सा प्रसिद्धा प्रियतमा प्रेयसी प्राणिति किं जीवति किं न जीवतीत्यर्थः । किमिति प्रश्ने । न जीवति यदि म्रियते चेत्तथापि तर्हि गतेन अस्मद्गमनेन किं, किं प्रयोजनमस्ति । पथिकः पान्थः इत्येवमुक्त्वा नवमेघमालिकां नूतनजलधरपङ्क्तिमुदीक्ष्य दृष्ट्वा स्वमन्दिरं स्वगृहं प्रति न प्रयाति न गच्छति । प्रियतमा मेघमालिकादर्शनहेतुना विरहमसहमाना सती न जीवत्येव । तथापि गतेन मया किं कार्यमिति नवमेघमालिकां निरीक्ष्य तूष्णीं स्थितवानिति भावः ॥ [ रथोद्धता ]

१) अ४. यदि वा जीवति; म४. यदि सोऽनुजीवति । —२) तु. ना१. प्राणति; म३. प्राद्दणि ( प्राणिति ) । ना२. प्रियतमे । म३. तदापि; म४.५. स्थितेन ( तथापि ) । —३) तु२. इत्युदीक्ष; अ१. इत्यवेक्ष्य; अ४. इत्युदीर्य । —४) अ२ ( मू ). न प्रियाति; अ४. संप्रयाति । ना२. पथिक ॥

भ. १७४० (३९२८) । शा. ३८८५ (भर्तृ°) । सु. १७४८ (रतिमित्रस्य) । सुभा. पृ० ३४२. ८३ ( रतिमित्रस्य ) ॥

विरमत बुधा योषित्सङ्गात्सुखात्क्षणभङ्गुरा-
त्कुरुत करुणामैत्रीप्रज्ञावधूजनसंगमम् ।
न खलु नरके हाराक्रान्तं घनस्तनमण्डलं
शरणमथ वा श्रोणीबिम्बं रणन्मणिमेखलम् ॥ ६७ ॥

विरमतेति ॥ हे बुधा विद्वांसः क्षणभङ्गुरादल्पकालनश्वरात् योषित्सङ्गात्स्त्रीसंसर्गात्सुखात् शर्मणो विरमत निवर्तध्वम् । यदि योषित्सङ्गाद्विरन्तुं न शक्यते तदानीं करुणामैत्रीप्रज्ञाख्यवधूजनसंगमं कुरुत विधत्त । करुणा दुःखिनि कृपा । मैत्री सुखिनि सख्यम् । प्रज्ञा नित्यानित्यवस्तुविवेकः । करुणादियोषितः पुमांसं ( नरं ) त्रातुं शक्नुवन्ति । प्राकृतास्तु योषितो न शक्नुवन्ति । नरके निरये हारैर्मुक्तावलिभिराक्रान्तमधिष्ठितं घनं निबिडं स्तनयोः कुचयोर्मण्डलं बिम्बं शरणं रक्षितृ न खलु न भवति हि । अथ वा रणन्ती शिञ्जाना मणिमयी मेखला काञ्ची यत्र तच्छ्रोणीबिम्बं कटिमण्डलं शरणं न खलु । ये हितं कुर्वन्ति तैर्मैत्रीं कुर्यात् ये त्वहितमेवाचरन्ति तैर्मैत्री परिहरणीयेत्यर्थः ॥ [ हरिणी ]

१) ते१. विरमति । ना२. क्षणात्; अ४. सुतात् (सुखात्) । —२) अ१. कुरु तत् । ते२. करुणं मैत्री– । ना.२ °वधूनवसंगमम् । —३) अ४. नरको । ना२. ते१. हारकान्तं; ना५. दाराक्रान्तं; अ१.४. म२. भाराक्रान्तं । —४) ना१. चरणमथ । तु२. अ१. श्रेणीबिम्बं । ते. रणन्मणिमेघलम्; अ४. क्वणन्मणिमेखलम् ॥

भ. ६१७३ (२८३३) । सु. ३३८५ ॥

सदा योगाभ्यासव्यसनकृशयोरात्ममनसो-
रविच्छिन्ना मैत्री स्फुरति कृतिनस्तस्य किमु तैः।
प्रियाणामालापैरधरमधुभिर्वक्रविधुभिः
सनिःश्वासामोदैः सकुचकलशाश्लेषसुरतैः ॥ ६८ ॥

सदेति ॥ सदा सर्वदा योगाभ्यासेनाष्टाङ्गयोगपरिशीलनेनैव व्यसनेन दुःखेन (वशयोर्दान्तयोः) { अष्टांगयोगपरिशीलने यद्व्यसनमासक्तिस्तेन (स्तया) कृशयोस्तत्परतन्त्रयोरित्यर्थः -रा- } आत्ममनसोः क्षेत्रज्ञचित्तयोः अविच्छिन्ना मैत्री सख्यं यस्य स्फुरति प्रकाशते। कृतिनः कृतकृत्यस्य तस्य तैः प्रसिद्धैः प्रियाणां वल्लभानामालापैर्जल्पितैरधरमधुभिरधरोष्ठमाक्षिकैः वक्त्रविधुभिर्मुखचन्द्रैः निःश्वासानां श्वासानिलानामामोदैर्मनोहरगन्धैः सहितैः। इदं वक्त्रं वधूनां वा सुरतानां वा विशेषणम्। कुचयोरेव कलशयोराश्लेषेणालिङ्गनेन सह वर्तन्त इति सकुचकलशाश्लेषणानि तथाविधैः सुरतैर्निधुवनैर्वा किमु किं प्रयोजनम्। न किंचित्प्रयोजनमस्तीत्यर्थः। योगाभ्यासस्य मन्मथविकाराणां च सहावस्थानविरोधः। यत्र योगाभ्यासो न तत्र मन्मथविकाराः। यत्र मन्मथविकारा न तत्र योगाभ्यास इत्यर्थः ॥ [ शिखरिणी ]

१) ना२.५. रा. ते. ग्र१.४.५. म१–३. यदा (सदा)। तु१. °व्यसनवसिनोर्; तु२. °व्यसनवसितोर्; सु. ना१.३.४. ग्र२.५. °व्यसनवशयोर्; म१.२. व्यसनदशयोर्। —२) म३. अविच्छिन्नं। तु१. कृतनस्तस्य; ग्र२. कृतकृत्यस्य; ग्र४. न कृतिस्तस्य। —३) ग्र४ (मू). क्रियाणाम्; म३. प्रियानाम्। तु. अधरमधुरैर्। —४) ना१. नवैः श्वासां°; सु. विनिःश्वासा°; ना३.४. ग्र३ (मू). ननिःश्वासा°; रा. सनिश्वासा; ते१. स्वनिःश्वासा°। ना१.३.४. स्वकुच°; ना५. ग्र२ (मू). म४. सुकुच°; ग्र१. सचकुच°; ग्र५. निकुच°।

भ. ६७५९ (३१४३); काव्यस° ९८; शतकावलौ ७५।

यदासीदज्ञानं स्मरतिमिरसंचारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदिति।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ६९ ॥

यदासीदिति ॥ यदा यस्मिन्काले स्मरतिमिरसंचारजनितं मन्मथान्धकारसंपर्कजनितं अज्ञानं मोह आसीदभूत् तदा तस्मिन्काले अशेषं कृत्स्नमिदमेतज्जगत् लोकः नारीमयं स्त्रीरूपमिति दृष्टमीक्षितम्। अस्माभिरिति शेषः। इदानीमस्मिन्काले पटुतरविवेकाञ्जनजुषां स्पष्टतरज्ञानकज्जलयुतानां अस्माकं समीभूता असमं समं संपद्यमाना दृष्टिरीक्षणम्। त्रयाणां भुवनानां समाहारस्त्रिभुवनम्। त्रिलोकानपि ब्रह्म ब्रह्मेति मनुते अवबुध्यते। पूर्वमज्ञानतः सकलमपि लोकं स्त्रीमयमिति दृष्टम्। इदानीं समबुद्धीनामस्माकं ज्ञानविशेषवशात्प्रपञ्चमिदं ब्रह्मेति ज्ञान(त)मिति भावः ॥ [ शिखरिणी ]

नी० श० १३ (भ० श०)

[ तु. कोशे. अयं श्लोकः वैराग्ये १०१ तमत्वेन दृश्यते ] १) ग्र४. म४.५. अस्माकं ( अज्ञानं )। तु. ग्र१. °संस्कार° ( °संचार° )। ना२. °निरतं; ग्र४. °जडितं ( °जनितं )। —२) म३. यदा ( तदा )। तु. मन्ये ( दृष्टं )। म५. नारीजन°। ना१. जगदिदं; ग्र४. म३–५. जगदपि। —३) म४. °विलोकाञ्जनजुषीं। —४) ग्र४. तमी°; म४. तपी°; म५. नवी° ( समी° )। तु. ग्र४. इदं ( अपि )। तु. म४.५. तनुते; ग्र४. कुरुते ( मनुते ) ॥

भ. ५२०२ (२३५७) सुभाष्. ३१५; शान्तिशतके ४.१४ ( हे. ४२७ )। काव्यकल्प. ३३; शतकावलौ ३८। सरस्वतीकण्ठाभरणे ( का० ९४, पृ० ६०९ ) ५. ११५। सुभा. पृ० ३७५. २४६। सक. ५. ६३–३ (पृ० ३१९) ॥

अनन्तरं दुर्विरक्तप्रसङ्गः ॥

तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः।
यावदेव न कुरङ्गचक्षुषां ताड्यते चटुललोचनाञ्चलैः॥ ७० ॥

तावदेवेति ॥ कृतिनां कुशलानामपि निर्मलो निष्कल्मषो विवेको ज्ञानमेव दीपको दीपस्तावत्तावत्पर्यन्तं स्फुरति प्रकाशयति [ शते ]। यावत् यावत्पर्यन्तं कुरङ्गचक्षुषां मृगीदृशां चटुललोचनाञ्चलैश्चञ्चलकटाक्षवीक्षणैर्न ताड्यते न पीड्यते तावदित्यर्थः। यावत्स्त्रीकटाक्षपातस्तावत्पर्यन्तं पुरुषस्य विवेकदीपः। लोके दीपोऽपि यावद्वायुना न निहन्यते तावद्विराजमानो वर्तते। तद्वदिति भावः ॥ [ रथोद्धता ]

१) ना१. कृतिनां हृदि; ग्र१. महतामपि; म१.२. महतां हृदि; म४. कृतिनामवि-। —२) म२. एव ( एष )। ग्र१. म२. °दीपिका; ग्र२ (मू). °दीपिकः; ग्र५. °दीपकं। —३) म३.४. °चक्षुषा। —४) ना३.४. ग्र२.३. ताम्यते। सु१. ना२. चपल°; ग्र४. तरल° ( चटुल° ) ॥

भ. २५४५ (१०२६); सुभाष्. १४। सूमु. १३१.३० (इन्द्रकवेः)। सुर. पृ० २७१.४ ( शार्ङ्ग° )। सुभा. पृ. २५१.३३ ॥

वचसि भवति सङ्गत्यागमुद्दिश्य वार्ता
श्रुतिमुखरमुखानां केवलं पण्डितानाम्।
जघनमरुणरत्नग्रन्थिकाञ्चीकलापं
कुवलयनयनानां को विहातुं समर्थः॥ ७१ ॥

वचसीति ॥ श्रुतिभिः वेदैः मुखरमुखानां शब्दायमानानां केवलं पण्डितानां पाण्डित्यमात्रावशिष्टानां वैराग्यविहीनानामित्यर्थः। वचसि वाचि सङ्गत्यागं सर्वसङ्गपरित्यागमुद्दिश्य लक्षीकृत्य वार्ता वृत्तान्तमात्रं भवति वर्तते। कुवलयनयनानामिन्दीवराक्षीणां अरुणोऽव्यक्तरागः रत्नग्रन्थि रत्नमयं वपुर्यस्य तादृशः काञ्चीकलापो रशनारूपं भूषणं यस्मिंस्तत् अरुणरत्नग्रन्थिकाञ्चीकलापं जघनं स्त्रीकट्याः पुरोभागं कर्म। विहातुं त्यक्तुं कः समर्थः शक्तः। न कोऽपीत्यर्थः।

जघनमित्येतावतैव स्त्रीणां कटिपुरोभाग इति लब्धम् । यस्मादमरः 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इति तथापि कुवलयनयनानामिति अस्य सौन्दर्यकथनार्थं सुन्दरीणामेव जघनं विहातुं न शक्यते । न तु दुर्भगाणाम् । कुवलयान्युत्पलानीव नयनानि नेत्राणि यासां तासाम् । विदुषां धीराणामिव प्रायेण वाक्परिपाक एव न तु मनःपरिपाक इत्यर्थः ॥ [ मालिनी ]

१) तु.सु. भवति वचसि । —२) ते१. प्रतिमुखर° । —३) तु. °मरुणरत्नं; सु२. तरुणरत्न° । तु२. °कलावं । —४) म४. विधातुं । तु१. समर्थाः ॥

म. ५९०४ (२७०१) । सुभा. पृ० २५२.५१ ॥

स्वपरप्रतारकोऽसौ निन्दति योऽलीकपण्डितो युवतीः ।
यस्मात्तपसोऽपि फलं स्वर्गः स्वर्गेऽपि चाप्सरसः ॥ ७२ ॥

स्वपरेति ॥ यः अलीकपण्डितः कपटविद्वान् युवतीर्योषितो निन्दति दूषयति । असौ अलीकपण्डितः स्वपरप्रतारकः आत्मान्यवञ्चक एव । न तु शुद्धात्मा । यस्मात्कारणात् तपसः कृच्छ्रचान्द्रायणादेः फलं स्वर्गः द्यौरेव । स्वर्गे त्रिविष्टपेऽपि चाप्सरसः अप्सरस्त्रिय एव । सर्वेषां पुण्यकृतां त्रिदिवे रम्भाद्यप्सरःसंगम एव फलमिति कृत्वात्र योषित्संगमोऽपि न दुष्यतीति भावः ॥ [ आर्या ]

१) तु. स्वपरः; ना३.४. रा. ते. स पर°; म१. स वरपरव्रताको; म४. स्ववर– । —२) ना२. यो यो न; म१. योषिक; म४.५. यो जगति ( योऽलीक° ) । तु१. म४.५. युवतीम्; तु२. सु. ना१. ३.४. म४. युवतिम्; म१. युवतिः । —३) ना१. स्वर्गे; म४. स्वर्गं । —४) ना२. स्वर्गपि ताश्चाप्सरसः । तु. सु. च स्त्रियोप्सरसः । ( चाप्सरसः ) ।

म. ७२८५ (३३२८); काव्यसं. ४९ । सुभा० पृ० २५१.२७ ॥

मत्तेभकुम्भदलने भुवि सन्ति शूराः
केचित्प्रचण्डमृगराजवधेऽपि दक्षाः ।
किंतु ब्रवीमि बलिनां पुरतः प्रसह्य
कन्दर्पदर्पदलने विरला मनुष्याः ॥ ७३ ॥

मत्तेभेति ॥ भुवि भूलोके मत्तेभानां मदवारणानां कुम्भदलने शिरःपिण्डविपाटने शूराः विक्रान्ताः सन्ति । केचिदन्ये प्रचण्डानां अत्यन्तकोपानां मृगराजानां केसरिणां वधे निधनेऽपि दक्षाः पटवः सन्ति विद्यन्ते । किंतु अपि तु बलिनां शक्तिमतां पुरतः अग्रे प्रसह्य बलात्कृत्य ब्रवीमि वदामि कन्दर्पस्य मदनस्य दर्पदलने मदविनाशने शूरा मनुष्याः पुमांसो विरलाः कतिचिदेव न तु बहवः सन्ति । गजकण्ठीरवादिजयो नाश्चर्यः । अपि तु मन्मथजय एव आश्चर्य इत्यर्थः ॥ [ वसन्ततिलका ]

१) सु१. वीराः; ना३. रा. ते. धीराः (शूराः)। —२) प्र१. मृगजाति° (मृगराज°)। म५. °वधे विदग्धाः। —३) प्र१. किं नु (किंतु)। —४) प्र४. °मदने (°दलने)॥

भ. ४६६२ (२०९१); सुभाष. ७६॥

सन्मार्गे तावदास्ते प्रभवति च नरस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां हृदि न धृतिमुषो दृष्टिबाणाः पतन्ति ॥७४॥

सन्मार्ग इति॥ भ्रूभिरेव चापैराकृष्टमुक्ता विकृष्टमुक्ताः श्रवणपथगता श्रोत्रमार्गप्राप्ता नीलपक्ष्माणः श्यामाक्षिलोमानः एते लीलावतीनां विलासवतीनां दृष्टिबाणा नेत्रशराः धृतिमुषो धैर्यापहारिणः सन्तो हृदि वक्षसि चित्ते च यावन्न पतन्ति तावदेव नरः पुमान् सन्मार्गे सतां पथि आस्ते तिष्ठति। तावदेवेन्द्रियाणां घ्राणादीनां प्रभवति प्रभुर्भवति। तावल्लज्जां [अ] कार्येषु व्रीडां विधत्ते कुरुते। तावदेव विनयं प्रश्रयमपि समालम्बते अङ्गीकरोति। नातः परमित्यर्थः। यावत्तावच्छब्दाववधौ॥ [स्रग्धरा]

१) ते२. निरस्तापदेवे°। —३) तु.सु. °जुषो नील°; प्र१. °गतान्नील° (°गता नील°)। तु. -पक्ष्माणमेते। —४) तु.सु. न हृदि। प्र४. दृष्टिपाताः। ना२. पठन्ति; ते २. पतन्ते॥

भ. ६८२४ (३१६८); हितोप° १.२०७; काव्यस° ५१; सुभाष. २९३। शा. ३३०० (बाणभट्टस्य)। सु. २२४६। सूसु. ५३.१२ (बाणस्य)। सुर. पृ० २७६.३ (स्फुटश्लोके)। सुभा. २६०.११२ (धर्मकीर्तेः)॥

उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः।
तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः॥ ७५॥

उन्मत्तेति॥ अङ्गना वनिताः [उन्मत्तप्रेम्णः अत्युत्कटानुरागस्य] (उद्गाढस्यात्युत्कटस्य) प्रेम्णः सौहार्दस्य संरम्भात्संभ्रमात्। मदनोद्रेकवशादित्यर्थः। यत्संभोगादिकं आरभन्ते उद्युञ्जते। पुरुषं प्रति कामिन्यः पुरुषप्रयत्नं विनापि स्वेच्छया आलिङ्गनचुम्बनादिकं यत्कर्तुं यतन्ते तत्र तस्मिन्नर्थे ब्रह्मा विधिरपि प्रत्यूहं विघ्नमाधातुं कर्तुं कातरोऽव्यग्रो (अधीरो) भवति। अनुरक्तयोः स्त्रीपुरुषयोर्विघ्नाय ब्रह्मापि न समर्थ इति भावः॥ [अनुष्टुप्]

१) सु. ना४.५. प्र२.३.५. उद्गाढ-; ना२. उन्मीलत्-; म१.४. उन्मत्ताः। ना२. °संबंधा-; प्र१. म२. °सरसम्; प्र४. म४.५. °संचारा; म३. °संसर्गाद्। —२) ना२. -वारंभते; प्र३ (मू). म२. आरंभन्ते। —३) सु१.३. तं च (तत्र)। प्र१. आदातुं (आधातुं)॥

भ. १२६६ (४७६)॥

तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता ।
यावज्ज्वलति नाङ्गेषु हतः पञ्चेषुपावकः ॥ ७६ ॥

तावदिति ॥ यावदङ्गेषु देहावयवेषु हतो दुरात्मा पञ्चेषुपावकः कुसुमायुधानलः न ज्वलति न प्रवर्धते तावदेव महत्त्वं महापुरुषत्वम् । तावदेव पाण्डित्यं वैदुष्यम् । तावदेव कुलीनत्वं सत्कुलप्रसूतत्वम् । तावदेव विवेकिता विवेचनशालित्वम् । यदा तु पञ्चेषुरूपः पावकः अङ्गेषु ज्वलति तदानीं महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता च भ्रश्यन्तीत्यर्थः ॥ [ अनुष्टुप् ]

[ अडयार् २९ ई २ कोशे नास्ति ] २) तु.सु. विवेकत्वं कुलीनता; ग्र४. विवेकित्वं कुलीनता; ग्र५. म४. कुलीनत्वं विवेकता; म३. कुलीनत्वं विपाकता । —३) तु१. ना२. नागेषु । —४) तु. सु. हन्त; ना२. हुतः; म४.५. ततः ( हतः ) । म३. °पावकाः; म४.५. °सायकः ॥

भ. २५५३ (१०३०); शतकावलौ ७० । सुभा. पृ० १६६.५९४ ॥

शास्त्रज्ञोऽपि प्रगुणितनयोऽप्यात्तबोधोऽपि बाढं
संसारेऽस्मिन्भवति विरलो भाजनं सद्गतीनाम् ।
येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती
वामाक्षीणां भवति कुटिला भ्रूलता कुञ्चिकेव ॥ ७७ ॥

शास्त्रज्ञोऽपीति । शास्त्रज्ञो वेदान्तादिशास्त्रविदपि प्रगुणितनयोऽप्यभ्यस्तन्यायोऽपि बाढं भृशं आत्तबोधः ( आप्तबोधः ) प्राप्तज्ञानोऽपि अस्मिन्वर्तमाने संसारे सद्गतीनां सन्मार्गाणां भाजनं पात्रं विरलः एको भवति । न तु प्रचुरः । तत्र हेतुमाह । येन कारणेनास्मिन्संसारे वामाक्षीणां कामिनीनां कुटिला वक्रा भ्रूलता भ्रूवल्ली निरयनगरस्य नरकपुरस्य द्वारं कवाटं उद्घाटयन्ती विवृण्वती कुञ्चिका कील इव भवति । ज्ञानवन्तः सन्तोऽपि सुन्दरीणां भ्रूविक्षेपैराकृष्टाः सन्मार्गान्केचित्परित्यजन्तीत्यर्थः ॥ [ मन्दाक्रान्ता ]

१) ग्र४. शास्त्रज्ञान° । तु. ऽप्यात्म- ( ऽप्यात्त- ) । म४.५. °सारो ( °बोधो ) । ना२. म४. गाढं; ते२. बाधं ( बाढं ) । —२) ग्र४. तरलो । —३) ना२. यदेतस्मिन्; ग्र४. यदेकस्मिन् । तु. सु(टी). ना२. नरकनगर°; ग्र४. नगरनिरय° । ना२. °मुग्धापयन्ती; ग्र१. °मुद्घाटयन्ते । —४) ते. ग्र३.४. म२. ४.५. कुटिलभ्रूलता; ग्र१. कुटिलभ्रूलतं । तु. सु. [ आ ]कुञ्चितेव; ग्र१. कञ्चुकेव ॥

भ. ६४४५ (२९७८); काव्यस° ५४; शतकावलौ ७० । सुभा. पृ० ३५०.७३ ॥

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः ।

क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः
शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ॥ ७८ ॥

कृश इति ॥ कृशः अन्नाभावादश्लक्ष्णः। काणः एकाक्षः। खञ्जः खोडः। श्रवणरहितश्छिन्नकर्णः। पुच्छविकलः कृत्तलाङ्गूलः। व्रणी ईर्मवान्। पूयक्लिन्नः पूयार्द्रः। कृमीणां देह एवोत्पन्नानां कीटानां कुलशतैरपरिमितैः संघैः। शतं सहस्रमित्यादयः शब्दा अपरिमितवाचकाः। आवृततनुर्व्याप्तशरीरः। क्षुधया बुभुक्षया क्षामो दुर्बलः जीर्णः स्थविरः। पिठरकस्य स्थाल्याः कपाले कर्परे अर्पितो निहितो गलः कण्ठो येन स तादृशः। श्वा शुनकः शुनीं सरमामन्वेति अनुव्रजति। मदनः कामो हतं मारितमपि हन्ति मारयत्येव। एवंविधं श्वानमपि मन्मथो विकृतिं नयति किमुत मृष्टान्नभोजनपुष्टं जनमित्यर्थः ॥ [ शिखरिणी ]

१) तु२. क्वाणः; अ५. कोणः ( काणः )। ना२. कुब्जः ( खञ्जः )। तु. पुच्छविकटो। —२) तु२. रा१. ते. अ४. क्रिमिकुल°; अ३. क्रमिकुल°। ना२. °राद्दत°; अ४. °राच्चित° ( °रावृत° )। —३) अ१. पिठरित°। रा. °कसालार्पित°। ना५. °र्पितगुणः। —४) ना२. शुनीमभ्येति। तु१. सु. हन्त्वेव { =घातुक इव -सु- }; ना२. हन्त्येष ॥

भ. १८९५ (७२९); शतकावली ७० (११०)। सु० ३३९०। क्षेमेन्द्रस्यौचित्यविचारचर्चायां (का० १. पृ० १२९. चन्द्रकस्य)। नमिसाधु ( रुद्रटकाव्यालंकारटीकायाम् )। सुभा. पृ०३७१. १३२ ॥

स्त्रीमुद्रां कुसुमायुधस्य जयिनीं सर्वार्थसंपत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचित्पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ७९ ॥

स्त्रीमुद्रामिति ॥ ये मूढा बालिशाः कुधियः कुत्सितबुद्धयः सर्वार्थसंपत्करीं सर्वेन्द्रियार्थसमृद्धिविधायिनीं जयिनीं जयशालिनीं { जयावहामित्यर्थः। 'जिदृक्षी'त्यादिना इनिप्रत्ययः. रा.} कुसुमायुधस्य मन्मथस्य स्त्रीमुद्रां स्त्रियमेव लाञ्छनं प्रविहाय त्यक्त्वा मिथ्याफलान्वेषिणः असत्यस्वर्गादिफलान्वेषिणः सन्तो यान्ति गच्छन्ति। ते कुधियः तेन मन्मथेनैव निर्दयतरमत्यन्तं दयारहितं यथा भवति तथा। निहत्य प्रहृत्य। नग्नीकृता दिगम्बरीकृताः। मुण्डिता मुण्डितमस्तकाः कृताः। केचिदन्ये पञ्चशिखीकृताः पञ्च शिखा येषां सन्तीति ते तथाविधाः कृताः। केचिज्जटिला जटाधारिणः कृताः। अपरेऽन्ये कापालिकाः पाषण्डिनश्च कृताः ॥ [ शार्दूलविक्रीडितम् ]

१) तु२. स्त्रीमुद्रा; ना२. स्त्रीमुद्राः। तु१. सु. जयनीं; ना२. जयनी। तु२. ना.२ °संपत्करी। —२) तु१ ( मू ). सहसा विधाय; तु१ ( टी ). २. सु. सहसा विहाय; अ२ ( मू ). प्रविहाय यन्ति।

नार. कुधिया । —३) नार. ये तेनैव; सु. तत्तेनैव; ग्र४. एतेनैव । ग्र३ (मू). विहत्य । तु. निर्दयतया; ग्र१. निर्दयपरं । ग्र४. रागीकृता । —४) ग्र२ (मू). पञ्चजटीकृ° ॥

भ. ७६१० (३३०५); पञ्चतन्त्रे ४.३६ (३४)। शा. ३०८२ (भर्तृ°)। सूमु. ८८.१९। सुभा. पृ० २५२.५४ (भर्तृ°)। वाग्भटस्य काव्यानुशासने १ (का० ४३, पृ० ११)। सोमदेवस्य यशस्तिलकचम्प्वां (का० ७०.२, पृ० २५२) ॥

विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यः प्लवेत्सागरे ॥ ८० ॥

**विश्वामित्रेति ॥ वाताम्बुपर्णाशनाः वायूदकजीर्णपत्रभक्षिणः विश्वामित्रपराशरप्रभृतयः गाधेयशाक्तेयादयोऽपि सुललितमतिसुन्दरं स्त्रीमुखपङ्कजं कामिनीमुखकमलं दृष्ट्वा विलोक्य विमोहं विशेषाज्ञानं मूर्छां वा गताः प्राप्ताः । ये मानवा मनुष्याः सघृतं साज्यं पयसा क्षीरेण दध्ना पयस्येन युतं संयुतं शाल्यन्नं ओदनं भुञ्जते भोजनं कुर्वन्ति तेषां तादृशशाल्यन्नभोक्तॄणां इन्द्रियनिग्रहः चक्षुरादिनिग्रहणं यदि भवेत् अस्ति चेत् सागरे समुद्रे विन्ध्यशैलोऽपि प्लवेत् तरेत् । विश्वामित्रप्रभृतीनामपि इन्द्रियनिग्रहणं कर्तुं न शक्यते किं तु सकलभोगवतां कथं शक्यत इति भावः ॥** [शार्दूलविक्रीडितम्]

१) तुर. ग्र१. म१.२. °पर्णाशिनस् । —२) म३.४. दिव्य- (तेऽपि) । नार. दृष्ट्वा च; ग्र२. ४. म३.५. दृष्ट्वापि; ग्र३. म४. दृष्ट्वा वि- । तु१. संमोहिताः (मोहं गताः) । —३) म५. सगुळं (सघृतं) । तु. सु१. नार. ग्र१. म३.४. भुञ्जन्ति ये; ग्र२. हे भुञ्जते । —४) सु. तरेत् (प्लवेत्) ॥

भ. ६२०४ (२८५३) । प्रबन्धचिन्तामणौ ४. १८२ (२०५) । सुर. पृ० २३५.४७ (पृ०२७८.७; भर्तृ°) । सुभा. पृ० २५२.५७ ॥

## शृङ्गारशतके चतुर्थविंशत्यन्ते अधिकः ।

चिन्तायाश्च चितायाश्च बिन्दुमात्रं विशेषतः ।
चिता दहति निर्जीवं चिन्ता जीवन्तमप्यहो ॥

[अड्यार् २९ ई२. शृङ्गार. ४. २०]

## ॥ ऋतुवर्णनम् ॥

तत्र प्रथम वसन्तः।

परिमलभृतो वाताः शाखा नवाङ्कुरकोटयो
मधुरविधुरोत्कण्ठाभाजः प्रियाः पिकपक्षिणाम्।
विरलविरलस्वेदोद्गारा वधूवदनेन्दवः
प्रसरति मधौ धात्र्यां जातो न कस्य गुणोदयः ॥८१॥

परिमलेति ॥ मधौ वसन्ते धात्र्यां धरण्यां प्रसरति प्रकाशमाने सति कस्य वस्तुनः गुणोदयः सौन्दर्योत्कर्षो न जातः। सर्वस्यापि वस्तुनो गुणोदयो भवतीत्यर्थः। तमेव गुणोदयं दर्शयति। वाता वायवः परिमलभृतः विमर्दोत्थमनोहरगन्धधारिणः शाखालतास्तरुलता नवाङ्कुरकोटयो नूतनप्रवालपालयः प्रियाः मनोहराः{पिकपक्षिणां पुंस्कोकिलानां प्रियाः-सु-}( पिकपक्षिणः परभृतः ) {मधुरविधुरोत्कण्ठाभाजः मधुरा सहकाराङ्कुरकषायास्वादलाभाद्गुणा विधुरा काकक्कतोपद्रववशाद्विगुणा च। कष्टेति यावत्। या उत्कण्ठा कूजितौत्सुक्यं तां भजन्तीति तथोक्ता जाताः। -रा- } (मधुरेषु श्राव्येषु विरुतेषु कूजितेषु) उत्कण्ठाभाजः उत्कलिकाभृतः वधूनां वनितानां वदनेन्दवो मुखचन्द्राः {विरलविरला अल्पाल्पाः -सु-} ( विमलविरला धवलाः सान्द्राः ) स्वेदस्य घर्मसलिलस्य उद्गारास्स्रवा येषु ते तथाविधाः ॥ [ हरिणी ]

१) ना२. °कोट्या; म४.५. °पल्लवाः ( °कोटयो )। —२) ना२. विरल– ( मधुर– )। तु. सु१.२. ना३.४. °विरतो°; ना२. °वितती°; ग्र२.३.५. °विरुतो°; ग्र४. °मधुरो°; म३. °विरुदो° ( °विधुरो° )। म१. २.४. °वाचः (°भाजः)। [ तु. कोशे 'प्रियाः' इति नास्ति ] ग्र४. अपि ( पिक– )। ना४. ग्र२.३.५. म३–५. पक्षिणः। —३) ना२. विरलविरस°; ना३.५. विरलसुरत°; ग्र२.३. विमलविरल°; म४.५. तरलविरल°। —४) ग्र१. म३. रात्र्यां ( धात्र्यां )। तु. सु. जाते; ना२. यातो ( जातो ) ॥

भ. ३९६४ (१७१९); शतकावली ६५ ॥

मधुरयं मधुरैरपि कोकिलाकलरवैर्मलयस्य च वायुभिः।
विरहिणः प्रहिणस्ति शरीरिणो विपदि हन्त सुधापि विषायते ॥८२॥

मधुरिति ॥ अयं मधुर्वसन्तः मधुरैः श्रवणसुखैरपि कोकिलाकलरवैः पिकाङ्गनाकोलाहलैर्मलयस्य मलयाचलस्य संबन्धिभिर्वायुभिर्मन्दानिलैश्च{विरहिणः शरीरिणः वियोगिजनान्-रा-} ( विरहिणां वियोगिनां शरीरिणां प्राणिनां ) प्रहिणस्ति हन्ति। विपदि आपदि सुधा पीयूषमपि विषायते विषमिवाचरति। हन्तेत्यनुकम्पायाम्। 'हन्त हर्षेऽनुकम्पाया'मित्यमरः ॥ [ द्रुतविलम्बितम् ]

१) तु.सुमधुरं; म३. मधुरयन् । तु१. मधुरं च; तु२. मधुरेपि च; म४.५. मधुरैः पिक– ( मधुरैरपि ) । ग्र१. म३. कोकिलाः; म४.५. कूजितैः । —२) तु१. ना१.३.४. ग्र३. ( मू ). कलकलैः; म४. अभिनवैः । सु१. मधुरस्य च; ग्र२. मधुरैरपि; ग्र३. मलयैरपि; ग्र४. मलयोत्थित° (मलयस्य च ) । —३) ना१. ग्र२–४. विरहिणां । तु. प्रणिहन्ति; सु.ना १.५. ग्र४. म३–५. प्रहिणोति । ना१.३.४. ग्र१.३.४. म१–३. शरीरिणां; ग्र२ ( मू ). शरीरिणीं । —४) तु. ना२. हन्ति । ना२. सुखं हि ( सुधापि ) ॥

भ. ४६८० (२०९९) ॥

आवासः किलकिंचितस्य दयिता पार्श्वे विलासालसा
कर्णे कोकिलकामिनीकलरवः स्मेरो लतामण्डपः ।
गोष्ठी सत्कविभिः समं कतिपयैर्मुग्धाः सितांशोः कराः
केषांचित्सुखयन्ति चात्र हृदयं चैत्रे विचित्राः स्रजः ॥ ८३ ॥

आवास इति ॥ { किलकिञ्चितस्य । 'रोषाश्रुहर्षभीत्यादेः संकरः किलकिंचित'मित्युक्तलक्षणशृङ्गारचेष्टाविशेषस्यावासो निवासभूतः–रा–} सुधालयेषु सुधालिप्तगृहेषु आवासः स्थानम् । स्थितिरिति यावत् । पार्श्वे शरीरभागे विलासालसा लीलालोला दयिता कामिनी कर्णे श्रोत्रे । कोकिलकामिनीनां कलकण्ठकान्तानां कलरवोऽव्यक्तमधुरध्वनिः स्मेरः विकसितः । पुष्पित इत्यर्थः । लतामण्डपः वल्लिकाविमानः । कतिपयैर्द्वित्रैः सत्कविभिः सुकाव्यकर्तृभिः सह गोष्ठी संलापः सितांशोश्चन्द्रस्य मुग्धाः सुभगाः कराः किरणाः । विचित्रा नानाविधाः विचित्रग्रथिता इत्यर्थः । स्रजः पुष्पमालिकाश्च अत्र चैत्रे केषांचित्कतिपयानां विरहिव्यतिरिक्तजनानामित्यर्थः । हृदयं चित्तं सुखयन्ति संतोषयन्ति ॥ [ शार्दूलविक्रीडितम् ]

१) सु. ना१.३.४. ग्र२.३.५. आवासश्च सुधालयेषु । म४.५. आवासाः । ग्र१. ते२. किलि° ( किल° ) । तु. किंचिदस्य । ना३–५. रा.ते. ग्र५. म४.५. दयिताः । तु.सु. विलासास्पदं; ना३–५. रा. ते. ग्र५. विलासालसाः । —२) ग्र१. कण्ठे; ग्र४. कण्ठः (कर्णे) । ग्र४. °भामिनीकलरवैः । ना२. स्मेरोल्लता°; ना५. एलालता° । ना१. ते१. ग्र३.४. °मण्टपः; ना५. °मण्डपे; ते२. °मण्टपं; म४. मण्डपं —३) म४.५. कृता ( समं ) । ना२. सेव्याः; म४.५. स्निग्धाः ( मुग्धाः ) । सु. ते२. शितांशोः; म४.५. सुधांशोः । —४) तु. केषां न स्पृह°; सु. केषां नो सुख°; ग्र. केषां चित्प्रथ° । म४. ह्यत्र ( चात्र ) । तु२. ते२. विचित्रस्रजः; ते१. विचित्रा स्रजः; ग्र१. विचित्रस्रजाम् ॥

भ. १०३९ (३९३); शतकावलौ ६६ ॥

पान्थस्त्रीविरहानलाहुतिकलामातन्वती मञ्जरी
माकन्देषु पिकाङ्गनाभिरधुना सोत्कण्ठमालोक्यते ।
अप्येते नवपाटलापरिमलप्राग्भारपाटच्चरा
वान्ति क्लान्तिवितानतानवकृतः श्रीखण्डशैलानिलाः ॥ ८४ ॥
नी० श० १४ (भ० श०)

पान्थेति ॥ माकन्देषु रसालेषु पान्थस्त्रियाः पथिकवध्वाः विरहानलस्य वियोगाग्नेः आहुतिकलामाहुतिसंपत्तिमातन्वती कुर्वती मञ्जरी वल्लरी अधुना इदानीं पिकाङ्गनाभिः कलकण्ठकान्ताभिः (वनप्रियसुन्दरीभिः) सोत्कण्ठमुत्कलिकया सहितं यथा तथा आलोक्यते विलोक्यते । नवपाटलापरिमलप्राग्भार(प्रोद्गार)-पाटच्चरा नूतनपाटलिमनोहरगन्धचोराः क्लान्तिवितानतानवकृतः श्रमसंघकृशकारिणः श्रीखण्डशैलानिलाः मलयाद्रिमरुतोऽपि वान्ति वीजन्ति ॥ [शार्दूलविक्रीडितम्]

१) तु२. विरहानली° । तु. ग्र४. °हुतिकथाम्; ना२. °वतिकलाम् । —२) म५. °नापि मधुना (°नाभिरधुना) । सु (टीपा.) आलिङ्ग्यते (आलोक्यते) । —३) रा. अल्पास्ते; ग्र१. अस्येते (अप्येते) । तु. म३–५. नवपाटली° । ग्र२. °परिमलाः; ग्र३. °परिमले । ग्र१. °प्रागज्ज°; ग्र३ (मू). °प्रोद्गार° (°प्राग्भार°) । ते१. °पाटश्वरा; ग्र१. °पापाटवा । —४) म२.४.५. श्रान्ति° (क्लान्ति°) । ग्र४. °तान च भृतः । ना२. ग्र१.२ (मू). ४. श्रीकण्ठ° । तु१. म३.५. °शैलानिलः; ना१. °शैलानलाः; ग्र१. °कण्ठानिलाः; ग्र२. (मू). °शैलानिभाः ॥

भ. ४०५० (१७६९) ॥

प्रथितः प्रणयवतीनां तावत्पदमातनोतु हृदि मानः ।
भवति न यावच्चन्दनतरुसुरभिर्मलयपवमानः ॥ ८५ ॥

प्रथित इति ॥ प्रणयवतीनां प्रणयकलहवतीनां प्रथितः प्रसिद्धः अनुनेतुमशक्य इत्यर्थः । मानः कोपः हृदि चित्ते तावत् तावत्पर्यन्तं पदं स्थानं आतनोतु करोतु । यावत् यावत्पर्यन्तं चन्दनतरुसुरभिः श्रीखण्डद्रुमसुगन्धिः मलयस्य चन्दनाद्रेः पवमानोऽनिलः न भवति न विद्यते न वातीत्यर्थः । मानवतीनां मनः मलयानिलस्पर्शपर्यन्तमेवेत्यर्थः ॥ [आर्या]

१) तु. प्रयतः; ना५. दयितः; ते२. प्रथित–; म५. प्रथितं (प्रथितः) । ग्र१. प्रणयवनितानां । २) तु. सु. ना२. पदमातनोति; म४.५. स्थानं तनोति । म५. हृदि मानं । —३) तु. यावद्भवति न चम्पा- । ना२. वहति (भवति) । म३. स्त्रीणां (चन्दन–) । —४) म३. चन्दनतरु– (तरु–) । ग्र१. म३. °सुरभि । ग्र१. पवनः (पवमानः) ।

भ. ४३४७ (१९१६) । शतकावलौ ६५ ॥

सहकारकुसुमकेसरनिकरभरामोदमूर्छितदिगन्ते ।
मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ॥ ८६ ॥

सहकारेति ॥ सहकाराणां रसालानां कुसुमानां पुष्पाणां केसराणां किञ्जल्कानां निकराणां समूहानां भरः औत्कट्यं तस्य आमोदः परिमलः तेन मूर्छिता व्याप्ताः दिशां हरितां अन्ताः कोट्यः यस्य स तथोक्तः तस्मिन् । मधुरेण स्वादुना मधुना मकरन्देन विधुरा विवशा मधुपा भृङ्गा यस्मिन्स तादृशे मधौ वसन्ते कस्य जनस्य उत्कण्ठा उत्कलिका नो भवेत् न भवति । सर्वस्यापि उत्कण्ठा जायते इत्यर्थः ॥ [आर्या]

२) तु (मू). °समूह°; तु (टी). °भवामोद°; प्र१. °भारामोद°; प्र२ (मू). °भारमोद° (°भरामोद°)। —३) तु (मू). °विबुध°; तु (टी). °निरत°; म२.४.५. °मुखर° (°विधुर°)। —४) ना२. भवति मधौ; ना३.४. मधुनि भवेत् । प्र१. नोत्कण्ठाः ॥

भ. ६९६५ (३२२४); काव्यसं° २९; शतकावली ६६ । सु. १६६६ (कपिलरुद्रकस्य)। शा. ३७८७ (कपिलरुद्रस्य)। सुभा. पृ० ३३१.९ (कपिलरुद्रस्य) ॥

अच्छाच्छचन्दनरसार्द्रकरा मृगाक्ष्यो
धारागृहाणि कुसुमानि च कौमुदी च ।
मन्दो मरुत्सुमनसः शुचि हर्म्यपृष्ठं
ग्रीष्मे मदं च मदनं च विवर्धयन्ति ॥ ८७ ॥

अच्छाच्छेति ॥ अच्छाच्छेन अतिस्वच्छेन चन्दनरसेन मलयजद्रवेण आर्द्रकराः क्लिन्नहस्ता मृगाक्ष्यो हरिणेक्षणाः धारागृहाणि यन्त्र(मन्त्र, यन्न)धारागाराणि कुसुमानि पुष्पाणि च कौमुदी चन्द्रिका च । मन्दो मन्थरः मरुदनिलश्च । सुमनोभिः कुसुमैः शुचि शुभ्रं हर्म्यपृष्ठं उपरितलं च । एतानि ग्रीष्मे निदाघर्तौ मदं दर्पं मदनं कन्दर्पं च विवर्धयन्त्येधयन्ति ॥ [ वसन्ततिलका ]

१) ना२. अच्छाल° । ना५. रा. ते. प्र४. म५. °रसार्द्रतरा; प्र१. °रसप्रकरा; म१–३. °रसार्द्रकुचा। तु. मृगाक्षो । —२) म१–३. °गृहाश्च । —३) तु. °त्सुमनसां; प्र२.३.५. °च सुमनः – । —४) ना२. मुदं (मदं)। प्र३ (मू). विवर्धयन्ती ॥

भ. ९३ (३१) ॥

स्रजो हृद्यामोदा व्यजनपवनश्चन्द्रकिरणाः
परागः कासारो मलयजरजः सीधु विशदम् ।
शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशो
निदाघर्तावेतद्विलसति लभन्ते सुकृतिनः ॥ ८८ ॥

स्रज इति ॥ हृद्यामोदाः मनोहरगन्धाः स्रजः पुष्पमालिकाश्च व्यजनस्य तालवृन्तस्य पवनो वातश्च चन्द्रकिरणाः शशिमयूखाः परागः कुसुमरेणुश्च कासारः सरसी मलयजरजश्चन्दनधूलिः विशदं निर्मलं सीधु मद्यं शुचिः शुभ्रः सौधोत्सङ्गः प्रासादाग्रं प्रतनु वसनं अतिसूक्ष्मवस्त्रं पङ्कजदृशः कमललोचनाश्च निदाघर्तौ ग्रीष्मे एवं विलसति शोभमाने सति सुकृतिनः पुण्यवन्तः लभन्ते प्राप्नुवन्ति ॥ [ शिखरिणी ]

१) तु. हृद्यामोदो; प्र१. हृद्यामोद– । प्र१. किरण– (–पवन–)। ते२. प्र१.४. म१.–४. चन्द्रकिरणः; प्र२ (मू). चन्द्रिकिरण । २) म५. वराङ्गः (परागः)। प्र४. °रसाः; म१–३. °रसः (°रजः)। तु२. ना३–५. रा. ते१. प्र५. शीधु; ना२. प्र१.२ (मू). सिन्धु–; प्र३. म१.२.४.५.

सीधु; ग्र४. लोध्र-; म३. शीत- ( सीधु )। ग्र१.४. म१-३. विशदः। —३) ग्र१. रुचिः ( शुचिः )। ना२. म३. -वसनाः; ग्र१. तपन ( वसनं )। —४) तु. ना१. ते१. म३-५. निदाघार्तांव्; ना२. निदाघान्ते; ग्र४. निदाघार्त्तौ; म२. निदाघे तान् । ग्र१. निदाघावर्तापिद्विलसति । तु. एते; ना२. चैतद्; ग्र४. केचिद्; म२. एतान्; म३. -पेताद् । तु. सुखमुपलभन्ते; सु२. विलसति भवन्ते ॥

भ. ७२६३ (३३२२); शतकावली ६७ ॥

सुधाशुभ्रं धाम स्फुरदमलरश्मिः शशधरः
प्रियावक्राम्भोजं मलयजरजश्चातिसुरभिः ।
स्रजो हृद्यामोदास्तदिदमखिलं रागिणि जने
करोत्यन्तःक्षोभं न तु विषयसंसर्गविमुखे ॥ ८९ ॥

सुधाशुभ्रमिति ॥ सुधाशुभ्रं सुधालेपनधवलं धाम गृहम् । स्फुरन्तः प्रकाशमानाः अमला निर्मला रश्मयः किरणा यस्य स तादृशः शशधरश्चन्द्रः प्रियावक्राम्भोजं कामिनीमुखकमलम् । अतिसुरभिरत्यन्तपरिमलो मलयजरसः श्रीखण्डद्रवः । हृद्यामोदा मनोहरगन्धाः स्रजः पुष्पमालिकाश्च । तत् प्रसिद्धमिदं एतदखिलं समस्तं रागिणि अनुरागवति जने पुरुषे अन्तःक्षोभं मनःपीडां करोति विदधाति विषयसंसर्गविमुखे इन्द्रियार्थसङ्गपराङ्मुखे जने तु अन्तःक्षोभं न करोति । एतदखिलं सुधाशुभ्रधामादिकं अनुरागवत एव बाधायै भवतीत्यर्थः ॥ [ शिखरिणी ]

१) ते२. स्फुलद° । ग्र४. °रश्मिश्च शयनं । —२) ना३. ग्र२-४.° रसश्चाति°; ते२. °रजसश्चाति° । सु ( टीपा ). ना१.३-५. रा. ते१. ग्र१. म१.२.५. °सुरभि । —३) म३. °मोदासदिद° । —४) ग्र२ ( मू ). नवविषय° ॥

भ. ७१०६ (३२६८) ॥

तरुणीवेषोद्दीपितकामा विकसज्जातीपुष्पसुगन्धिः ।
उन्नतपीनपयोधरभारा प्रावृट् तनुते कस्य न हर्षम् ॥ ९० ॥

तरुणीति ॥ वेषेणालंकारेण उद्दीपितः प्रकाशितः कामो मदनो यया सा तथोक्ता । तरुणी कामिनी । पुष्पैः कुसुमैः सुगन्धिः शोभनगन्धा । विकसज्जाती उत्फुल्लमालती । उन्नतानामुदग्राणां पीनानां स्थूलानां पयोधराणां मेघानां भारो यस्याः सा तादृशी प्रावृट् वर्षासमयश्च । यद्वा । तरुण्या वेषेण उद्दीपितकामा विकसज्जातीपुष्पैः सुगन्धिः । उन्नतपीनपयोधरभारा प्रावृट् कस्य जनस्य हर्षं मुदं न तनुते न करोति । सर्वस्यापि हर्षं करोत्येवेत्यर्थः ॥ [ उपचित्रा ]

१) ना५. करिणी° ( तरुणी° )। तु. ना२. °वेषा दीपित° । —२) ना२. विकसितजाती°; ग्र४. विलसज्जाती° । ते२. °सुगन्धि; ग्र२ ( मू ). °सुगन्धी; ग्र४. °सुगन्धः । —३) ग्र४. °पयोधरद्वारा । —४) ना२. कुरुते ( तनुते ) ॥

भ. २५०३ (१००५) ॥

वियदुपचितमेघं भूमयः कन्दलिन्यो
नवकुटजकदम्बामोदिनो गन्धवाहाः ।
शिखिकुलकलकेकारावरम्या वनान्ताः
सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ ९१ ॥

वियदिति ॥ उपचितमेघं घटितवारिवाहं वियत् व्योम । कन्दलिन्यः नवाङ्कुरवत्यः शिलीन्ध्रवत्यो वा । भूमयो भुवः नवानां नूतनानां कुटजानां गिरिमल्लिकानां कदम्बानां नीपानां आमोदः परिमलो येषां ते तथाविधाः । गन्धवाहा वायवः । शिखिकुलकलकेकारावरम्याः मयूरसमूहव्यक्तकेकाध्वनिमनोहराः वनान्ता अरण्यप्रदेशाश्च सुखिनं सुखवन्तं अनुरक्तमिति यावत् । असुखिनं सुखरहितं विरक्तमित्यर्थः । वाशब्दः समुच्चये । सर्वं जनमुत्कण्ठयन्ति संतोषयन्ति ॥ [ मालिनी ]

२) तु. नवकुसुम°; म. नवकुटच° । ग्र २ (मू). म३. °माहिनो; ग्र४. °मोदनो । तु. गन्धवाहः । —३) ग्र१. °रम्यमाणा; म३. °रावकान्ता ( °रावरम्या ) । ते२. ग्र१. वनान्ता ॥

भ. ६१७१ (२३८२); शतकावलौ ६७ ॥

उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः ।
क्षितिरपि कन्दलधवला दृष्टिं पथिकः क्व पातयति ॥ ९२ ॥

उपरीति । उपरि ऊर्ध्वभागे घनं सान्द्रं घनपटलं मेघसमूहश्च तिर्यक् नर्तिताः नाट्यं प्रापिता मयूराः शिखण्डिनो येषां ते तथाविधा गिरयः शैला अपि कन्दलैरङ्कुरैर्धवला शुभ्रा क्षितिरपि पृथिव्यपि नः अस्माकं दृष्टिमीक्षणं पथि मार्गे पातयति निवेशयति । अनेन तु परिमितसुरतं च किंचिदुचितं भवति । (अनेन उपरिसुरतं किंचित्सूचितं भवति ) { पथिकः पान्थः दृष्टिं क्व कुत्र पातयति प्रसारयति न कुत्रापीत्यर्थः । सर्वत्राप्युद्दीपनसंभवादिति भावः–रा. } ॥ [ आर्या ]

[ तु. कोशे. एकोनशततमोऽयं श्लोकः ] १) ग्र४. उपवनं ( उपरिघनं ) । —२) ग्र४. तरवोपि; म१.–गतयोपि; म३. –गिरयो वि– । ग्र४. °मयूरः । —३) ना२. कन्दनधरवला । —४) तु. पथिकः पथि क्व; ना२. पथिकः कं; ग्र२.३. पथिनः क्व; ग्र४. पथिकस्य (पथिकः क्व) । ते २. ग्र२ ( मू ). पातयन्ति; ग्र४. पादयति ॥

भ. १२९० (४९१) । सु. १७४४ (भर्तृ°) । शा. ३८८६ । सूमु. ६१.३३ (भर्तृ°) । सुभा. पृ० ३४२.८२ (भर्तृ°) । कवीन्द्रवचनसमुच्चये ४८४ ( पाठान्तरैः ) । सरस्वतीकण्ठाभरणे ३.८७ ( का० ९४, पृ० ३५३ ) ॥

इतो विद्युद्वल्लीविलसितमितः केतकितरोः
स्फुरद्गन्धः प्रोद्यज्जलदनिनदस्फूर्जितमितः ।

इतः केकीक्रीडाकलकलरवः पक्ष्मलदृशां
कथं यास्यन्त्येते विरहदिवसाः संभृतरसाः ॥ ९३ ॥

इत इति ॥ इतः अस्मिन्प्रदेशे विद्युद्वल्लीविलसितं तटिल्लताविलासः । इतः {केतकितरोः केतक्याख्यवृक्षस्य - रा} (केतक्या केतकीरजसा परागेण) स्फुरन्प्रकाशमानः गन्ध आमोदः । इतः प्रोद्यज्जलदनिनदस्फूर्जितं उद्गाढमेघध्वनिप्रकाशः । इतः केकी (कि)क्रीडाकलकलरवः मयूरकेलीकलकलध्वनिश्च । पक्ष्मलदृशां पक्ष्मलाक्षीणां संभृतरसाः संपादितसाराः एते विरहदिवसाः वियोगदिनानि कथं वा यास्य[न्ति] (न्ते) गच्छन्ति । एते दिवसा विरहिणीनां बाधका इति भावः ॥ [ शिखरिणी ]

१) ना२. ततो ( इतो ) । सु. केतकरजः; ना३.४. म्र२.३. केतकिरजः; ना५. म्र५. कैतकरजः; म्र१. केतकनोः; म३. स्निग्धकतरोः । —२) ना५. स्फुरद्गण्डः; रा. ते. म्र३ ( मू ). स्फुरन्गन्धः; म३. स्फुरद्दण्डः; म५. स्फुरच्छय्याः । म्र१. म१.२. °निनदस्योर्जित°; म५. °निनदस्फूर्तिक° । ना२. ° स्फूर्जितयितः । —३) सु२.३. ते२. केकिक्रीडा° । तु. °कलकलमितः । म३. पक्ष्मलदृशो । —४) तु. ते२. यास्यन्ते तेः ना२. ते यास्यन्ते; म्र३ ( मू ). वा यास्यन्ते; म४.५. वा धार्यन्ते । म्र४. °दिवसं । म्र२ ( मू ). संभृतरसः ॥

भ. १०९८ (४२१); शतकावलौ ६७ । सुभा. पृ० २७६.३६ ॥

असूचीसंचारे तमसि नभसि प्रौढजलद-
ध्वनिप्राज्ञंमन्ये पतति पृषतानां च निचये ।
इदं सौदामिन्याः कनककमनीयं विलसितं
मुदं च म्लानिं च प्रथयति पथि स्वैरसुदृशाम् ॥ ९४ ॥

असूचीति ॥ तमस्यन्धकारे । असूचीसंचारे {सूच्यग्रमात्रस्याप्यनवकाशप्रदे - रा} (असूचेः संचारे सूच्यप्रकाशे) शून्ये सति । नभस्याकाशे । प्रौढजलदध्वनिप्राज्ञंमन्ये व्यूढमेघस्वनितप्राज्ञंमाने [प्राज्ञमानिनि] सति । पृषतानां बिन्दूनां निचये समूहे पतति गलति सति । कनककमनीयं सुवर्णवन्मनोहरं सौदामिन्यास्तटितः इदमेतद्विलसितं विलासः स्वैरसुदृशां स्वैरिणीनां पथि मार्गे मुदं संतोषं म्लानिं ग्लानिं च च प्रथयति प्रकटयति । स्वमार्गप्रकाशकत्वहेतुना संतोषः । अन्यदर्शनहेतुना ग्लानिश्चेत्यर्थः ॥ [ शिखरिणी ]

१) ना२. असूचिः; ना३.४. प्रसूते; म्र२. असूचेः; म्र३. आसूचेः; म्र४. प्रसक्ते; म्र५. असुर्यें । सु२. ना३.४. म्र४. °संसारे; म४.५. °संपाते ( °संचारे ) । म्र१. किमसि नहसि; म्र४. मनसि नभसि । —२) तु. °प्रादुर्भावे; सु. ना४. म्र२ ( टी ). °प्रज्ञंमन्ये । तु. दृषदानां; म१.२.४. पृषितानां । म्र४. पृषतये ( च निचये ) । —३) ना३–५. रा. म्र५. सौदामन्याः । ना२. विकसितं; म्र४. विलसिता । ४—) म्र१.२ ( मू ). ४. म्लानं । ना५. प्रथयति । म्र४. स्वैरिणिदृशाम् ॥

भ. ७८५ (२९४); शतकावलौ ६७ । सक. २.६६.२ ( पृ० ११३; सुभटस्य ) ॥

आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते
शीतोत्कम्पनिमित्तमायतदृशा गाढं समालिङ्ग्यते ।
जाताः शीकरशीतलाश्च मरुतो रत्यन्तखेदच्छिदो
धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासंगमे ॥९५॥

आसारेणेति ॥ आसारेण धारासंपातेन हर्म्यतः प्रासादात् प्रियतमैः दयितैः बहिः बाह्यप्रदेशं प्रति यातुं गन्तुं न शक्यते न युज्यते । आयतदृशा विशालाक्ष्या शीतोत्कम्पनिमित्तं शीतोत्कम्पव्याजेन गाढं यथा तथा समालिङ्ग्यते उपगूह्यते । शीकरशीतलाः तुषारेण शीता मरुतो वायवश्च रत्यन्ते सुरतावसाने खेदं श्रमं छिन्दन्तीति तथाविधा जाताः अभूवन् । धन्यानां पुण्यात्मनां प्रियासंगमे दुर्दिनं मेघच्छन्नं अहः कर्तृ । सुदिनतां शोभनदिनत्वं याति गच्छति ॥ [ शार्दूलविक्रीडितम् ]

१) ना२. असारेण । तु. हि; ग्र३ ( मू ). स ( न ) । ग्र४. धामतः ( हर्म्यतः ) । ना२. यदशक्यवे । तु२. शङ्कते ( शक्यते ) । —२) तु२. ना२. ते२. °दृशां; ग्र१. म१-४. °दृशो । ना२. समाश्लिष्यते; ग्र२ ( मू ). समालिङ्गते । —३) ग्र१. म१.२. वाताः; ग्र४. धारा-( जाताः ) । ना२. ग्र१. शीतलशीकराश्च । म१.२. मधुरा ( मरुतो ) । तु. अत्यन्त°; म३. ऽप्यत्यन्त° ( रत्यन्त° ) । —४) ग्र४. दुर्निनं । ग्र१. म२. प्रियायागमे ॥

भ. १०६७ (४०५), शतकावलौ ८६ । सु. १७८४ । सुभा. पृ० ३४२.६७ ॥

अर्धं सुप्त्वा निशायाः सरभससुरतायाससन्नश्लथाङ्गः
प्रोद्भूतासह्यतृष्णो मधुमदनिरतो हर्म्यपृष्ठे विविक्ते ।
संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं कर्करीतो
ज्योत्स्नाभिन्नाच्छधारं न पिबति सलिलं शारदं मन्दपुण्यः ॥९६॥

अर्धमिति ॥ विविक्ते विजने हर्म्यपृष्ठे प्रासादोपरि निशाया रात्रेरर्धं समांशं सुप्त्वा संवेश्य सरभससुरतायाससन्नश्लथाङ्गः ससंभ्रमनिधुवनश्रमसन्नश्लक्ष्णावयवः प्रोद्भूतासह्यतृष्णः संभूतासह्यपिपासः मधुमदनिरतो मद्यमदासक्तो जनस्तु कर्करीतः कलशविशेषात् संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं सुरतश्रान्ततरुणी-बाहुविमुक्तं ज्योत्स्नया चन्द्रिकया भिन्ना मिलिता अच्छधारा स्वच्छधारा यस्य तत्तादृशं शारदं शरत्कालसंबन्धि सलिलं जलं पिबति । मन्दपुण्यः मन्दभाग्यस्तु न पिबति पानं न करोति ॥ [ स्रग्धरा ]

१) म३. °तावास° ( °तायास° ) । ना२. °सन्नः; ग्र१. म१.२.४. °सङ्ग°; म३. °संवि° ( °सन्न° ) । —२) सु३. प्रोद्भूतासह्य°; ग्र४. प्रोद्धाताग्रह्य°; म४. प्राग्भूतासन्न° । ना२. °वर्षे; ग्र१. °तृष्णुर्; ग्र४. °तृप्ते; म१.२. °तृष्णं; म४. °तृष्णा° ( °तृष्णो ) । ना३. ग्र४. °विरतो; म५. °सरतो ( °निरतो ) । —३) ग्र४. °वार्धितुं; म५. °विह्नितं ( °वर्जितं ) । ना२. शार्वरीशो; ते२. कर्करीशो; म४.५. कर्क-

रीभ्यो । —४) ना२. ज्योत्स्नाभिर्नाच्छधारं; प्र१. म१.२. ज्योत्स्नाच्छायाभिरामं; प्र४. ज्योत्स्नाभिन्नाम्बुधारं; म३. ज्योत्स्नोभिन्नाच्छधारं; म४. ज्योत्स्नोभिन्नात्तसारं; म५. ज्योत्स्नाच्छायात्तसारं । ना२. प्र१. पिबति न; म१.२.५. पिबति च । प्र१. सबिलिं (सलिलं) । सु. ना२. म४.५. मन्दभाग्यः; म३. मन्दपुण्याः ॥

भ. ६२२ (२२९); शतकावलौ ६८ । शा. ३९०८ (भर्तृ°) । सु. १८२४ । सुभा. पृ० ३४५.४६ ॥

हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोभृतः
काश्मीरद्रवसान्द्रदिग्धवपुषः खिन्ना विचित्रै रतैः ।
वृत्तोरुस्तनकामिनीजनकृताश्लेषा गृहाभ्यन्तरे
ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ९७ ॥

हेमन्त इति ॥ हेमन्ते हिमऋतौ । दधि पयस्यं दुग्धं पयः सर्पिः आज्यं अशनं अन्नं येषां ते तथोक्ता दधिदुग्धसर्पिराक्ता(न्न) भोजिन इत्यर्थः । माञ्जिष्ठानि मञ्जिष्ठेन रक्तानि वासांसि वस्त्राणि बिभ्रतीति तथाविधाः काश्मीरद्रवसान्द्रदिग्धवपुषः घुसृणरसघनलिप्तशरीराः । विचित्रैर्विविधै रतैः सुरतैः खिन्नाः क्लान्ताः । वृत्तोरुस्तनकामिनीजनकृताश्लेषाः वर्तुल घन(गुरु)कुचनारीजनकृतालिङ्गनाः ताम्बूलीदलैर्नागवल्लीपर्णैः पूगैः क्रमुकैश्च पूरितानि गुम्फितानि मुखानि वदनानि येषां ते तथाविधा धन्याः सुकृतिनो गृहाभ्यन्तरेऽभ्यन्तरगृहे सुखं यथा भवति तथा शेरते निद्रान्ति ॥ [ शार्दूलविक्रीडितम् ]

१) ना ३-५. प्र१. मञ्जिष्ठ° । म३. °वातोद्धतं । —२) तु. कस्तूरी° (काश्मीर°) । म४.५. °द्रवदिग्धसान्द्रव° । ना५. रा. प्र५. छिन्ना (खिन्ना) । प्र२ (मू). विचित्ररणिः । —३) तु२. वित्तोरु°; ना२. वृत्तोरः—; प्र५. पीनोरु° । तु२. °जनकृती । प्र४. ग्रहाभ्यन्तरे ॥

भ. ७४१७ (३३५९); काव्यसं° ४० । सुभा. पृ० ३४६.३१॥

प्रोद्यत्प्रौढप्रियङ्गुद्युतिभृति विकसत्कुन्दमाद्यद्द्विरेफे
काले प्रालेयवातप्रचलविलसितोद्दाममन्दारधाम्नि ।
येषां नो कण्ठलग्ना क्षणमपि तुहिनक्षोददक्षा मृगाक्षी
तेषामायामियामा यमसदनसमा यामिनी याति यूनाम् ॥९८॥

प्रोद्यदिति ॥ { प्रोद्यन्त्य उदित्वराः प्रौढाः प्रवृद्धाश्च याः प्रियङ्गवः ताभिः शोभां बिभर्तीति तथोक्ते } (प्रोद्यद्गाढप्रियङ्गुद्युतिभृति प्रोन्मिषत्सान्द्रफलिनीकान्तिधरे) विकसत्कुन्देषु विकसनशीलकुसुमेषु माद्यन्तो मत्ता द्विरेफा भ्रमरा यस्मिंस्तथोक्तस्तस्मिन् । प्रालेयवातैर्हिमवायुभिः प्रचलानि चञ्चलानि विलसितानि प्रकाशमानानि उद्दामानि बहूनि मन्दारदामानि पारिजातकुसुमस्रजो यस्मिंस्तादृशो

काले हेमन्ततौं तुहिनक्षोददक्षा(ः) हिमनिवारणसमर्था(ः) मृगाक्षी ( क्ष्यः ) हरिणेक्षणा(ः) येषां यूनां कामिनीनां क्षणमपि क्षणमात्रमपि नो कण्ठलग्ना(ः) कण्ठलग्ना न भवति ( न्ति ) । नालिङ्गिता चे(श्चे)दित्यर्थः । तेषां यूनां कामिनां आयामियामा आयतप्रहरा यामिनी रात्रिः यमसदनसमा अन्तकगृहकल्पा सती याति गच्छति ॥ [ स्रग्धरा ]

१) प्र२.३. प्रोद्यद्गाढ° । प्र१. म१.२. विलसत्–; प्र५. विदलत्– ( विकसत्– ) । तु. °द्विरेफाः; प्र२(मू). °द्युरेफे । —२) ते १. °वाता° ( °वात° ) । तु. ना२. °प्रबल° ( °प्रचल° ) । ना२. °विकसितो° । तु१. °हार°; तु२. ना३–५. रा. ते. प्र५. °दार° ( °द्दाम° ) । तु१. सु. ना२. प्र५. °दाम्नि; तु२. °दम्नि; प्र३ ( मू ). °दाम्ना ( °धाम्नि ) । —३) ना२. ते२. प्र२. एषां ( येषां ) । सु. प्र२. नो कण्ठलग्नाः; ना२. प्र४.५. नोत्कण्ठलग्ना; ते१. नः कण्ठलग्ना; म३. नो कर्णलग्न– । सु१. °क्षोददक्ष्या; ना२. °क्षोदवक्षा; प्र१. म२. °क्षोदरक्षा; प्र४. °क्षोभदक्षा; म१. °क्षोभरक्षा; म३. °क्षोभराक्षो । सु. प्र२.३. मृगाक्ष्यस्; म३. मृगाक्ष्या । —४) तु. आयातयामैर्; सु. आयामियामैर्; ना३–५. रा. ते२. प्र४.५. आयामयामा । प्र१. म१.२. यातु नूनम्; म३.४. यातु यूनाम् ( याति यूनाम् ) ॥

भ. ४३६६ (१९२८) । शा. ३९२४ । सु. १८४३ । सक. २.१७२.३ ( पृ० १८१ ) ॥

अथ शिशिरसमयः ।

*चुम्बन्तो गण्डभित्तीरलकवति मुखे सीत्कृतान्यादधाना
वक्षःसूत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ।
ऊरूनाकम्पयन्तः पृथुजघनतटात्स्रंसयन्तोऽशुकानि
व्यक्तं कान्ताजनानां विटचरितभृतः शैशिरा वान्ति वाताः ॥९९॥

चुम्बन्त इति ॥ कान्ताजनानां कान्तासमूहानां गण्डभित्तीर्भित्तितुल्यगण्डस्थलानि । चुम्बन्तश्चुम्बनमाचरन्तः । मुखे वदने अलकवति विस्तृतकेशे सति । सीत्कृतानि सीत्काराणि आदधानाः कुर्वन्तः सीत्कारवति [ मनु ] कुर्वन्त इत्यर्थः । वक्षःसु उरःसु स्तनेष्विति यावत् । उत्कञ्चुकेषु धृतवारवाणेषु स्तनभरेषु कुचभारेषु पुलकोद्भेदं रोमाञ्चोत्पत्तिमापादयन्तः संपादयन्तः ऊरून्सक्थीनि आकम्पयन्त ईषच्चालयन्तः पृथुजघनतटाद्विशालकटिपुरोभागात् अंशुकानि वस्त्राणि स्रंसयन्तः भ्रंशयन्तः विटचरितभृतः षिड्गचारित्रभाजः शैशिराः शिशिरर्तुसंबन्धिनो वाता वायवो व्यक्तं स्फुटं यथा तथा वान्ति प्रसरन्ति ॥ [ स्रग्धरा ]

[ म४.५. कोशयोर्नास्ति ] १) ना२. गल्लभित्तीर् । सु१. स्वीत्कृता°; ना२. संसीत्कृता° । तु. आददाना । —२) प्र३. वक्षस्तत्कञ्चुकेषु । ना२.–त्कञ्चुकीषु । प्र४. स्तनपुटपुलको° । तु. °द्वन्द्वमापादयन्तः; ना२. °द्भेदमासादयन्तः । —३) प्र१. °तटी; प्र३. °तटत्– । सु१.२. स्रंसयन्तोकुशानि; प्र३. भ्रंशयन्तोंशुकानि; प्र४. स्रंसयन्नंशुकानि । —४) प्र४. वृत्तं ( व्यक्तं ) । प्र१. म१.२. विदितरतिकृतः ( प्र१. °ताः ) ( विटचरितभृतः ) । प्र३. वन्ति पातः ॥

म. २३०२ (९१८); शतकावलौ ६८। शा. ३९४५। सु. १८५५। सूसु. ६४.९ (बकुलावतंसस्य)। सुभा. पृ० ३४८.१९ ॥

केशानाकुलयन्दृशो मुकुलयन्वासो बलादाक्षिप-
न्नातन्वन्पुलकोद्गमं प्रकटयन्नावेगकम्पं शनैः।
वारं वारमुदारसीत्कृतकृतो दन्तच्छदान्पीडय-
न्प्रायः शैशिर एष संप्रति मरुत्कान्तासु कान्तायते ॥१००॥

केशानिति ॥ शैशिरः शिशिरसंबन्ध एष मरुद्वायुः संप्रति इदानीं केशानलकान् आकुलयन् विश्लथयन् दृशो नेत्राणि मुकुलयन्मुकुलानि कुर्वन् वासो बलादाक्षिपन्नाकर्षन् पुलकोद्गमं रोमाञ्चोत्पत्तिमातन्वन्विरचयन् शनैरावेगकम्पमुद्वेगचलनं प्रकटयन्प्रख्यापयन् वारं वारं पुनः पुनः उदारसीत्कृतकृतो गम्भीरसीत्कारकारिणः दन्तच्छदानधरोष्ठान् पीडयन् प्रायः कान्तासु तरुणीषु कान्तायते दयित इवाचरति। प्रिय इव चुम्बनादिव्यापारमलंकरोतीत्यर्थः [शार्दूलविक्रीडितम्]

इति भर्तृहरिशृङ्गारशतकटीका हरिः ॐ शुभमस्तु। श्रीगुरुचरणारविन्दाभ्यां नमः ॥

१) ना२. आकल्यन्। सु१. कुमुलयन्। —२) तु. सर्वाङ्गे पुल्कोद्गमान्; ना२. आतन्वन्पुलकोद्दमं; ग्र४. आतन्वन्नलकोद्यमं। ना२. प्रगटयन्। ना५. आवेश°; ग्र१. आवेष° (आवेग°)। ना२. °ङ्गेगेषु कम्पोद्गमं; ग्र४. °न्नावेगतो कम्पनैः। —३) तु. °शीत्कृतिकृतो; सु. ते. ग्र१.२. °सीत्कृतिकृतो; म४.५. °सीत्कृतिमृतो। म४. भिन्नयन्; म५. भिन्दयन् (पीडयन्)। —४) ना२. प्राग्यः। ग्र१. मरुत्कान्तः स कान्तायते ॥

म. १९१५ (७३८)। सु. १८५४। शा. ३९४४। सूसु. ६४.८ (बकुलावतंसस्य)। सुभा. पृ० ३४८.१८ ॥

शृङ्गारशतके पञ्चमविंशत्यन्ते अधिकौ।

वैराग्यं संश्रयत्येको नीतौ भ्रमति चापरः।
शृङ्गारे रमते कश्चिद्भुविभेदात्परस्परम् ॥ १ ॥

[तु. शृङ्गार १००; ना२. शृङ्गार ५.२१ (प्रथमतृतीयपादौ व्यत्यस्तौ)] [म. ६२९१ (२९०३)।]

धन्यानां नवपूगपूरितमुखश्यामाङ्गनालिङ्गन-
त्रस्तानेकसुखप्रमोदमनसां स्वल्पायते शर्वरी।
अस्माकं तु कुटुम्बशम्बलकथासंतापचिन्ताज्वर-
ज्वालाजागरजागरूकमनसां सैवातिदीर्घायते ॥ २ ॥

[ग्र४. शृङ्गार ९९; म४.५. शृङ्गार ५.२०] [सक. २.१७५.१ (पृ० १८२)]



# वैराग्यशतकम् ।

## तृष्णादूषणम् ।

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभासुरो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।
अन्तःस्फूर्जदपारमोहतिमिरप्राग्भारमुच्छेदयं-
श्चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥ १ ॥

चूडोत्तंसितेति । योगिनां अष्टाङ्गयोगवतां चेतसि । मनस्येव सद्मनि गृहे ज्ञानप्रदीपो ज्ञानप्रकाशको हरः परमेश्वरो विजयते सर्वोत्कर्षेण स्फुरति । दीपोऽपि गृहे स्फुरति । ज्ञानस्वरूपः परमेश्वरोऽपि ध्याननिष्ठानां चेतःसंज्ञके गृहे स्फुरति विशेषेणैव परमेश्वरस्य दीपसाम्यमाह । चूडायां मौलौ उत्तंसिता शेखरीकृता । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे तु शेखर' इत्यमरः । चार्वी रमणीया चन्द्रकलिका (चन्द्रिका) सुधांशुकला । सैव चञ्चती [न्ती] प्रकाशमाना शिखा ज्वाला तया भासुरो दीप्यमानः । दीपोऽपि चञ्चच्छिखाभासुरो भवति । लीलया अक्लेशेनैव दग्धो भस्मीकृतः विलोलश्चपलः कामो मदन एव शलभः पतंगो येन स तादृशः । प्रदीपोऽपि विलोलं शलभं लीलया दहति । श्रेयोदशाया मोक्षावस्थाया अग्रे प्रथमं स्फुरन्विद्योतमानः । दीपोऽपि श्रेयस्या अतिशोभनायाः । 'श्रेयाञ्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चाति शोभन' इत्यमरः । दशाया वर्तेः अग्रे शिरसि स्फुरति । श्रेयसी च सा दशा चेति कर्मधारये 'पुंवत्कर्मधारयजातीयदेशीयेषु' इति पुंवद्भावात् ङीपो लोपः । ततः 'ससजुषो रुः' इति रुत्वे हशि चेत्युत्वे आद्गुण इति गुणे च कृते श्रेयो इति रूपं भवति । अन्तश्चित्ते स्फूर्जन्विजृम्भमाणः अपारोऽनन्तो मोहोऽज्ञानं स एव तिमिरमन्धकारः । तस्य प्राग्भारो बाहुल्यम् । तं उच्छेदयन् उन्मूलयन् । दीपोऽपि अन्तः गृहाभ्यन्तरे स्फूर्जन्तमपारतिमिरप्राग्भारं छेदयति ॥ [ शार्दूलविक्रीडितम् ]

१) ते२. मारोत्तंसित° । ना३. रा. ग्र१.२. म३. °चन्द्रचारु° । म३. °कलितं (°कलिका°) । ना२. बिभ्रच्छिरोभा°; तु. ना३. रा. ग्र१.४. म४.५. °भास्वरो. —३) तु१. अन्ते स्फूर्जित°; तु२. अन्तःस्फूर्जित° । रा. ग्र. म१–३. °मुच्चाटयन् । —४) ना२. श्रोतःसद्मनि ॥

भ. २३०३ (९१९) । सुभु. १.६ (पाठान्तरैः) ॥

भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकव-
त्तृष्णे जृम्भसि पापकर्मपिशुने नाद्यापि संतुष्यसि ॥ २ ॥

भ्रान्तमिति ॥ अनेकैर्बहुविधैर्दुर्गैः वनादिप्रभृतिभिर्विषमं गन्तुमशक्यं देशं विषयं [ उद्दिश्येति शेषः । भ्रान्तं अटितं । भावे क्तप्रत्ययः ] ( भ्रान्त्वा परिभ्रम्य ) किंचिदल्पमपि फलं न प्राप्तं न लब्धम् । जातौ ब्राह्मणत्वादौ कुले वंशे च उचितमर्हं अभिमानं चित्तसमुन्नतिं त्यक्त्वा विहाय सेवा श्ववृत्तिः कृता विहिता । सापि निष्फला फलरहिता । परेषामन्येषां गृहेषु वेश्मसु मानविवर्जितं बहुमानहीनं यथा भवति तथा काकवद्वायसेनेव आशङ्कया मामेते वारयिष्यन्ति किं निर्भर्त्सयन्ति किं इत्येवमादिकया सह भुक्तमभ्यवहृतम् । इदं सर्वमपि तृष्णामयमिति तृष्णामुपालभते । पापस्य कर्मणः पिशुने सूचके हे तृष्णे स्पृहे जृम्भसि वर्धसे । अद्यापि इदानीमपि न विश्राम्यसि न विरमसि । यस्य तृष्णा महती वर्तते स पूर्वस्मिञ्जन्मन्यपि तृष्णावान्पापकृद्भविष्यति चेति ज्ञायते । तृष्णामूलकत्वात्परस्वग्रहणदुःखप्रतिग्रहादीनाम् ॥ [ शार्दूलविक्रीडितम् ]

१) ग्र३.५. म५. भ्रान्त्वा ( भ्रान्तं ) । —२) ना५. °मुन्विता । म३. निष्फलं । —३) ना१. भुक्तं । —४) ना१. पापरूप° । तु. °निरते ( °पिशुने ) । ग्र३( मू ). संतुष्यति ॥

भ. ४६४५ (२०८०); शतकावलौ ९४ । सु. ३२६२ । सुभा. पृ० ७७.५४ । सूहा. १७५.३ ( भर्तृ° ) ॥

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णे सकामा भव ॥ ३ ॥

उत्खातमिति ॥ निधिर्निक्षिप्तद्रविणं तच्छङ्कया । न तु निश्चयेन । क्षितेर्भुवस्तलं स्वरूपं 'अधःस्वरूपयोरस्त्री तल'मित्यमरः । उत्खातं खनित्रकुद्दालादिनोत्पाटितम् । गिरेः पर्वतस्य धातवः शिलाविकृतयः ध्माताः वह्नौ निधाय भस्त्रवायुना तप्ताः । सरितां नदीनां पतिर्भर्ता समुद्रो निस्तीर्णः द्वीपान्तरेषु द्रविणार्जनयत्नेन लङ्घित इत्यर्थः । नृपतयो राजानः यत्नेन उद्योगेन द्रविणमेते वितरिष्यन्तीति संतोषिताः प्रसन्नीकृताः । मन्त्राणां मनूनामाराधनेऽनुष्ठाने तत्परेणासक्तेन मनसा चेतसा श्मशाने पितृवने निशा रात्रयो नीता गमिताः । तथापि काणवराटकः सरन्ध्रकपर्दिकोऽपि मया न प्राप्तो न लब्धः । हे तृष्णे वाञ्छे सकामा कामेन सहिता भव एधि । मामेतावत् कारयितुमुद्युक्तायास्तृष्णायाः कामः फलित इत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) तु२. क्षितितले । तु१. ध्याता । —२) सु ३( मू ). ना२. म. संसेविताः । —३) तु. ना१.२. ते२. स्मशाने । तु१. निषा; तु२. ग्र३( मू ). निशा; ते२. वने । —४) तु. प्राप्तं । तु. तृष्णेधुना मुञ्च माम्; सु. तृष्णे सकामा भव ॥

भ. ११७० (४३९); सुभाष्. २८७ । सुर. पृ० ६६.४ ( भर्तृ° ) । सुभा. पृ० ७७.४९ । सूहा. १७५.२८ ( भर्तृ° ) ॥

खलालापाः सोढाः कथमपि तदाराधनपरै-
 निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतो वित्तस्तम्भप्रतिहतधियामञ्जलिरपि
 त्वमाशेऽमोघाशे किमपरमतो नर्तयसि माम् ॥ ४ ॥

खलालापा इति ॥ खलानां दुर्जनानां आलापः {=दुर्भाषितानि. रा. } (उल्लापाः परुषोक्तयः) कथमपि कृच्छ्रेण तेषामेव दुर्जनानां आराधनपरैः {=तत्सेवातत्परैः -रा-} आराधनरतैः सेवासक्तैः अस्माभिः सोढाः क्षान्ताः । अन्तरभ्यन्तरे बाष्पं नेत्राम्बु निगृह्यावरुध्य शून्येन हासहेतुरहितेन मनसान्तःकरणेन सह हसितं हासोऽपि कृतः । वित्तस्तम्भेन धनावष्टम्भेन प्रतिहताधियां नष्टबुद्धीनां अञ्जलिरपि करद्वयघटनापि कृतो विहितः हे आशे तृष्णे अमोघाशे अप्रतिहतोद्योगे । अतोऽस्मादपरं किमन्यन्मां नर्तयसि लासयसि । यत्कारयितव्यं तदखिलमपि कारितमेवेत्यर्थः ॥ [ शिखरिणी ]

१) ना२–५. प्र१–३.५. खलोल्लापाः । —३) तु. ना२. कृतश्चित्तस्तम्भ– । ना१. –प्रणिहित-धियाम् । —४) तु२. ते. °मितो (°मतो) ॥

अ. २०४७ (८०१) । सु. ३२६१ (भर्तृ°) । सुभा. पृ० ७७.४३ (भर्तृ°) । सुर. पृ० ६७.९ (शार्ङ्ग°) । सूहा. १७५.२५ (भर्तृ°) ॥

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
 कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां
 कृतं म्लानव्रीडैर्निजगुणकथापातकमपि ॥ ५ ॥

अमीषामिति ॥ विगलितविवेकैर्भ्रष्टविचारैरस्माभिः तुलितबिसिनीपत्रपयसां उपमितपद्मदलाम्भसां अमीषां प्राणानामसूनां कृते प्रयोजनाय किं न व्यवसितम् । सर्वमपि कृतमेव । यद्यस्मात्कारणात् द्रविणमदेन वित्तदर्पेण निःसंज्ञमनसां मूढहृदयानां आढ्यानां धनिनामग्रे पुरतः म्लानव्रीडैर्नष्टलज्जैरस्माभिः निजानां स्वकीयानां गुणानां श्रुतशीलादीनां कथा कथनमेव पातकं एनोऽपि कृतम् । आत्मस्तुतिः परनिन्दा च पातकमिति कथयन्त्याचार्याः ॥ [ शिखरिणी ]

१) तु१. बिसनी; तु२. बिसिनी । ना१. °पत्रपयसा । —२) तु. कृतं । तु२. व्यवसिताम् । —३) ना१. धनाढ्यानाम् । तु. निःसीममनसां; म१.२. निःसंज्ञमनसा । —४) प्र१–३. कृत- । तु१. म्लानं व्रीडैर्; सु. वीतव्रीडैर्; रा. प्र४. मानव्रीडैर् ॥

अ. ५२६ (१९७) । शान्तिशतके १.१९ । सुभा. पृ० ७७.४५ । सुर. पृ० ६७.१० (भर्तृ°) । सक. ५.४३.३ (पृ० ३०६; धर्मकीर्तेः) ॥

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढा दुःसहशीतवाततपनक्लेशा न तप्तं तपः ।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चिताः ॥ ६ ॥

क्षान्तमिति ॥ अस्माभिः क्षान्तं सोढं क्षमया न । भावे निष्ठा । किं तु कार्यवशेनैव क्षान्तमित्यर्थः । गृहोचितसुखं गृहस्थाश्रमयुक्तं सुखं शर्म त्यक्तमुज्झितम् । संतोषतो वैराग्येण न । किं तर्हि सेवाद्यासक्ततया दुःसहाः सोढुमशक्याः । शीतः शिशिरसंपातपवनः तपनः सविता तद्भवाः क्लेशाः दुःखानि सोढाः क्षान्ताः । अत्रापि सेवाद्यासक्तत्वमेव हेतुः । तपस्तु न तप्तं नानुष्ठितम् । अहर्निशमहोरात्रं नियमितप्राणैर्निरुद्धप्राणवायुभिरस्माभिः शंभोः परमेश्वरस्य पदं चरणं न ध्यातं न चिन्तितम् । मुनिभिस्तपस्विभिर्यदेव कर्म क्रियते तत्तदस्माभिः कृतं न तपोरूपेण । अत एव वयं तैस्तैः क्षान्त्यादीनां फलैर्वञ्चिता विप्रलब्धाः । वित्तं धनं ध्यातं चिन्तितम् । न लब्धम् । इदमेव क्षान्तिगृहोचितसुखत्यागशीतवाततपनक्लेशसहनध्यानरूपकर्म तपोऽक्रियत (तपः क्रियते) चेत्संसारस्य सार्थत्वं भवति ॥ [ शार्दूलविक्रीडितम् ]

१) म१. संतोषितः । —२) तु२. सोढुं ( सोढा ) । तु. °पवन° (°तपन°) । तु. °क्लैशैर्; म१. °क्षोभा; म३. °क्लेशं ( °क्लेशा ) । —३) म१. नित्यम् ( वित्तम् ) । तु. नियमितैः; म२(मू). निशमित– । —४) तु. वञ्चितः ॥

भ. २०१५ (७८४) । शा. ४१५३ ( भर्तृ° ) । शान्तिशतके १.९ । सु. ३१७८ । सुभा. पृ० ३७४. २१९ ( भर्तृ° ) । सक. ५.५३.१ ( पृ० ३१२; भर्तृ° ) ॥

भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥७॥

भोगा इति ॥ भोगा वैषयिकसुखानि न भुक्ता नानुभूताः किं तु वयमेव कालेन भुक्ता भक्षिताः । तपः कृच्छ्रचान्द्रायणादिना शरीरशोषणं न तप्तं न कृतम् । किं तु वयमेव तप्ताः तापत्रयेण दग्धाः । कालोऽनेहा न यातो न गतः अपि तु वयमेव याता गताः । नवानां द्रव्याणां मध्ये आकाशकालदिगात्ममनांसि पञ्च द्रव्याणि नित्यानि । पृथिव्यप्तेजोवायवस्त्वनित्याः । परमाणुं वर्जयित्वा नव द्रव्याणि तार्किकरक्षायामुक्तानि । 'भूरापो ज्योतिरनिला नभः कालस्तथा दिशः । आत्मा मन इति प्राहुर्द्रव्याणि नव तद्विद' इति । अतः कालस्य नित्यत्वाद्गमनागमनं नास्ति । तृष्णाकाङ्क्षा न जीर्णा न दुर्बला किं तर्हि वयमेव जीर्णाः स्थविरा जाताः । जीवनं व्यर्थमेव जातमित्यर्थः ॥ [ उपजाति ]

१) तु१. भोगा न भुक्ताः; ते. भुक्ता न भोगा । ते२. वयमेव भोक्ता ॥

भ. ४६३१ (२०७०); सुभाष्. ११७ । शा. ४१५० ( भर्तृ° ) । सु. ३३९६ । क्षेमेन्द्रस्य औचित्यविचारचर्चायां ( का० १. पृ० १५४; परिव्राजकस्य ) । सुभा. पृ० ३७४.२०९ ( भर्तृ° ) ॥

वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ८ ॥

वलिभिरिति ॥ वलिभिः त्वक्शैथिल्यादुत्पन्नैर्भङ्गैर्मुखं वदनमाक्रान्तमधिष्ठितम् । पलितैः पाण्डुकेशैः शिरो मस्तकं [ अङ्कितं ] ( मण्डितं ) लाञ्छितम् । गात्राणि अङ्गानि शिथिलायन्ते विश्लथानि जातानि । तथापि एका तृष्णा वाञ्छा । तरुणायते युववदिति ( त्वं वामानादिनोश्चेति ) [ क्यङ्मानिनोश्चेति ] तरुणीशब्दस्य पुंवद्भावः । वार्धकावस्थायामपि तृष्णायाः शैथिल्यं नास्तीति भावः ॥ [ अनुष्टुप् ]

१) तु२. बलिभिर् । —२) तु२. पतितैरङ्कितं; ना२–४. रा. पलितेनाङ्कितं; प्र१. म२. पलितैः कम्पितं; म१. वलितैरङ्कितं । तु२. शिराः ॥

भ. ५९९३ (१९४८) । शा. ४१९ ( भर्तृ° ) । सु. ३२४२ ( व्यासमुनेः ) । सुभा. पृ० ७६.४ । सुर. पृ० ६७.६ ( प्रसङ्गरत्नावल्यां ) । सुभाषितार्णवे ३८.७१ । सभातरङ्गे ३३.३ ( भर्तृ° ) ॥

निवृत्ता भोगेच्छा पुरुषबहुमानोऽपि गलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो दुष्टः कायस्तदपि मरणापायचकितः ॥ ९ ॥

निवृत्तेति ॥ भोगेषु विषयानुभवेषु इच्छा वाञ्छा निवृत्ता उपरता । पुरुषः पुमानिति बहुमानो गौरवमपि गलितो ध्वस्तः । समानाः श्रुतशीलवृत्तवयोभिस्तुल्याः जीवितसमाः प्राणकल्पाः सुहृदो मित्राणि सपदि शीघ्रं स्वर्याताः मृताः । शनैः चिरेण यष्ट्युत्थानं यष्ट्या दण्डेनोत्थानमुद्गमनम् । नयने नेत्रे घनेन निबिडेन तिमिरेण ध्वान्तेन रुद्धे आवृते । तदपि तथापि दुष्टः कुत्सितः कायः शरीरं मरणमेवापायस्तस्माच्चकितो भीतः । अहो आश्चर्यम् । कष्टायां वार्धकावस्थायामपि मरणाद्भयमस्ति । बाल्यकौमारयौवनादिषु किमुत । पुनः शरीरपरिग्रहो यथा न भविष्यति तथा यत्नः कार्य इत्यर्थः ॥ [ शिखरिणी ]

१) म५. वपुषि ( पुरुष– ) । तु. सु. ना१. म१.५. °मानो विगलितः । —३) तु. यद्युत्थानं । प्र१. °विद्धे ( °रुद्धे ) । —४) प्र१. म१–३. ऽप्यहो; प्र४. त्वहो ( अहो ) । तु. हृष्टः; सु. ना२. धृष्टः; रा. ते. प्र५. मूढः; प्र१. कष्टं; प्र४. म१–३. कष्टः ( दुष्टः ) । ना२. मरणोपाय° ॥

भ. ३७७२ (१६१५) । सु. ३३९८ । सुभा. पृ० ७७.४४ । सुर. पृ० ६७.७ ( रसिकजीवनस्य ) । सूक्ता. १९६.२३ ( भर्तृ° ) ॥

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ १० ॥

आशेति ॥ मनोरथो लिप्सैव जलमुदकं यस्याः सा तथोक्ता । तृष्णा लब्धाधिकवाञ्छैव तरङ्गा ऊर्मयस्तैराकुला संकीर्णा । रागः स्त्रीयेषु वस्तुषु प्रेमाण एव ग्राहा यादांसि यस्यां सा तद्वती । वितर्का विविधा ऊहा एव विहगाः शकुन्ता यस्यां सा तद्वती । धैर्यं विषयेष्वलोलुपत्वं तदेव द्रुमः शाखी तं ध्वंसते भिनत्तीति धैर्यद्रुमध्वंसिनी । मोहैर्मिथ्याज्ञानैरेवावर्तैर्भ्रमैः सुतरामत्यर्थं दुस्तरा विलङ्घयितुमशक्या अत्यर्थं गहना कलिला । प्रकर्षेणोत्तुङ्गा उन्नता चिन्ता ध्यानमेव तटी कूलं यस्याः सा तादृशी आशा आयता तृष्णा। 'आशा तृष्णापि चायते'त्यमरः । नदी तरङ्गिणी भवितुं संभवतीत्यर्थः । यस्मादस्यामाशायां नदीधर्मा जलतरङ्गादयः सन्तीति तात्पर्यम् । 'नामप्रकाशसंभाव्य' इत्यमरः । अथ वा कुत्सने नामशब्दः । तस्या आशानद्याः पारगताः कूलं गताः । आशातीता इत्यर्थः । विशुद्धानि निर्मलानि मनांसि येषां ते योगीश्वरा योगिश्रेष्ठाः सनकादयो नन्दन्ति हृष्यन्ति । यैराशा परित्यक्ता त एव ब्रह्मानन्दस्य भाजनमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

२) ना२. विकर्क° ( वितर्क° ) । —३) तु१. °स्तरापि गहना; म५. °स्तरा सुगहना ॥

म. १०४७ (३९७); सुभाष्. ७(९७) । शान्तिशतके ४.२६ । शा. ४१०३ ( भर्तृ° ) । सुभा. पृ० ३६७.७६ ( भर्तृ° ) । सुर. पृ० ६७.८ ( भर्तृ° ) । सूहा. २००.३२ ( भर्तृ° ) ॥

## वैराग्यशतके प्रथमपद्धतौ अधिकः ।

आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला ।
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति कुत्रचित् ॥ १ ॥

[ अडयार् २८ एम् ५६. वैराग्य ११ ] [ सुभा. पृ० ७६.१० । सूहा. १७५.१७. ]

### विषयपरित्यागविडम्बनम् ।

*न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ११ ॥

नेति ॥ संसारोत्पन्नं भवोद्भूतं चरितं चरित्रं कुशलं हितकारि नानुपश्यामि नावलोके । ननु पापचरितमेव कुशलं मास्तु, पुण्यचरितं कुशलं किमिति न भवतीत्याशङ्क्याह । पुण्यानां सुकृतानां विपाकः फलं विमृशतो विचारयतो मे मम भयं त्रासं जनयति उत्पादयति । अस्मिञ्जन्मनि हिरण्यान्नदानादिना पुण्येन जन्मान्तरे हिरण्यवानन्नवान्भवति । तदपि संसारान्तःपातित्वाद्भयजनकमेव दुःखहेतुत्वात् । तथा चोक्तं व्यासेन । "अर्थानामर्जने दुःखमर्जितानां तु रक्षणे । नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजन"मिति ॥ ननु ज्योतिष्टोमादि महत्पुण्यं चिरकालस्थायिफलदत्वात्कुशलमेवेत्याशङ्क्याह । महद्भिरधिकैः पुण्यौघैः सुकृतसमूहैः चिरपरिगृहीता दीर्घकालमनुभूयमानाः स्वर्लोकविषयाश्च विषयिणां विषयानुभवितॄणां व्यसनं दुःखं दातुं महान्तोऽधिका जायन्ते भवन्ति । इवेति वाक्यालंकारे । तथा हि । केषांचित्स्वर्गवासमात्रं अन्यस्य तु स्वर्गराज्यमिति । परसंपदुत्कर्षो वा सततं नाशशङ्कया च स्वर्गविषया अपि दुःखावहा एवेत्यर्थः ॥ [ शिखरिणी ]

[ तु. कोशे नास्ति ] ३) ग्र१. म१.२.४. हि (च) । —४) ग्र१. महन्तो । ना१.२. इह; ग्र१. म. अपि ( इव ) । ग्र३ ( मू ). दातुर् ( दातुं ) । ना२. विषविनाम् ॥

भ. ३४७६ (१४८४) । सु. ३४५५ ( भर्तृ° ) । सुभा. पृ० ३६८. ४३ ॥

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ १२ ॥

अवश्यमिति ॥ विषयाः शब्दादयः चिरतरं द्राघिष्ठं कालं उषित्वा स्थित्वापि अवश्यं सर्वथा यातारो गमिष्यन्त्येव । या प्रापणे । लुटि रूपम् । नश्वरानप्यमून्विषयाञ्जनो लोकः स्वयमात्मना न त्यजति न जहाति । तैर्वियोगे विरहे को भेदः किमन्तरम् । आत्मना त्यक्तेषु विषयेषु विशेषमाह । एते विषयाः स्वयं जनेन त्यक्ता उज्झिताः सन्तः अनन्तं निरवधिकं शं [ शम ] सुखं शान्तरूपं शर्म विदधति कुर्वन्ति । स्वातन्त्र्यात्स्वच्छन्दाद्व्रजन्तो नश्यन्तो विषया मनसश्चेतसोऽतुलपरितापाय निरुपमसंतापाय । हि खलु ॥ [ शिखरिणी ]

१) तु. ना१. °चिरपरिगृहीताश्च । —२) ग्र१. हेतुस् ( भेदस् ) । —३) ग्र५. व्रजन्त्यः । ग्र५. मनसां । —४) तु. सुखं ( स्वयं ) । ते२. ग्र३( मू ). ४. त्यक्त्वा । ग्र५. श्रमसुखम् । म३. विदधते ॥

भ. ६६८ (२४३) । सु. ३३८६ ( जयादित्यस्य ) । शान्तिशतके ३. ३ । सुभा. पृ० ३६८. ४२ ( जयादित्यस्य ) । सक. ५. ६२. ५ ( पृ० ३१८.; हरेः ) ॥
नी० श० १६ (वै० श०)

ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः ।
संप्राप्तान्न पुरा न संप्रति न च प्राप्तौ दृढप्रत्यया-
न्वाञ्छामात्रपरिग्रहानपि परित्यक्तुं न शक्ता वयम् ॥१३॥

ब्रह्मज्ञानेति ॥ ब्रह्मणः परमात्मनो ज्ञानं शास्त्रावबोधः तेनैव विवेकेन निर्मला विशुद्धा बुद्धिर्येषां ते तद्वन्तः दुष्करं कर्तुमशक्यं कुर्वन्ति विदधति । अहो आश्चर्यम् । यस्मात्कारणात् एकान्तं नितान्तं निःस्पृहाः स्पृहाया निष्क्रान्ताः सन्तः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्ये'ति समासः । उपभोगभाञ्जि उपभुज्यमानान्यपि धनानि द्रविणानि मुञ्चन्ति परित्यजन्ति । वयं तु पुरा पूर्वस्मिन्काले न प्राप्तानि न लब्धानि संप्रतीदानीं च न प्राप्तानि प्राप्तौ लब्धौ दृढो निश्चितः प्रत्ययो ज्ञानं च नास्ति वाञ्छामात्रं काङ्क्षैव परिग्रहः स्वीकारो येषां तानि तथाभूतान्यपि धनानि परित्यक्तुं विहातुं न शक्ताः न समर्थाः । ज्ञानिनो धनानि त्यजन्ति । वयं तु धनलिप्सामपि हातुं नालमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) ग्र१. म१.२. तत्त्व° ( ब्रह्म° ) । —२) ना२. यन्मुञ्चन्तुरुभोग° । तु१. °भ्रान्त्यपि; तु२. °भात्यपि; ग्र४. °भाज्यपि । तु. सु. ग्र३.४. म. निस्पृहाः । —३) तु. संप्राप्तं न परित्यजन्ति न च काङ्क्षन्ति दृढप्रत्ययाः । ना२. म३–५. संप्राप्तं न; ना१. संप्राप्ता न; ग्र२.३. संप्राप्तानि ( संप्राप्तान्न )। ना२. प्राप्ते; ग्र१. प्राप्यां; म१.४. प्राप्यान्; म२. प्राप्यं; म५. प्राप्ता ( प्राप्तौ ) । सु. ना१.२. म५. दृढप्रत्यया; ग्र१. दृढप्रत्ययाद्; ग्र२.३. म३. दृढप्रत्ययो । —४) तु. °परिग्रहार्थनपि; ग्र३.५. °परिग्रहाण्यपि । तु. कथं त्यक्तुं; ना५. रा. ते. ग्र५. परं त्यक्तुं ( परित्यक्तुं ) ॥

भ. ४४९१ (१९९१); सुभाष्. ३१७ । शान्तिशतके १. ४ ( हे० ४१० ) । सुर. पृ० ९४. २ ( कल्पतरौ ) । सुभा. पृ० ३७५. २२४ ॥

धन्यानां गिरिकन्दरेषु वसतां ज्योतिः परं ध्यायता-
मानन्दाश्रुकणान्पिबन्ति शकुना निःशङ्कमङ्केशयाः ।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते ॥ १४ ॥

धन्यानामिति ॥ धन्यानां कृतकृत्यानां गिरिकन्दरे[षु] पर्वतदर्यां [ दरीषु ] (नि) वसतां स्थितानां परं ज्योतिः ब्रह्मतेजो ध्यायतां चिन्तयतां [ आनन्दाश्रुकणान् आनन्दबाष्पबिन्दून् ] ( आनन्दाश्रु प्रमोदास्रमेव जलमुदकं कर्म ) शकुना विहंगा निःशङ्कं शङ्कारहितं यथा भवति तथा अङ्केशया उत्सङ्गशायिनः सन्तः पिबन्ति धयन्ति । एतेन ध्यानोत्कर्षः कथितः । मनोरथैर्मनोभिलाषैरुपरचितेषु ( परिचितेषु ) प्रासादेषु सौधेषु वापीतटेषु दीर्घिकाकूलेषु क्रीडाकाननेषु नर्म(रम्य)वनेषु ये केलयः तेषु कौतुकजुषां कुतूहलभाजां अस्माकं तु परं केवलं

आयुर्जीवितकालः क्षीयतेऽपचीयते । ब्रह्मण्यासक्तचित्तानां तु जीवितकालः सार्थकः । विषयोपभोगसंकल्पनिमग्नानां तु आयुर्निरर्थकम् ॥ [ शार्दूलविक्रीडितम् ]

१) तु. ना२. प्र२.३.५. °कन्दरे निवसतां; ना३. °गह्वरेषु वसतां । ना२. परे ( परं ) ।—२) ना२. प्र२.३. °श्रुजलं; म३. °श्रुगणान् । —३) प्र३( मू ). मनोरथे परिचित- । —४) प्र१. परिक्षीयते ॥

म. ३०७७ (१३०७) । शा. ४१५५ ( भर्तृ° ) । शान्तिशतके १. ५ ( हे. ४११ ) । सूमु. १२६. ७ ( भर्तृ° ? ) । सुभा. पृ० ३७४. २२० ( भर्तृ° ) । सक. ५. ५८. ३ ( पृ० ३१५; सत्यबोधस्य ) ॥

भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रं च जीर्णशतखण्डमयी च कन्था
हा हा तथापि विषया न परित्यजन्ति ॥ १५ ॥

भिक्षाशनमिति ॥ भिक्षैवान्नं तदपि नीरसं घृतदध्यादिरसरहितम् । एकवारं सकृत् । शय्या शयनं भूर्भूमिः । परिजनः परिवारको निजदेहमात्रं स्वकीयदेहमेव । वस्त्रं वसनं च जीर्णानां पुरातनानां शतस्य परिमितानां खण्डानां वासश्छेदानां । कृदिकारे मयट् । कन्था । तथापि विषया इन्द्रियार्था न परित्यजन्ति । हा हा खेदे ॥ [ वसन्ततिलका ]

१) तु१ (मू). भिक्षासनं; प्र२ (मू). भिक्षाटणं । —२) म४.५. मही (च भूः) । प्र१. °देहमात्रः । —३) ना५. रा. ते१. प्र४.५. विशीर्ण° ( च जीर्ण° ) । म४.५. °शतरन्ध्रमलीन- । म२. -कन्धा ( -कन्था ) । —४) तु२. म५. विषयान्न ।

म. ४५८३ (२०४३); सुभाष. ३०९ । सुभा. पृ० ७६.३७ । सुर. पृ० ९१.८ (भर्तृ°) । सक. ५.५७.२ ( पृ० ३१५, बिल्हणस्य; तद्वत् शान्तिशतके १.२३ ) । सूहा० १९६.२१ ॥

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।
स्रवन्मूत्रक्लिन्नं करिवरशिरःस्पर्धि जघनं
मुहुर्निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ १६ ॥

स्तनाविति ॥ स्तनौ कुचौ मांसस्यामिषस्य ग्रन्थी पिण्डौ कनककलशौ शातकुम्भकुम्भौ इत्युपमितौ । मुखं वदनं श्लेष्मणः कफस्यागारं वासगृहं तदपि च शशाङ्केन चन्द्रेण तुलितमुपमितम् । स्रवता गलता मूत्रेण प्रस्रवेण क्लिन्नमार्द्रं जघनं स्त्रीकट्याः पुरोभागः करिवरस्य द्विपश्रेष्ठस्य शिरसा मस्तकेन स्पर्धि सदृशम् ।

मुहुर्मुहुः पुनः पुनः निन्द्यं गर्हणीयं रूपं स्त्रीणामाकृतिः कविजनविशेषैरुत्कृष्टकविभिः गुरु अधिकं कृतम्। अविचारितरमणीयं रमणीयरूपं विचार्यमाणं जुगुप्सास्पदमेवेत्यर्थः ॥ [ शिखरिणी ]

[ तु. म३–५. कोशेषु प्रथमद्वितीयचरणौ व्यत्यस्तौ ] १) ते२. °शामित्युपमितौ। ग्र१. °स्युपमितं। —२) ग्र३ (मू). म२–५. श्लेष्माकारं। —३) तु. तदपि च वराङ्गं निगदितं; सु. ना१. करिवरकरस्पर्धि जघनं। —४) ना१. परं; ना२. अहो ( मुहुर् )। सु३. ग्र४. कविवर° (ग्र४. 'कविजन' इत्यपि); म४. कविनुत°; म५. कविनुति°। तु. ग्र४. म१.२.४.५. °वचोभिर् (ग्र४. °विशेषैर् इत्यपि); ना२. °विकल्पैर्। ग्र१. उरु ( गुरु ) ॥

भ. ७१८६ (३२९७); सुभाष. ३०९। शा. ४१४७ ( भर्तृ° )। सुभा. पृ० ३७१.१३० ॥

एको रागिषु राजते प्रियतमादेहार्धहारी हरो
नीरागेषु जनो विमुक्तललनासङ्गो न यस्मात्परः।
दुर्वारस्मरबाणपन्नगविषव्यासङ्गमुग्धो जनः
शेषः कामविडम्बितान्न विषयान्भोक्तुं न मोक्तुं क्षमः ॥१७॥

एक इति ॥ रागिषु अनुरागवत्सु मध्ये प्रियतमादेहार्धहारी स्वप्रियाशरीरार्धभागहारी प्रियासहितशरीरार्धभागेन मनोहर इत्यर्थः। हरः परमेश्वरः एक एव राजते प्रकाशते। अनुरक्तेषु देहार्धजानिः शिव एव नान्य इति भावः। नीरागेषु विरक्तेषु मध्ये विमुक्तललनासङ्गः त्यक्तस्त्रीसंपर्को [ जनो मनुष्यः ] ( जिनो बुद्ध एव ) राजते प्रकाशते। ( यस्य जिनदेवस्य दुर्वारस्मरबाणपन्नगविषव्यासङ्गमुक्तः दुःसहमदनशरभुजंगगरलसङ्गविवर्जितः अपरः अन्यः न अस्ति। जिनदेवसमविरक्तः कश्चन नास्तीति भावः )। [ दुर्वारा दुःसहा ये मन्मथबाणास्तद्रूपपन्नगानां विषसंपर्केण मुग्धः व्यामोहं प्राप्तः ] शेषो जनः अपरो लोकः। मादृश इत्यर्थः। कामविडम्बितान् मन्मथोद्दीपकान्विषयान्स्रक्चन्दनादीन्भोक्तुमनुभोक्तुं मोक्तुं परित्यक्तुं वा न क्षमः समर्थो न भवति ॥ [ शार्दूलविक्रीडितम् ]

१) ग्र१. म१.२. विश्रुतः; ग्र४. जायते (राजते)। तु. ग्र३(टी).४. म४.५. °धारी (°हारी)। —२) ग्र२.३. जिनो। ग्र१. म१–३.५. स एव मुक्त° (जनो विमुक्त°)। ना१. न तस्यापरः; ग्र१–३.५. न यस्यापरः; ग्र४. ऽस्ति यः सोऽपरः (इत्यपि); म३. न यस्याः परं; म४.५. ऽपि यः सोऽपरः। —३) तु. °व्यासक्तमध्यो; ना१.२. रा. ते. ग्र४. म५. °व्याविद्धमुग्धो; ग्र१. म३. °व्याविद्धबोधो; ग्र२. °व्यासङ्गमूर्तो; ग्र३.५. °व्यासङ्गमुक्तो। ग्र२(मू). जिनः ( जनः )। —४) ना२. कान्ताकामविडम्बितो न। ना१. °विडम्बितोऽपि; ना२. °विडम्बितो न; म४.५. °विडम्बनान्न। तु. म४.५. त्यक्तुं न भोक्तुं; सु. मोक्तुं न भोक्तुं। म४. क्षमाः ॥

भ. १४३६ (३८४२); सुभाष. १४२ ॥

अजानन्दाहात्म्यं पततु शलभस्तीव्रदहने
स मीनोऽप्यज्ञानाद्बडिशयुतमश्नातु पिशितम्।

विजानन्तोऽप्येते वयमिह विपज्जालजटिला-
न्न मुञ्चामः कामानह ह गहनो मोहमहिमा ॥ १८ ॥

अजानन्निति ॥ शलभः पतंगः दाहात्म्यं दाहस्वभावत्वं अजानन्नबुध्यमानः सन् । दाह आत्मा स्वभावो यस्य स दाहात्मा तस्य भावो दाहात्म्यम् । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च इति' विश्वामरौ । तत्र तस्मिन्प्रसिद्धे दहने वह्नौ पततु । स प्रसिद्धो मीनो मत्स्योऽपि अज्ञानादप्रतिपत्तेर्हेतोः बडिशयुतं मत्स्यवेधनमिश्रं पिशितं मांसं अश्नातु ग्रसतु । शलभमत्स्यावज्ञानत्वान्न वाच्यौ । एते वयं विजानन्तो बुध्यमाना अपि इह संसारे विपज्जालैरापत्समूहैर्जटिलान्संकुलान्कामान्न मुञ्चामो न त्यजामः । काम्यन्त इति कामा विषयाः । मोहस्य संसारमायाया महिमा महत्त्वं गहनो दुर्बोधः । 'अह हेत्यद्भुते खेदे' इत्यमरः ॥ [ शिखरिणी ]

१) तु. सु. ना१.२.म१.२. माहात्म्यं (दाहात्म्यं) । तु. सु. ना१ (शोधनात्प्राक्).२. म१.२. ४.५. पतति । ग्र२.३. तत्र (तीव्र-) ।—२) ग्र२.३. न (स) । ना२. विडिश°; ग्र१. म. बळिश° । ग्र१. म१.२. °गत°; म४.५. °धृत° (°युत°) । तु. सु. म१.२.४.५. अश्नाति । —३) तु. सु. °जटिला; ते२. °जटिलो ॥

भ. १०० (३६) । शा. ४१५६ (भर्तृ°) । शान्तिशतके १.८ । सूमु. १३१.७३ (गोभट्टस्य) । सुभा. पृ० ३७४.२१४ (भर्तृ°) । सुर. पृ० २९५.१२ (भर्तृ°) ॥

तृषा शुष्यत्यास्ये पिबति सलिलं शीतमधुरं
क्षुधार्तः सञ्शालिं कवलयति मांसादिकलितम् ।
प्रदीप्ते कामाग्नौ सुदृढतरमालिङ्गति वधूं
प्रतीकारं व्याधेः सुखमिति विपर्यस्यति जनः ॥ १९ ॥

तृषेति ॥ आस्ये वदने तृषा पिपासया शुष्यति शोषं व्रजति सति शीतं शिशिरं सुरभि सुगन्धि सलिलं जलं पिबति धयति । क्षुधा बुभुक्षयार्तः पीडितः सन् मांसादिकलितं पिशितव्यञ्जनादिसहितं शालिं शाल्यन्नं कवलयति ग्रासं करोति । 'तत्करोति तदाचष्ट' इति णिच् । कामो मदनः स एवाग्निः । तस्मिन्प्रदीप्ते ज्वलति सति वधूं तरुणीं सुदृढतरं अत्यन्तं दृढं यथा भवति तथा आश्लिष्यत्युपगूहति । जनो लोको व्याधेरामयस्य पिपासाबुभुक्षारागरूपस्य प्रतीकारे चिकित्सायां सुखं शर्मेति विपर्यस्यति वैपरीत्येन बुध्यते । विषयसंयोगजं सुखं पारमार्थिकं न भवति । अपि तु व्याधिचिकित्सा । पारमार्थिकं तु ब्रह्मानन्द एवेत्यर्थः ॥ [ शिखरिणी ]

१) तु. पिपासुश्चेत्कश्चित्पिबति । ग्र५. मृषा (तृषा) । ते१. तृष्यत्यास्ये । म४.५. शीतसुरभि । —२) सु. ते. सञ्छालिं; ना१.५. रा. ग्र४.५. म१.२. शाल्यन्नं; ना२. ग्र१.२. सन् शालीं; ना३. सन् शाकं (सञ्शालीन्) । तु२. सूपादि°; ना१. माषादि°; ना२. मांसाज्य°; ग्र१. म१.२.४.५. शाकादि° (मांसादि°) । तु. °कलितान्; ना२. °कलिताम्; म५. -अनुगतान् ।—३) तु१. ना२.

आश्लिष्यति ( आलिङ्गति ) । तु१. वधुं ।—४) तु. प्रतीकारो; प्र२.३. प्रतीकारे । तु. सु. ना१.३.५. प्र२.३. सुखमिव । प्र१. म१–३.५. विपर्येति कुजनः ॥

भ. २५९६ (१०५०) । शा. ४१४८ । सु. ३३८७ । सूमु. १३१.७२ ( भट्टजयन्तस्य ) । सुभा. पृ० ३७१.१३१ ॥

तुङ्गं वेश्म सुताः सतामभिमताः संख्यातिगाः संपदः
कल्याणी दयिता वयश्च नवमित्यज्ञानमूढो जनः ।
मत्वा विश्वमनश्वरं निविशते संसारकारागृहे
संदृश्य क्षणभङ्गुरं तदखिलं धन्यस्तु संन्यस्यति ॥ २० ॥

तुङ्गमिति ॥ अज्ञानमूढोऽविद्यामूर्खः जनो लोकः । तुङ्गमुन्नतं वेश्म सदनम् । सौध इत्यर्थः । सुताः पुत्राः सतां सत्पुरुषाणां अभिमताः संमताः । संपदो विभवाः संख्यातिगाः अनन्ताः । दयिता प्रिया कल्याणी कल्याणगुणवती । सुन्दरीति यावत् । वयः अवस्था नवं नूतनम् । विश्वं जगदनश्वरं स्थिरमिति मत्वा परिज्ञाय संसारः भवः स एव कारागृहं तस्मिन् { निविशते प्रविशति । तदासक्तो भवतीत्यर्थः } ( निवसतेऽधिवसति ) । धन्यस्तु विवेकी तु { तदखिलं वेश्माद्यशेषप्रपञ्चं -रा- } (इदं परिदृश्यमानं सुखं शर्म) क्षणभङ्गुरं क्षणमात्रेण नश्वरं संदृश्य संपश्यन् संन्यस्यति सम्यक्त्यजति ॥ [ शार्दूलविक्रीडितम् ]

१) प्र४. म४. संख्याधिकाः; म३.५. संख्याधिगाः । —२) ना२. वनिता (दयिता) । तु. प्र४. म४.५. वपुश्च (वयश्च) । —३) ना१.२. अनीश्वरं । तु२. सु. प्र२.३. निवसते ( निविशते ) । —४) सु. ना४.५. प्र२.३. सुखमिदं; ना१. तदितरं (तदखिलं) । तु२. धन्यास्तु; ना२. धीरस्तु (धन्यस्तु) । तु. ते२. संन्यस्यते; ना२. स न्यस्यति ॥

भ. २५७८ ( १०३९ ) ॥

## वैराग्यशतके द्वितीयपद्धत्यन्ते अधिकौ ।

चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ।
रुद्धा गुहापि यमिनो धनिनोपपन्ना-
न्कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥ १ ॥

[ प्र४. वैराग्य २० ] [ भ. २३०१ (४०५३); भागवतपुराणे २.२.५ । सुभा. पृ० ७५;१५ ]

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुःश्रोत्रे च जीर्येते तृष्णैका तरुणायते ॥ २ ॥

[ प्र४. वैराग्य. २१ ] [ भ. २४२८ (९७८); महाभारते १३.३६७–३६८; हरिवंशे १६४४; पञ्चतन्त्रे ५.१५ ( ८३ ); कवितामृत. ६५ । सूहा. १७५.२ । ]

याच्ञादूषणम् ।

दीना दीनमुखैः स्वकीयशिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः क्षुधितैर्निरन्नविधुरा दृश्या न चेद्गेहिनी ।
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी पुमान् ॥ २१ ॥

दीनेति ॥ दीना दरिद्रा दीनमुखैः खिन्नवदनैः क्रोशद्भिः रुदद्भिः क्षुधितैराकृष्टमाक्षिप्तं जीर्णं पुराणमम्बरमंशुकं यस्याः सा{ निरन्ना अन्नपानरहिता अत एव विधुरा विह्वला -रा- } ( निरन्नमशनरहितमुदरं यस्याः सा ) तादृशी गेहिनी गृहिणी {न दृश्या दृष्टिगोचरा न चेत् -रा- } (नो दृश्येत नावलोक्यते) अत्र काकुः । मनस्वी दयालुः कः पुमान् पुरुषः स्वस्यात्मनो दग्धस्य दुष्टस्य जठरस्योदरस्यार्थे प्रयोजने [ याच्ञाभङ्गात् ] भयेन त्रासेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं यथा भवति तथा [ हीनस्वरेण कण्ठप्रदेशात्परिभ्रष्टकतिपयवर्णजालं यथा भवति तथेति भावः ] देहीति वितरेति को ब्रूयात् । न कोऽपि वदेदित्यर्थः । पूर्वं न संसारेत्यादिना संपत्तिर्दुःखहेतुत्वात्त्याज्येत्युक्तम् । अत्र तु दारिद्र्यमपि दुःखहेतुः । तस्मात्तदपि त्याज्यं, संसारावस्थायां संपद्भवति अथ वा दारिद्र्यं भवति । तदुभयोरपि दुष्टत्वात्संसार एव त्याज्य इति भावः ॥ [ शार्दूलविक्रीडितम् ]

१) तु१. सु. ना३.४. रा. ते. ग्र२.४. सदैव (स्वकीय–) । तु१. °जीर्णम्बिरा । —२) ना२. ग्र२.३. °क्षुधितैर्निरन्नजठरा; ग्र५. क्षुभितैर्निरन्नजठरो; म३. क्षुधितैर्निरन्नजठरैर् । तु. ना२. म३. दृश्येत; ग्र१. म१.२. दृष्टा न । —३) ना२. यत्नाभङ्ग° । ना२. गद्गदगलं; ते२. गद्गदगलस् । तु१. ना२. तद्वद्विलीनाक्षरं; तु२. तृट्यद्विलीनाक्षरा; सु२. त्रुट्यद्विलीनाक्षरा; ते१. तृप्यद्विलीनाक्षरं; ग्र१. त्रुट्यद्विहीनाक्षरं । —४) ना२. स्वकीय°; म४. सुदग्ध° ते२. °जठर° ॥

भ. २८१३ (११६३); शतकावलौ ९७ । सु. ३१९६ ( भर्तृ° ) । सुभा. पृ० ९७.१२ ( भर्तृ° ) । सुर. पृ० ७७.१ ( भर्तृ° ) । तन्त्राख्यायिकायां २.७६ ॥

अभिमतमहामानग्रन्थिप्रभेदपटीयसी
गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका ।
विपुलविलसल्लज्जावल्लीवितानकुठारिका
जठरपिठरी दुष्पूरेयं करोति विडम्बनाम् ॥ २२ ॥

अभिमतेति ॥ अभिमतस्य सज्जनसंमतस्य महतोऽधिकस्य मानस्य चित्तसमुन्नतेरेव ग्रन्थेः पर्वणः प्रभेदे विघट्टने पटीयसी चतुरतरा । गुरुतराणामधिकानां गुणानां श्रुतशीलवृत्तादीनां ग्रामाः समूहा एव अम्भोजानि सरसिजानि तेषां स्फुटा प्रव्यक्ता उज्ज्वला विमला चन्द्रिका कौमुदी । विपुला विस्तृता विलसन्ती शोभ-

माना लज्जा व्रीडैव वल्ली लता। तस्या [ वितानं रीतिस्तस्य ] ( विदारे छेदने ) कुठारिका परशुः एवंविधा जठरपिठरी जठरमुदरमेव पिठरी स्थाली दुष्पूरा पूरयितुमशक्या सती विडम्बनां हास्यं करोति। मानादेर्ग्रन्थ्यादित्वेन समस्तरूपकं, जठरपिठर्याश्चन्द्रिकात्वेन च व्यस्तरूपकत्वं उपमेयतिरोहितभेदरूपमिष्यते। यथा बाहुलता पाणिपद्मं चरणपल्लवमिति समस्तरूपकम्। "अङ्गुल्यः पल्लवान्यासन्कुसुमानि नखार्चिषः। बाहू लते वसन्तश्रीस्त्वन्नः प्रत्यक्षचारिणः" इति व्यस्तरूपकम्। उपमारूपकयोरिवशब्दस्तदभावश्च भेदः। उदरपूरणार्थं प्रवर्तमाना गुणलज्जां विहाय हास्यास्पदं भवतीत्यर्थः॥ [ हरिणी ]

१) अ२ (मू). °महानामग्रन्थि°। तु. °ग्रन्थिः; म४. °ग्रन्थी ( °ग्रन्थि° )। ते२. °दघटीयसी। —२) ते२. °ग्रामान्भोज°। अ१. म१.२. °ग्रामाम्भोजे सदोज्वल°।—३) तु. विमल° (विपुल°)। ना४. अ२–४. °विदार°; म४.५. °कठोर° (°वितान°)। अ४. °कुमारिका ( °कुठारिका इत्यपि )। —४) ते२. जठरि°। ना२. दुःपूरेयं। तु२. ना३–५. रा. म३. विडम्बनं; अ१. विडम्बनाः॥

भ. ४९४ (१८८)। सुभा. पृ० ९७.९। सुर. पृ० ७८.२ ( भर्तृ° )॥

पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं कपाली-
मादाय न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठे।
द्वारं द्वारं प्रविष्टो वरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणी सनाथो न पुनरनुदिनं तुल्यकुल्येषु दीनः॥२३॥

पुण्य इति॥ पुण्ये पवित्रे ग्रामे संवसथे वाश्रमस्य। पुण्यत्वं स्वाध्यायघोषशास्त्रव्याख्यानशब्दादिना विहितकर्मानुष्ठानपरविप्रसंपत्त्या प्रसिद्धदेवस्थानादिना च पुण्ये पावने वने अरण्ये वा। वनस्य पुण्यत्वं प्रसिद्धम्। नदीदेवस्थानहरिणसंचारव्याघ्रादिदुष्टमृगरहितकन्दमूलप्राचुर्यादिना। तथा च योगीश्वरः। 'यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत'॥ महति विपुले ग्रामवनयोरपि विशेषणम्। सितेन धवलेन पटेन वाससा छन्ना पाली अवकुण्ठिता अश्रिर्यस्यास्तां कपालीं कर्परमादाय गृहीत्वा क्षुधा बुभुक्षया आर्तः पीडितः सन् उदरदरीपूरणाय कुक्षिगुहाभरणाय न तु देहप्राबल्याय। न्यायो धर्मो गर्भेऽन्तःकरणे येषां तैर्द्विजैर्हुतानां हुतभुजामग्नीनां धूमैर्धूम्रः कृष्णलोहित उपकण्ठः समीपप्रदेशो यस्य तद्द्वारं प्रतिद्वारं प्रविष्टः मानी उन्नतचित्तः प्राणी शरीरी सनाथः प्रियः अनुदिनं प्रतिवासरं तुल्यकुल्येषु समानकुलप्रसूतेषु। दीनः पुनः दैन्यवांस्तु नरः। यस्मादयं सनाथः परतन्त्रः न तु स्वतन्त्रः। यत्र बान्धवा न सन्ति तत्र भैक्षचर्यापि मानभङ्गाय न भवति। बन्धुषु दैन्यं मानमुन्मूलयतीत्यर्थः॥ [ स्रग्धरा ]

१) तु२. ना१. पुण्यग्रामे; म४. पूर्णे ग्रामे। ना१. पुरे (वने)। तु. ते२. श्रितपट°। तु. म५. °च्छन्नपाली–; सु. ना१. ३–५. रा. ते. अ२.५. °च्छन्नपालिं; अ४. °च्छन्नमौलिं। ना३–५. रा. कपालिम्। —२) ना३–५. रा. ह्यादाय। सु. न्यायगत्या; ना२. न्यायगर्भा; अ१. म१–३. [आ]न्नायगर्भ–। तु. हुतभुग्धाम°। सु. ना१–४. अ२.३. म२.४.५. °धूम्रोपकण्ठम्। —३) तु२ (मू). प्रतिष्टो; ना२. प्रवृत्तो। अ१. म३.४. परम् (वरम्)।

—४) सु. ना३-५. रा. ते. प्र५. प्राणैः (प्राणी)। ना२. स धन्यो (सनाथो)। प्र४. म५. वरमनुदिनं। ना१. तूलतुल्येषु दीनः ॥

भ. ४१०२ (१७८५); शतकावलौ ९७। शा. २५४ (भर्तृ°)। क्षेमेन्द्रस्यौचित्यविचारचर्चायां (का० १. पृ० १४९; दीपकस्य)। सुभा. पृ० ८१.४७ (भर्तृ°)। सुर. पृ० ४७.२ (शार्ङ्ग°)। सूक्ता. १०२.२० ॥

गङ्गातरङ्गकणशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि ।
स्थानानि किं हिमवतः प्रलयं गतानि
यत्सावमानपरपिण्डरता मनुष्याः ॥ २४ ॥

गङ्गेति ॥ गङ्गाया जाह्नव्यास्तरङ्गाणामूर्मीणां कणशीकरैरल्पैरवयवैः शीतलानि शिशिराणि विद्याधरैर्देवयोनिभिरध्युषितानि अधिष्ठितानि चारूणि मनोहराणि शिलातलानि दृषत्स्वरूपाणि येषु स्थानेषु शीतानि हिमवतो हिमाद्रेः स्थानानि प्रदेशाः प्रलयं नाशं गतानि किं प्राप्तानि किम्। यद्येन कारणेन मनुष्या मानुषाः सावमाने अवज्ञासहिते परपिण्डे परान्ने रता लोलुपाः। हिमाचलमाश्रित्य गङ्गाकूले कलेवरं परित्यजेत्। सावमानं परान्नं तु न भुज्येतेत्यर्थः ॥ [ वसन्ततिलका ]

१) तु१. °गण°; सु. °भव°; ना१. °घन°; प्र१. म१.२. °हिम° (°कण°)। —२) प्र१. °धराद्युषित°। —४) म४. परपिण्डतरा ॥

भ. २०५३ (८०७)। सुभा. पृ० ९७.८। सुर. पृ० ७८.३ (सभातरङ्गे) ॥

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः ।
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोपात्ताल्पवित्तस्मयपवनवशान्नर्तितभ्रूलतानि ॥ २५ ॥

किमिति ॥ कन्दाः शालूकमुस्तादयः कन्दरेभ्यो दरीभ्यः सकाशात् प्रलयं नाशमुपगताः प्राप्ताः किम्। किमित्याक्षेपे। गिरिभ्यः शैलेभ्यः सकाशान्निर्झरा जलप्रवाहा वा प्रलयमुपगताः किम्। तरुभ्यो वृक्षेभ्यः सकाशात्सरसफलभृतो मधुरसहितफलधारिण्यो वल्कलिन्यो मृदुवल्कलवत्यः शाखा लता वा प्रध्वस्ताः प्रभ्रष्टाः किम्। प्रसभं बलात् [ उपगतो ] ( उपरतो ) विरतः प्रश्रयो येषां तेषां खलानां दुर्जनानां दुःखेन क्लेशेनोपात्तेनावर्जितेनाल्पेन स्तोकेन वित्तेन धनेन हेतुना यः स्मयो गर्वः { स एव पवनस्तद्वशात् } तद्वशेन तत्परतन्त्रेण पवनेन वायुना आनर्तिता ईषन्नृत्यं कारिता भ्रुव एव लता येषां तानि मुखानि यद्येन कारणेन वीक्ष्यन्ते दृश्यन्ते। वनस्थो भूत्वा कन्दफलाशी स निर्झरजलपायी भवन्पल्लवमात्रैः परितुष्यन्देहयात्रां कुर्वीत। न तु धनलिप्सया दुर्जनवदनानि पश्येदित्यर्थः ॥ [स्रग्धरा]

१) म४.५. काननेभ्यः ( कन्दरेभ्यः ) । तु. दरिभ्यः ( गिरिभ्यः ) ।—२) मा२. गिरिभ्यः ( तरुभ्यः ) । ते१. वल्कलिन्यः शशाङ्काः ।—३) अ५. म४. वीक्षन्ते । तु१. अ४. म४.५. प्रसभमुपगत°; तु२. प्रसभमुखगत°; सु. ना३–५. अ२.३. प्रसभमुपरत°; ना२. प्रसभसमगत°; म२. प्रसभमवगत° । —४) ना३. ४. दुःखात्तखल्पवित्त°; रा. ते. दुःखाप्तखल्पवित्त° । सु. अ३. °वशपवनानर्तित°; ना१.२. अ१.४. म१.२.५. °पवनवशान्नर्तित°; अ२. °परपवनानर्तित°; म४. °परवशतानर्तित° । ना२. °भ्रूतलानि ॥

म. १७२५ (६६५) । सुभा. पृ० ९७.१४ । सुर. पृ० ७८.४ ( भर्तृ° ) ॥

पुण्यैर्मूलफलैः प्रियप्रणयिनीं वृत्तिं कुरुष्वाधुना
भूशय्यां नवपल्लवैरकृपणैरुत्तिष्ठ यामो वनम् ।
क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा
वित्तव्याधिविकारविह्वलगिरां नामापि न श्रूयते ॥ २६ ॥

पुण्यैरिति ॥ पुण्यैर्दोषरहितैर्मूलैर्बिसादिभिः फलैस्तिन्दुकजम्बम्लादिभिरधुना प्रियप्रणयिनीं प्रीत्यासक्तां वृत्तिं जीवनं कुरुष्व विधेहि अकृपणैर्दोषरहितैर्नववल्कलैर्नूतनत्वग्भिर्भूर्जादिभिर्भूशय्यां भूमिशयनं कुरुष्व उत्तिष्ठोद्गच्छ । वनं काननं यामः गच्छामः । यत्र वने क्षुद्राणां अल्पानामविवेकेन विवेकाभावेन मूढमनसां मूर्खहृदयानां सदा सर्वदा वित्तव्याधिना धनरूपेण रोगेण विकारेण भ्रम्याभ्रान्त्यज्ञानेन विह्वलगिरो विक्लववाचः येषां तेषां ईश्वराणां प्रभूणां नामाभिधानमपि न श्रूयते नाकर्ण्यते । राजानो बहुदोषदुष्टाः । तस्मात्प्राज्ञो दूरतः परित्यज्य पुण्यं वनमाश्रित्य मूलफलादिभिः संतुष्यन्सुखी भवेत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) अ१. म१.२. पुष्पैर्; म४.५. पुण्य ( पुण्यैर् ) । तु. सु२. अ३ ( मू ). प्रियैः मा३.४. तथा; ते१.२. तदा; अ१. म१–३. प्रियैः ( प्रिय ) । —२) तु. अ१. म४.५. भूशय्या । सु३. वनपल्लवैर्; ना५. अ२.३. नववल्कलैर्; म१–३. तृणपल्लवैर् । सु. यामो वयम्; ना५. रा. ते१. यावो वनम् । —३) ना३.४. °गूढमनसां । ना४.५. वित्तेश्वराणां । —४) ना१. °विह्वलधियां ॥

म. ४१०३ (४५४४); शतकावली ९८ । सुभा. पृ० ३७०.८५ । सुर. पृ० ७८.५ ( स्फुटश्लोके ) ॥

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते संतापं तदपि धनिनां द्वारि कृपणाः ॥ २७ ॥

फलमिति ॥ अखेदं दुःखरहितं यथा तथा स्वेच्छया लभ्यं प्राप्यं प्रतिवनं वने वने प्रति क्षितिरुहां वृक्षाणां फलं च स्थाने स्थाने पदे पदे पुण्यसरितां पुण्यनदीनां

शिशिरमधुरं शीतलस्वादु पयः उदकं च सुललितानां मनोहराणां लतानां पल्लवमयी किसलयप्रचुरा अत एव मृदुस्पर्शा मृद्वी शय्या शयनं च । अस्तीति शेषः । तदपि तथापि कृपणाः दुर्गताः धनिनां धनवतां द्वारि द्वारे संतापं दुःखं सहन्ते इच्छन्ति ॥ [ शिखरिणी ]

१) म५. चेच्छालभ्यं । —२) ग्र४. म४.५. स्थाने लभ्यं (स्थाने स्थाने)। म४. भाति शिशिरः; म५. भवति शिशिरः ( शिशिरमधुरं ) । —३) ना२. सुललिततरा; ग्र४. म५. सुललिततला । ना१. –चम्पकमयी । —४) ना१. संलापं ( संतापं ) । तु१. द्वारि कृपणः ॥

म. ४३६८ (१९३०) । सूमु. १२८.३ ( कृष्णमिश्रस्य ) । प्रबोधचन्द्रोदये ४.१९ । सुर. पृ० ६२.९ ( भर्तृ° ) । सुभा. पृ० ७२.५४ ॥

ये वर्धन्ते धनपतिपुरः प्रार्थनादुःखभाजो
ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ।
तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ २८ ॥

य इति ॥ धनपतेः कुबेरस्य [ पुरः पुरतः प्रार्थनादुःखभाजः याच्ञादुःखभाजः ] ( पुरं नगरं तस्य प्रार्थना स्पृहैव दुःखं तद्भजते यस्तस्य मम ) ये वासरा दिवसा वर्धन्ते द्राघिष्ठा भवन्ति । ये धनेषु स्पृहयालुतया दुःखशीलास्तेषां एको वासरो युगायते । विषयाणां शब्दादीनां आक्षेपेण परित्यागेन पर्यस्तबुद्धेः निवृत्ताभिलाषस्य मम ये वासरा अल्पत्वं ह्रसिष्ठतां दधति बिभ्रति । विषयाभिलाषरहितस्य वासराः क्षणायन्ते । शिखरिणः शैलस्य यत्कुहरं गुहा तस्य ग्राव्णि शिलायामेव शय्यायां शयने निषण्ण उपविष्टोऽहं ध्यानस्य परमात्मस्मरणस्य छेदेऽवसाने तेषां द्राघिष्ठानां ह्रसिष्ठानां च वासराणामन्तः शरीराभ्यन्तर एव स्फुरितमुदितं हसितं हासो यथा भवति तथा स्मरेयं चिन्तयेयं किम् । अत्र काकुः । वासराणामित्यत्र 'अधीगर्थदयेशां कर्मणी'ति षष्ठी ॥ [ मन्दाक्रान्ता ]

१) ना३.५. रा. ते. म१.३–५. वर्तन्ते । ग्र२.३. °पुरप्रार्थना° । —२) तु. यश्चाल्पत्वं; ना१. ये वाल्पत्वं; म४.५. ये चाक्षेपं । ते२. ददति (दधति) । तु१. विषयाक्षेम°; म३. विषयः केन । तु२. °पर्यास्त°; ना१.३–५. रा. ते. ग्र४. म३. °पर्याप्त° ( ग्र४. मूलवदपि ) । तु१. °बोद्धेः । —३) म.४. स्फुरति चरितं । ग्र१. °सहितं; म१.२. हसितो; म३.५. हरितं ( °हसितं ) । ना३.५. रा. ते. ग्र५. वासराणि; म३.भूसूराणि; म४.५. भूसुराणां । तु१. स्मरोयं; ग्र१. स्मरेयुः । —४) म१.२. शिखरिकुहरे । ना१. ग्र१.३( मू ). ४.५. °निषण्णाः ॥

म. ५५६० (१५१९) । सुभा. पृ० ९७.१० । सुर. पृ० ७८.६ (कल्पतरौ) ॥

ये संतोषनिरन्तरप्रमुदितास्तेषां न भिन्ना मुदो
ये त्वन्ये धनलुब्धसंकुलधियस्तेषां न तृष्णा हता ।

इत्थं कस्य कृते कृतः स विधिना तादृक्पदं संपदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ २९ ॥

ये संतोषेति ॥ ये नराः संतोषेण तृष्णात्यागेन यत्सुखं चित्तप्रसादः तद्रूपेण प्रमोदेन हर्षेण मुदिताः प्रीताः तेषां मुदः सुखानि न भिन्ना अविच्छिन्नाः । अन्येऽपरे ये तु धनलुब्धा वित्ततृष्णाः अत एव संकुला व्याकीर्णा धीर्बुद्धिर्येषां तेषां तृष्णा न [ हृता ] ( ह्रता ) नापनीता । इत्थं एवं सति संपदां संपत्तीनां तादृक् तथाविधं प्रसिद्धं पदं स्थानम् । स्वात्मनि स्वरूप एव समाप्तो वसन् हेम्नः सुवर्णस्य महिमा महत्वं यस्य स तादृशो मेरुः । मेरुतुल्यं मेरोरधिकं वा सुवर्णं क्वापि नास्तीत्यर्थः । तत्तादृशो मेरुः हेमाद्रिः कस्य पुरुषस्य कृते प्रयोजनाय विधिना विधात्रा कृतो निर्मितः । न कस्यापीत्यर्थः । यस्तृष्णात्यागी तस्य कृते तावन्न भवति । तस्य तृष्णाया एवाभावात् । यस्तृष्णावांस्तस्यापि कृते न भवति । तस्य मेरुलाभेऽपि तृष्णाया अविच्छेदात् । तस्मात्स मेरुर्हेमाद्रिर्मे मह्यं न रोचते । व्यर्थत्वादित्यर्थः । 'रुच्यर्थानां प्रीयमाण' इति संप्रदानसंज्ञायां चतुर्थी । 'तेमयावेकवचनस्ये'ति ममशब्दस्य मयादेशः ॥ [ शार्दूलविक्रीडितम् ]

१) तु. प्र२.३. °सुखप्रमोद° ( °निरन्तरप्र° ) । —२) ना२. °कातर° ( °संकुल° ) । ते२. प्र२.३. म५. हृता ( ह्रता ) । —३) ना१. कृतस्तु विधिना; प्र२ (मू). कृतं सुविधिना । ते२. तादृक्पदां । —४) ना२. स्वात्मन्येवमवाप्त°; प्र४. स्वात्मन्येव समस्त° ॥

भ. ५५७९ (२५२६); शतकावली ८०; सुभाष. ३०५ । शा. १०६५ ( भर्तृ°; विद्यापतेः इत्यपि ) । सु. १०२७ ( लल्लुसूनुविद्याधरस्य ) । सुभा. पृ० २१५.५ (लल्लुपुत्रविद्याधरस्य) । सुर. पृ० १९६.२ ( शार्ङ्ग° ) । सूमु. ३६.१४ ( विद्यापतेः ) ॥

भिक्षाहारमदैन्यमप्रतिसुखं भीतिच्छिदं सर्वदा
दुर्मात्सर्यमदाभिमानमथनं दुःखौघविध्वंसनम् ।
सर्वत्रान्वहमप्रयत्नसुलभं साधुप्रियं पावनं
शंभोः सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥ ३० ॥

भिक्षाहारमिति ॥ योगीश्वरा मुनयः अदैन्यं दैन्यरहितं अप्रतिसुखं समानसुखरहितं भीतिच्छिदं भयनाशनं सर्वदा संततं दुष्टानां मात्सर्यमदाभिमानानां अन्योदयद्वेषगर्वाहंकाराणां मथनं ध्वंसनं { दुःखौघविध्वंसनं सांसारिकाशेषबाधानिवर्तकं -रा- } सर्वत्र सकलप्रदेशे अन्वहं प्रतिदिनं अप्रयत्नसुलभं अतिप्रयत्नेन विना सुखेन लब्धुं शक्यं साधुप्रियं सज्जनसंमतं पावनं पवित्रं अवार्यं केनापि वारयितुमशक्यं अक्षयनिधिं नाशरहितनिक्षेपरूपं शंभोः परमेश्वरस्य सत्रं यागरूपं भिक्षाहारं भिक्षान्नभक्षणं शंसन्ति स्तुवन्ति । याच्ञादुःखमसहमानानां पुंसां भिक्षाहारमेव श्रेष्ठमिति प्रशंसन्तीत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) तु. अप्रतिहतं। तु१. भीतिच्छदं; ग्र१. म१-३. तापच्छिदं । ना५. रा. ते. म४.५. सर्वतो ( सर्वदा )। —२) तु२. दुर्माच्छर्य° । ते२. °मवाभिमान° । ना३.४. °दमनं; ग्र१. म१.२. °शमनं (°मथनं)। ग्र१. म१.२. दुःखेषु विध्वंसकम्; म५. दुःखौघविध्वंसकम्। —३) तु१. सर्वत्रावदम°; तु२. सर्वत्रावह्म°; ना२. सर्वत्र क्रमता° । तु. भावनं ( पावनं ) ॥

भ. ४५८६ (२०४६); शतकावली ९८। सुभा. पृ० ३७०.१०१। सुर. पृ० ७८.७ ( भर्तृ° ) ॥

## भोगास्थैर्यम् ॥

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
मानै दैन्यभयं बले रिपुभयं रूपे जराया भयम्।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम्॥३१॥

भोग इति ॥ भोगे स्रक्चन्दनादिके सत्यपि रोगभयं क्षयकार्श्यादिरोगो जायत इति भयम्। कुले सदन्ववाये सति येन केनापि हेतुना च्युतिभयं सद्वृत्तादिपातित्यभयम्। वित्ते धने सत्यपि नृपालाद्राज्ञो भयम्। मानेऽहंकारे सत्यपि दैन्यभयं एतादृशस्य मम कदा दैन्येन भाव्यत इति भयम्। बले सत्त्वे सति रिपुभयं सत्त्वशालिनं रिपवो बाधन्ते इति भयम्। रूपे सौन्दर्ये जराया वृद्धत्वाद्भयं रूपानन्तरं अवश्यं वृद्धत्वेन भवितव्यमित्यर्थः। शास्त्रे शब्दादिशास्त्रे विद्यमाने वादिभ्यः प्रतिवादिभ्यो भयं भीतिः। गुणे सद्गुणे सति खलेभ्यो भयं दुर्जनाः सज्जनं दूषयन्तीति भीतिः। काये शरीरे सत्यपि कृतान्तादन्तकात् भयं भीतिः। शरीरिणां अवश्यमरणेन भाव्यत इति एवं भुवि लोके नृणां मनुष्याणां सर्वं समस्तं वस्तु विद्यमानं भयान्वितं तत्तत्प्रतिकूलभयान्वितमेव। किं तु वैराग्यं विरक्तिरेव अभयं भयरहितम्। सर्वेषां वैराग्यमेव परमोत्कृष्टमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) तु. सुखेऽसुखभयं; ग्र२. ( मू ). कुले च्युतभयं । ग्र५. वित्तेऽपलापाद्भयं। —३) ते२. गुणे कलभयं। सु. ना३. काले ( काये )। —४) ना२. खलु ( भुवि ) ॥

भ. ४६३७ (२०७५); सुभाष्. ८८; काव्यक° ३। अष्टरत्ने ५ ( हे. पृ० ८ )। सुर. पृ० ९२.१ ( भर्तृ° )। सुभा. पृ० ३७०.९० ॥ एतादृशोऽन्यः श्लोकः क्षेमेन्द्रस्यौचित्यविचारचर्चायां (का० १. पृ० १३०); चतुर्वर्गसंग्रहे (का० ५. पृ० ९८); सुभाषितार्णवे ३८.३५. । तथान्यत्र च द्रष्टव्यः ॥

आक्रान्तं मरणेन जन्म जरसा चात्युज्ज्वलं यौवनं
संतोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः।
लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै-
रस्थैर्येण विभूतयोऽप्युपहता ग्रस्तं न किं केन वा॥३२॥

आक्रान्तमिति ॥ मरणेन मृत्युना जन्म जननं [ आक्रान्तं ग्रस्तम् ] ( आघ्रातं आत्तगन्धं ग्रस्तमित्यर्थः ) । जर[सा](या) वार्धकेन अत्युज्ज्वलं अतिरमणीयं यौवनं तारुण्यमप्याघ्रातं । संतोषस्तुष्टिः धनस्य वित्तस्य लिप्सया लब्धुमिच्छया 'सनि मीमाघुरभलभशकपतपदामच इस्' । 'अत्रलोपोऽभ्यासस्य' । आघ्रातं शमसुखं शान्तिशर्म प्रौढानां विदग्धानां अङ्गनानां सुन्दरीणां विभ्रमैर्विलासैः आघ्रातं । मत्सरिभिरन्यगुणद्वेषिभिः लोकैर्जनैः गुणाः श्रुतशीलवृत्तादयस्तु आघ्राताः । पवनो वायुः व्यालैर्भुजगैराघ्रातः । अयं सर्पस्य दृष्टान्तः । नृपा राजानः दुर्जनैः खलैराघ्राताः । अस्थैर्येण चपलतया [ विभूतयोपि ] ( विभूतिः संपदपि ) । अपहृता किं वा वस्तु केन वा न ग्रस्तम् । एतेषां मध्ये जन्मयौवनादीनां नश्वरत्वादेतान्सर्वान्हित्वा मुक्तौ यतनीयमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) तु१. अक्रान्तं; ग्र२.३. आघ्रातं । तु. ना१. ग्र१.४. म. जरया । तु.सु. ग्र३( मू ). यात्युज्ज्वलं; ग्र१. जात्युत्पलं । म३. जात्युज्ज्वलाद्येन वा । —२) तु२. जनलिप्सया; ना२. जनविप्सया । —३) तु. सु. ना२. लोके ( लोकैर् ) । तु२. मात्सरिभिर् । ना५. ग्र२.३. गुणाश्च पवनो; ग्र१. म१. गुणा धनभुवो । —४) ना१. विभूतयोऽप्यपहृता; ग्र१. विभूतयोऽप्युपहृतो; ग्र२.३. विभूतिरप्यपहृता; म१. विभूतयो व्यपहृता; म२.३. विभूतयोऽप्यपहृता । म४.५. तेन ( केन ) ॥

म. ८५५ (३११) । सुभा. पृ० ३७३.१८३ । सुर. पृ० ९२.२. ( भर्तृ° ) । सूहा. १८९. ५६ ( प्रतापरुद्रीये ) ॥

आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः ।
जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसा-
त्तत्किं तेन निरङ्कुशेन विधिना यन्निर्मितं सुस्थिरम् ॥३३॥

आधीति ॥ आधयो मनोव्यथाः व्याधयो रोगास्तेषां विविधैर्बहुविधैः शतैः समूहैः आरोग्यं कल्यत्वं उन्मूल्यते उत्पाट्यते । नश्यत इत्यर्थः । यत्र यस्मिञ्जने व्यापदो विविधापदो विवृतद्वारा इवोद्घाटितकवाटा इव पतन्ति गच्छन्ति । विपदां विविधत्वं राजचोराग्निकारणभेदात् । जातं जातमुत्पन्नमुत्पन्नं मृत्युर्मरणं यमो वा अवश्यं निश्चितं आशु शीघ्रं विवशं परवशं आत्मसादात्माधीनं करोति विधत्ते । यो यो जातस्तस्य जन्तोर्मृत्युरस्तीत्यर्थः । [ तत्तसात्तेन ] ( एकेन असहायेन ) निरङ्कुशेन स्वच्छन्दवर्तिना विधिना वेधसा यद्वस्तु स्थितं [ रं ] नाशरहितं निर्मितं सृष्टं अस्ति तत्किं नु । न किंचिदित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) तु. नरस्य ( जनस्य ) । ना१. ग्र२( मू ). उन्मील्यते । —२) ते२. विवितद्वारा; ग्र१. विविधाचारा; म. विविधाचोरा ( विवृतद्वारा ) । तु. इवासंपदः; ना१.२. म३–५. इव ह्यापदः । —३) म२. जाता–( जातं ) । ग्र१. म२.३. जातमजातम् ( जातमवश्यम् ) । तु. अवश्यभूत– ( अवश्यमाशु ) । —४) ना१. किं नामाद्य; ना२. ग्र१.२.४. म२. तत्किं केन; ग्र३( मू ). तत्केनापि; म१.४.५. तत्किं नाम ( तत्किं तेन ) । ना५. ग्र२.३.५. सुस्थितम् ॥

भ. १४५ (३४९); शतकावलौ ९९ । सुभा. पृ० ३७३.१८४ । सुर. पृ० ९३.३ ( भर्तृ° ) ॥

भोगास्तुङ्गतरङ्गभङ्गतरलाः प्राणाः क्षणध्वंसिनः
स्तोकान्येव दिनानि यौवनसुखस्फूर्तिः प्रियासु स्थिता ।
तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा बोधका
लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ ३४ ॥

भोगा इति ॥ भोगाः सुखानि तुङ्गानां तरङ्गाणां कल्लोलानां भङ्गा वीचयस्त इव तरलाः चपलाः । प्राणा असवः क्षणेनाल्पेन कालेन ध्वंसिनो नाशवन्तः । { यौवने या सुखस्फूर्तिर्वैषयिकसुखाभिव्यक्तिः सा स्तोकान्येव दिनानि अल्पेष्वेव दिवसेषु । अत्यन्तसंयोगे द्वितीया । प्रियासु वनितासु स्थिता स्थायिनी-रा- } । ( स्तोकान्यल्पान्येव दिनानि वासराणि प्रीतिः प्रमोदः प्रियेषु वस्तुषु स्थिताः सक्ताः प्रीतिमात्रमेव । न तु प्रियवस्तुप्राप्तिरित्यर्थः ) । [ हे बोधका उपदेष्टारो ] बुधा मतिमन्तः तत्तस्मात्कारणान्निखिलं संसारं असारमफलमेव बुद्ध्वा विदित्वा लोकानुग्रहपेशलेन जनाभ्युपपत्तिदक्षेण मनसा चित्तेन ( बोधये ज्ञापयामि ) यत्नः उद्योगः संसारत्यागे समाधीयताम् । स्वयं नष्टः परानपि नाशयतीति न मन्तव्यमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) तु. ग्र५. °भङ्गचपलाः । ना२. क्षिणध्वंसिनः । —२) तु१. ग्र२–४. यौवनसुखं; तु२. यौवनसुखी । तु१. मिथ्यं; तु२. मित्थं; सु. ना१.२. ग्र२.३.५.–प्रीतिः; ग्र४. –सूक्ति ( –स्फूर्तिः ) । ना१. प्रियेष्वस्थिरा; ना३.४. सुखा सुस्थिता; ग्र१. तथा सुस्थिता; ग्र२.३. स्थिता वस्तुषु; ग्र५. प्रियेषु स्थिता; म२. तया सुस्थिता; म३. प्रियाय स्थिरा; म४. प्रियास्वस्थिरा; म५. प्रियासु स्थिरा ( प्रियासु स्थिता ) । —३) ना२. °मेतद्दखिलं; ग्र१. म१–४. °मेवमखिलं ( °मेव निखिलं ) । तु२. ना३. बुद्ध्वा (बुद्ध्वा) । ग्र४. बुधैर् ; म१.५. बुधान् ; म२. बुधो ( बुधा ) । ना२. ग्र२.३. म१. बोधये; ग्र१.४. म२. बोधको; ग्र५. बोधितो; म३. जन्तवो ( बोधका ) । —४) तु२. लोकानिग्रह°; ना२. कालानुग्रह° । ना२. वरसा ( मनसा ) ॥

भ. १६३४ (२०७३); सुभाष. ३१७ । सुर. पृ० ९३.४ ( भर्तृ° ) । सुभा. पृ० ३७३. १८५ ॥

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम् ।
लोला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥३५॥

भोगा इति ॥ भोगाः सुखानि मेघानां जलदानां वितानस्य विस्तारस्य मध्येऽन्तः विलसन्ती सौदामिनी तडिदिव चञ्चलाश्चलाः । आयुर्जीवितकालो वायुना

मातरिश्वना विघट्टितानां निष्पीडितानामभ्राणामब्दानां पटले [ ल्यां ] संदोहे लीनाम्बुवन्निगूढोदकमिव भङ्गुरं भङ्गस्वभावम्। 'भञ्जभासमिदो घुरच्' । यौवनलालसास्तारुण्याभिलाषातिशयाः। 'कामोऽभिलाषस्तर्षश्च समहाल्लाँलसा द्वयो'-रित्यमरः। लोला अस्थायिन्यः। तनुभृतां देहिनामिति सर्वत्र संबन्धः। इत्येवमाकलय्य विचार्य। कलतिः कामधेनुः। 'ल्यपि लघुपूर्वा'दिति णेरयादेशः। द्रुतं शीघ्रं धैर्यं विषयेष्व(व)लोलुपत्वम् । समाधिर्धारणातिशयोऽष्टमं योगाङ्गम् । तयोः सिद्ध्या निष्पत्त्या सुलभे सुखेन लब्धुं शक्ये योगे। यमनियमासनप्राणायामप्रत्याहारध्यानधारणसमाधयो देशकालावस्थाभिरनियताः। पुरुषस्य शुद्धिहेतवो यमाः। अहिंसाब्रह्मचर्यसत्यास्तेयापरिग्रहादयो देशकालावस्थापेक्षिणः पुण्यहेतवः कालविशेषा नियमाः। संध्योपासनजपहोमादयो योगविरोधिक्लेशपरिहारार्थम्। करणसंबन्धस्त्वासनं पद्मस्वस्तिकादिकोष्ठस्य वायोर्गतिविच्छेदः। प्राणायामो रेचककुंभकपूरकात्मकः शनैः शनैर्जेतव्यो वनगजेन्द्रवत्। विषयेषु धावमानस्य मनसः प्रीतिनिवर्तनं प्रत्याहारः। चित्तस्य देवतासंबन्धो ध्यानम्। तत्रैकाग्रता धारणा। तस्यामेवातिशयो विषयशून्यजपः समाधिः। हे बुधा विद्वांसः। बुद्धिं धियं विदध्वं कुरुध्वम् ॥ [ शार्दूलविक्रीडितम् ]

१) ते१. सौदामनी° । —२) ना२. °श्चायुर् । रा. ते. °ताब्जपटली° । ना१. लीलाम्बुवद् । —३) ग्र१. म१.२. °लालनास्; ग्र२.३. म४.५. °लालसा । ग्र३(मू). स्तनभृताम् । तु. इत्याकुलैर्यतपरं; ना२. आलोक्य सर्वं द्रुतं ( इत्याकलय्य द्रुतं )। —४) तु. °सिद्धसुभगे; ना२. °चित्तसुलभे; ना३–५. ग्र४. म१–३. °सिद्धसुलभे । ना३–५. रा२. विधध्वं ॥

भ. ४६३३ (२०७२); शतकावली ९९ । सुभा. पृ० ३७३.१८६ । सुर. पृ० ९३.५ ( स्फुटश्लोके ) ॥

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-
रर्थाः संकल्पकल्पा घनसमयतटिद्विभ्रमा भोगपूगाः।
कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥ ३६ ॥

आयुरिति ॥ आयुर्जीवितकालः कल्लोलास्तरङ्गा इव लोलमस्थिरम्। यौवनस्य तारुण्यस्य श्रीः सौभाग्यं कतिपयेषु दिवसेषु वासरेषु स्थायिनी स्थिरा । अर्था धनानि संकल्पकल्पाः मनोव्यापारतुल्याः । 'ईषदसमाप्तौ कल्पः'। घनानां मेघानां समयः कालः प्रावृट्। तत्र यास्तटितो विद्युतस्तासां विभ्रमा इव विभ्रमाः स्फुरिता येषां तेषां तथाविधानां भोगानां सुखानां पूगा राशयः। यत्प्रियाभिर्वल्लभाभिः प्रणीतं विरचितं कण्ठयोर्गलयोराश्लेषः परस्परपीडनमेवमुपगूढमालिङ्गनं तदपि च चिरं दीर्घकालावस्थायि न। तस्मादैहिकस्य सुखस्य सर्वस्यापि क्षणिकत्वम्। भवभयं संसारात्साध्वसं तस्यैवाम्भोधेः समुद्रस्य पारं परकूलं तरीतुं विलङ्घयितुं ब्रह्मणि परमात्मनि परशिवे आसक्तचित्ताः तत्परचेतसो भवत। तदीशे तात्पर्यवतां भवभयाम्भोधितरणं सुकरमित्यर्थः ॥ [ स्रग्धरा ]

१) ते२. यौवनश्री। —२) तु. सु. ना२–५. रा२. ग्र४.५. °तडिद् (°तटिद्)। ते१. भोगपूगः; ते२. भोगपूराः। —३) तु. कण्ठश्लेषोपगूढं; म५. कण्ठाश्लेषोपगूहस्। ना२. न रुचिरं (च न चिरं)। —४) ना२. °सक्तचित्तो। तु२. भवतु; ते२. भवति। तु. °महाम्भोधिपारं; ना३. °भयाम्भोधिपूरं; ग्र२(मू). भयाम्बोधिपारं; म१.४.५. °भयाम्भोधितीरं ॥

भ. ९९३ (३७६); शतकावलौ ९९; सुभाष्. ३१४। सुभा. पृ० ३७३.१८८। सुर. पृ० ९३.६ (भर्तृ°) ॥

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भवासे
कान्ताविश्लेषदुःखव्यतिकरविषमो यौवने चोपभोगः।
वामाक्षीणामवज्ञाविहसितवसतिर्वृद्धभावोऽप्यसाधुः
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ॥३७॥

कृच्छ्रेणेति ॥ अमेध्यस्य मूत्रपुरीषस्य मध्ये नियमिततनुभिर्यन्त्रितदेहैर्मनुष्यैर्गर्भे कुक्षावेव वासे गृहे कृच्छ्रेण क्लेशेन स्थीयते उष्यते। यौवने तारुण्ये कान्ताभिस्तरुणीभिर्विश्लेषः संगत्यभाव एव दुःखं तेन व्यतिकरो मेलनं तेन विषमो गहनो विप्रयोगो विरहः। वृद्धभावो वार्धकमपि [वामाक्षीणां] (नारीणां) स्त्रीणामप्यवज्ञाया अवमाननाया विलसितानां चेष्टितानां वसतिः स्थानं तस्मादसाधुररमणीयः। रे मनुष्या मर्त्याः संसारे भवे स्वल्पं स्तोकमपि सुखं शर्म यद्यस्ति किंचित् वदत ब्रूत। संसारस्यादौ मध्ये चान्ते च दुःखबाहुल्यमेव। सुखलेशोऽपि नास्तीत्यर्थः ॥ [स्रग्धरा]

१) तु. सु. ना५. ग्र४.५. नीयते; ना२. नश्यते (स्थीयते)। तु. सु. ग्र४. गर्भवासः। —२) तु. °विषमैर्; ना१. ग्र१. म२. °विषमे। ग्र२.३. विप्रयोगः; म. चोपभोगाः। —३) सु. ना४. ग्र२.३. °विलसित°; ना१. °विनहत°; ग्र४. [अ]पहसति°; म५. [अ]पहसित° (°विहसित°)। ते१. °वनतिर्वृद्ध°; ग्र३(मू).°वसतीर्वृत्त°। —४) तु. सु. ना३.४. म२. संसारेऽस्मिन्; ग्र१. संसारे सन्–; म३. संसारे सा। तु२. वदति; म३. भवत (वदत) ॥

भ. १८५१ (७११)। सुभा. पृ० ८९.६। सुर. पृ० ९३.७ (पृ० ९९.६; भर्तृ°) ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम्।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ३८ ॥

व्याघ्रीति ॥ जरा विस्रसा व्याघ्रीव शार्दूलीव। 'जातेरस्त्रीविषयादयोपधात्' इति व्याघ्रशब्दात्स्त्रियां ङीष्। परितर्जयन्ती भयं जनयन्ती तिष्ठति आस्ते। वर्तमानसामीप्ये लट्। रोगा व्याधयः शत्रव इव वैरिण इव देहं शरीरं प्रहरन्ति घ्नन्ति। आयुर्जीवितकालः भिन्नघटाद्भग्नकुम्भात्सकाशादम्भो जलमिव परिस्रवति

नी० श० १८ (वै० श०)

भ्रश्यते। क्षीयते इत्यर्थः। तथापि लोको जनस्तु अहितमाचरति अनुतिष्ठतीति चित्रमाश्चर्यम्। अहितमिति संसारहेतवो नरकहेतवश्च ॥ [ वसन्ततिलका ]

१) तुर. परितर्जयन्ति। —३) तेर. परिश्रवन्ति। म्र१. मर. °दिवाम्बु (°दिवाम्भो)। —४) म३. लोकस्तथा व्यथितम्। म४. आचरतीव ॥

भ. ६३२३ (२९१७); सुभाष्. ३१७। शा. ४०९३ (भर्तृ°)। सुर. पृ० ९७.४ (भर्तृ°)। सुभा. पृ० ३६७.३२ (भर्तृ°)। गरुडमहापुराणे १११.१० (पाठभेदैः सह) ॥

भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भव-
स्तत्कस्येह कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः।
आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
कामोत्पत्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥ ३९॥

भोगा इति ॥ भोगाः सुखानि भङ्गुरवृत्तयो नश्वरवर्तनाः। अयं वर्तमानो भवः संसारः तैर्नश्वरैर्भोगैरेव हेतुभिर्भवति यद्यस्मात्कारणान्नश्वरा भोगाः संसारहेतवश्च तत्तस्मात्कारणात्कस्य कृते कस्मै प्रयोजनाय। हे लोका नराः इह संसारे परिभ्रमत पर्यटत। चेष्टितैर्व्यापारैः कृतं अलम्। आशा आयततृष्णा एव पाशा बन्धनरज्जवस्तेषां शतस्यापरिमितसंख्यायाः पाशा [ स्तेषा मुपशान्त्या ] तन्नाशेन विशदं निर्मलं चेतश्चित्तं निर्मलं कामोत्पत्तेरभिलाषोदयस्य (अवशे अपरतन्त्रे) स्वधामनि आत्मतेजसि। 'स्वो ज्ञातावात्मनि स्व'मित्यमरः। गृहदेहत्विट्प्रभावा धामनि' [ इति ] च। स्वं च तद्धाम चेति कर्मधारयः। बृहत्वाद्बृंहणत्वाद्वा आत्मैव ब्रह्म। तस्मिन्समाधीयतां एकतानीक्रियताम्। यद्यस्माकं वचो वाक्यं श्रद्धेयं विश्वसनीयम्। भोगानां नश्वरत्वाद्भवहेतुत्वाच्च तदर्थमुद्यमं विहाय मोक्षलक्षणस्थिरपदप्राप्तये आशोपशान्तिविशदं चेतः परशिवे स्थाप्यतामित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१)नार. °स्तेरेव। तु. म्रर.३. भवो; नार. विघस्; ना३–५. भ्रमस्; म४. हतस्; म५. हितस् (भवस्)। —२) नार. म३.४. तत्कस्यैव; ना३–५. तत्तस्यैव; म्र१. मर. चक्रस्येव; म्रर.३. यत्तत्कस्य; म१. तत्कस्येव। तु. सु. ना१. म्रर–४. परिभ्रमत हे; म्र१. परिभ्रमतटे; म१. परिभ्रमथ रे; मर. परिभ्रमतदे; म४. वरभ्रततरो। ते २. म४. लोकः; म्र१. मर.३. लोकैः (लोकाः)। तु. म्र१.३.४. मर.३. चेष्टितम्। —३) म४.५. °शान्तिविवशं; (म५. °विवरं इत्यपि)। —४) तु. ना४.५. म्र४. काम्योत्पत्ति°; म३. गम्योत्पत्ति°। तु. °विश–; सु. म५. °वशं; ना१.२. –अवशे; ना३. रा. ते. °वशात् (°वशे)। म३. स्वधामनु। तु.–यतं (यदि)। म्र४. अस्मद्वशः ॥

भ. ४६३२ (२०७१)। सुर. पृ० ९३.८ (भर्तृ°) ॥

ब्रह्मेन्द्रादिमरुद्गणांस्तृणकणान्यत्र स्थितो मन्यते
यत्स्वादाद्विरसा भवन्ति विभवास्त्रैलोक्यराज्यादयः।

भोगः कोऽपि स एक एव परमो नित्योदितो जृम्भते
भो साधो क्षणभङ्गुरे तदितरे भोगे रतिं मा कृथाः ॥ ४० ॥

ब्रह्मेति ॥ यत्र परमभोगे स्थितो वर्तमानो जनो ब्रह्मेन्द्रादिमरुद्गणान् चतुर्मुखाखण्डलादिदेवसंघान् तृणकणांस्तृणलेशान्मन्यते। यस्य परमभोगस्य स्वादादास्वादात् त्रैलोक्यराज्यादयस्त्रिभुवनाधिपत्यादयो विभवा अभ्युदया विरसा नीरसा भवन्ति। कोऽप्यनिर्वाच्यः परमो दिव्यः नित्यं संततमुदितः प्रकाशमानो भोगः सुखं स पूर्वोक्त एक एव जृम्भते प्रकाशते। भो साधो हे सज्जन क्षणभङ्गुरे अल्पकालनश्वरे तदितरे परमभोगे सुखे रतिमिच्छां मा कृथा मा कार्षीः ॥ [ शार्दूलविक्रीडितम् ]

[ अडयार् २९ ई २. कोशे नास्ति ] १) तु.सु. ग्र५. तृणलवान्; ना१.२. तृणसमान्; ग्र१.४. म३. तृणगणान्। तु१. ना२. मन्यसे। —२) तु. ये साक्षात्; ना१. यत्स्वादौ; ना२. यद्भोगाद्; ग्र४. यत्साक्षात्। तु.-करुणोद्; ग्र४.-करणाद् ( विरसा )। तु१. वितथा; तु२. वितपा; ग्र४. विरसास् ( विभवास् )। —३) तु. ग्र१.४. म३. बोधः ( भोगः )। ना२. एष ( एक )। —४) सु. ग्र१. म१.२. हे ( भो )। सु. व्रार्त्तिं वृथा मा कृथाः। ग्र१. म१.२. मतिं; म५. °शयी ( रतिं )। ना१. मा कृधाः ॥

म. ४४९८ (१९९५) ॥

## कालमहिमा ॥

सा रम्या नगरी महान्स नृपतिः सामन्तचक्रं च त-
त्पार्श्वे तस्य च सा विदग्धपरिषत्ताश्चन्द्रबिम्बाननाः।
उद्वृत्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथाः
सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥ ४१ ॥

सेति ॥ सा तथा प्रसिद्धा रम्या मनोहरा नगरी पुरी, स तथा प्रसिद्धो महानधिको नृपती राजा, तत्तथा प्रसिद्धं सामन्तानां समानानां राज्ञां चक्रं समूहः, तस्य सामन्तचक्रस्य पार्श्वे भागे सा तथा प्रसिद्धा विदग्धपरिषद्विद्वत्सभा, तास्तथा प्रसिद्धाश्चन्द्रबिम्बाननास्तरुण्यः, बन्दिनः स्तुतिपाठकाः, तास्तथा प्रसिद्धाः कथा आख्यायिकाश्च, सर्वं सकलं वस्तु यस्य कालस्य वशादधीनात्स्मृतिपथं स्मरणमार्गमगात् प्राप्तं तस्मै तथाविधाय कालाय समयाय ( यमाय ) नमः नमामि। तदानीं तादृशः कालः इदानीमीदृश इत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) ते २. नृपतेः। म४. °चक्रश् ( चक्रं )। ना२. यत् ( तत् )। —२) ना२. यस्य ( तस्य )। म३. विदग्धपरुषस्; म४. विदग्धपरुषा। —३) तु. उत्सिक्तः ( उद्वृत्तः )। म३. स चरन्तु पुत्रनिवहैः। ते२. ग्र३.४. म. वन्दिनस्। —४) तु. सर्वे; ग्र१. सर्वा ( सर्वं )। ग्र४. वशादभूत्। तु. सु२. ना२. रा. म२.४. स्मृतिपदं ( ग्र४. °पथं इत्यपि ); ग्र१. म१-३. श्रुतिपथं। तु२. तुभ्यं ( तस्मै ) ॥

भ. ७०२५ (३२४६) । शा. ४१६४ ( भर्तृ° ) । सु. ३३२८ ( श्रीकमलायुधस्य ) । सुभा. पृ० ३७४.२०० ( भर्तृ° ) । सुर. पृ० १००.२ ( भर्तृ° ) । सूहा. ३५.५७ ( भर्तृ° ) ॥

यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थं नेयौ रजनिदिवसौ लोलयन्द्वाविवाक्षौ
कालः कल्यो भुवनफलके क्रीडति प्राणिशारैः ॥ ४२ ॥

यत्रेति ॥ यत्र यस्मिन्क्वचिदपि गृहे वेश्मनि अनेको बहुप्राणी जन्तुरेव शारो- ( जन्तुरेधमानो )ऽक्षस्तिष्ठति । अथ अनन्तरं तत्रैको द्वितीयः प्राणिशारस्तिष्ठति । तदनु तदनन्तरं तत्र बहवः प्राणिशारास्तिष्ठन्ति । तत्र चान्तेवसाने एकश्च न तिष्ठति । इत्थमनेन प्रकारेण कालो यमः { कल्यः कलनासमर्थः रा-} ( कल्या स्वपत्न्या सह ) {भुवनफलके भुवनं फलकमिव शारप्रवर्तनोचितकोष्ठयन्त्रमिव तस्मिन् -रा-} ( बहवः कला विद्या यस्य स तादृशः सन् ) द्वावक्षाविव । रजनिदिवसौ निशावासरौ नेयौ गमनीयौ । लोलयंश्चालयन् । प्राणिभिरेव शारैः कृतद्यूतकेलिं नटयति । द्यूतेऽप्येवमेव लेखामये एकस्मिन्गृहे अनेकशारस्तिष्ठति । तत्रानन्तरमेकस्तिष्ठति । यत्रैकस्तिष्ठति तत्र तदनन्तरं बहवस्तिष्ठन्ति । तत्रान्ते एकोऽपि न तिष्ठतीत्येवं द्यूतेन साम्यम् ॥ [ मन्दाक्रान्ता ]

१) तेर. यत्र ( तत्र ) । —२) तु. तत्र नैकोऽपि चास्ते; ना१. तेषु नैकोऽपि चान्ते; ना२. तत्र चास्ते न चैकः; ग्र४. तत्र नैको विभाति ( मूलवच्च ) । —३) तु. चेमौ; ना२. चोभौ; रा. ते१. नेयै । तु. ना१. दोलयन्द्वा°; ग्र१. म२.३. लोलयन्त्रा°; म४. लोलयद्वा° । ग्र१. °विविक्षौ । —४) तु. सु. म२–५. काल्या; ना१. ग्र२(मू). कल्या । ग्र३(मू). भुवनफलकैः; म२–५. सह बहुकलः । ना२. प्राणिसारैः; ते२. प्राणिशान्तैः; ग्र१. म२. प्राणिनाशैः; म३.५. प्राणिसारे ॥

भ. ५०७७ (२२९४) । वाग्भटस्य काव्यानुशासने ( का० ४३, पृ० ६ ) १ । कविकण्ठाभरणे ( का० ४, पृ० १३७ ) ४ ( चन्द्रकस्य ) । सूमु. १३१.५४ ( चन्द्रकस्य ) । सुभा. पृ० ३७४.१९९ । सुर. पृ० १००.३ ( भर्तृ° ) । सूहा. ३५.५० ( भर्तृ° ) ॥

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालोऽपि न ज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ४३ ॥

आदित्यस्येति ॥ आदित्यस्य सवितुर्गतागतैर्गमनागमनैः । भावे निष्ठा । अहरहः प्रतिदिनं जीवितं आयुः संक्षीयते क्षयं गच्छति । बहूनि कार्याणि कर्तव्यान्येव भारास्तैर्गुरुभिः दुरुद्वहैर्व्यापारैर्गृहारामादिनिर्माणैः कालः समयो [ पि ] न (ज्ञि)ज्ञा-

यते न प्रतियते। जन्मोत्पत्तिः जरा वार्धकं विपत्तिरापत् मरणं नाशः। जन्म च जरा च विपत्तिश्च मरणं चेति द्वंद्वैकवद्भावः। 'सर्वो द्वंद्वो विभाषयैकवद्भवती'ति। तद्दृष्ट्वा विलोक्य त्रासो भयं च नोत्पद्यते। 'समानकर्तृकयोः पूर्वकाले' इति त्रासक्रियापेक्षया पूर्वकालत्वाद्दर्शनत्रासक्रिययोः समानकर्तृकत्वाच्च दृशेः क्त्वाप्रत्ययः। उत्पत्तिक्रियायास्तु त्रासकर्तृकत्वेन च त्रासप्रधानक्रियापेक्षया पूर्वकालेन भवितव्यम्। अप्रधानक्रियापेक्षया विप्रयोगात्। यथा स्मरस्मृत्यनाशं निरस्ति मे तथोक्तं पौर्वकाल्यं क्रियाणां यद्वास्तवं तदुपेक्षणीयत्वं पौर्वकाल्ये किं तासां प्राधान्येतरचिन्तयेति। जगल्लोकः मोहमयीमज्ञानविकृतिं। विकारे मयट्। प्रमादोऽनवधानता। तामेव मदिरां सुरां पीत्वा निषेव्य उन्मत्तभूतं उन्मत्तं जातम्॥ [शार्दूलविक्रीडितम्]।

१) तु२. जीवनं (जीवितं)। —२) तु. ना२. °कार्यभाग°; ग्र१.२(मू). म१-३. °भारकार्य°। तु१. सु. ना२. ग्र१. म१-४. कालो न विज्ञायते। —४) ना२. मोहमयी- ॥

भ. ९३१ (३३९); सुभाष्. ७८। शान्तिशतके ४.२४ (हे. पृ० ४२९) सु. ३३२७। सुभा. पृ० ३६९.८०। सूहा. १९६.२५ (भर्तृ°)॥

रात्रिः सैव पुनः स एव दिवसो मत्वा मुधा जन्तवो
धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः।
व्यापारैः पुनरुक्तभूतविषयैरित्थंविधेनामुना
संसारेण कदर्थिता वयमहो मोहान्न लज्जामहे ॥ ४४ ॥

रात्रिरिति ॥ पुनः भूयो रात्रिः रजनी सैव तादृश्येवेत्यर्थः। अतीतायां रात्रौ ये व्यापाराः त एव आगामि[नी]ष्वपि क्रियन्त इति तादृक्त्वम्। पुनः भूयोऽपि स एव तादृगेव दिवसो वासरः। गतेषु दिवसेषु ये व्यापाराः कृताः त एव आगामिनीष्वपि क्रियन्त इति तादृक्त्वम्। अतीतानां नक्तंदिवानामागामिनां च सदा सार्वकालं न कश्चिद्विशेष इति मत्वा ज्ञात्वापि जन्तवः शरीरिणः तथैव पूर्वमिव निभृतं निश्चलं यथा भवति तथा प्रारब्धतत्तत्क्रियाः उपकारं (?) तत्तद्व्यापारं उद्यमिनः उद्योगवन्तो धावन्ति आशु परिभ्रमन्ति। पुनरुक्तभुक्तविषयैः द्विगुणानुभूतैरिन्द्रियार्थैः व्यापारैः कर्मभिः इत्थंविधेन एवंप्रकारेण अमुना संसारेण भवेन कदर्थिताः परिभूताः वयं मोहादज्ञानात्कथं न लज्जामहे। (प्रकाशे लज्जये व्रीडे लज्जते पदे इति?)। तदेवं कृतान्येव क्रियन्ते भुक्तान्येव भुज्यन्ते इति लज्जानिमित्ते विद्यमानेऽपि कथं न लज्जामहे इत्यर्थः ॥ [शार्दूलविक्रीडितम्]

१) तु१. सु. ना२. ते२. ग्र४. मुदा; ना३.४. ग्र२.३.५. सदा (मुधा)। —२) सु. उद्यमितास्तथैव; ना२. उद्यमिनस्त एव। ना१.२. निभृतं; ग्र१. निभृताः; म२. निभृता-। ना४. ग्र२.३. प्रारम्भ° (ग्र३. प्रारब्ध° इति मूलवदपि)। तु. °तन्तुक्रिया; ग्र१. °दत्तक्रियाः। —३) ना२. °भुक्तविरसैर्; ग्र२(मू). °भुक्तविषयैर्; ग्र३. °पक्षविषयैर् °भूतविषयैर्। —४) ना२. म१. मोहान्न जानीमहे; म४. मोहो न लज्जामहे ॥

भ. ५७७८ (२६२६)। सुभा. पृ० ३७५.२२७ ॥

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकवाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ४५ ॥

नेति ॥ ईश्वरस्य परब्रह्मात्मकस्य शंभोः पदं चरणं विधिवत् शास्त्रोक्तक्रमेण श्रवणमनननिदिध्यासनलक्षणेन संसारस्य भवस्य विच्छित्तये विच्छेदाय न ध्यातं न चिन्तितम् । एतेन शंकरस्य पदध्यानात्संसारविच्छित्तिर्भवतीत्युक्तम् । तथा च श्रुतिवाक्यानि । तरति शोकमात्मवित् । तमेव विदित्वातिमृत्युमेति । ब्रह्मविदाप्नोति परम् । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान् । "यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥" तिष्ठति[तु] तावदुत्तमः पक्षो मोक्षः । मूढाः सांसारिकाः मध्यममपि न साधयन्तीत्याह । स्वर्गद्वारस्य नाकप्रतीहारस्य कवाटपाटनेऽररोद्भेदने पटुर्दक्षो धर्मो ज्योतिष्टोमादिरूपोऽपि नोपार्जितो न संपादितः । सोऽपि मदोन्मत्तानां न संभवति । तर्ह्यधमः पक्षोऽस्त्वित्याशङ्क्य सोऽपि नास्तीत्याह । नारीणामबलानां पीनयोः पीवरयोः [ पयोधरयोः ] स्तनयोरूर्वोः सक्थ्योश्च युगलं युग्मं स्वप्ने स्वप्नावस्थायामपि नालिङ्गितं नाश्लिष्टम् । किमुत जाग्रदवस्थायाम् । तर्हि किमर्थमस्मदीयं जन्मेत्याशङ्क्याह । मातुर्जनन्या यौवनं तारुण्यमेव वनमारामः । तस्य छेदे लवने वयं केवलं कुठाराः परशवः । अपत्येषु सुतेषु ( जातेषु ) जननी जीर्णा भवति हि ॥ [ शार्दूलविक्रीडितम् ]

१) तु१. संसारमुच्छित्तये; तु२. संसारनुच्छित्तये । —२) तु. सु. ना२. °कपाट° । —३) तु२. ना२. °युगुलं; म१.३. °युगली; म४. °युगले; म५. °युगलौ । म१.३. नालिङ्गिता; म५. नालिङ्गितौ ॥

भ. ३३१८ (१४०५) । शा. ४१५२ ( भर्तृ° ) । सुर. पृ० ९४.८ ( स्फुटश्लोके ) । सुभा. पृ० ३७४.२१८ ( भर्तृ° ) । चाणक्यनीतिदर्पणे १६.१ ॥

नाभ्यस्ता प्रतिवादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ ४६ ॥

नाभ्यस्तेति ॥ भुवि पृथिव्यां वादिनां प्रत्यर्थिनां बौद्धजैनचार्वाकादीनां पाषण्डमतावलम्बिनां वृन्दस्य समूहस्य दमनी मर्दनी विनीतानां प्रश्रितानामुचिता योग्या विद्या नाभ्यस्ता न शिक्षिता । खड्गाग्रैः निस्त्रिंशशिखरैः साधनैः करिकुम्भपीठानां दन्तिशिरःपिण्डाग्राणां दलनैर्विपाटनैर्यशः कीर्तिः नाकं स्वर्गं न नीतं न

प्रापितम्। कान्तानां सुन्दरीणां कोमलस्य सुकुमारस्य पल्लवाधरस्य किसलयनिभोष्ठस्य रसः स्वादः चन्द्रोदये सुधांशुप्रादुर्भावे न पीतः न स्वादितः। तारुण्यं यौवनं शून्यालये निर्मानुष्यगृहे। रिक्तगृह इत्यर्थः। दीपवत्प्रदीप इव निष्फलं व्यर्थं गतं नष्टम्। अहो आश्चर्यम्। यौवने कर्तव्यमुत्तमं मध्यममधमं वा न कृतमित्याश्चर्यम् ॥ [ शार्दूलविक्रीडितम् ]

१) तु. सु. ना१.२. ग्र२.३.५. म३. भुवि वादि°; ते१. म२.४.५. प्रतिवाद° । ग्र४. °शमनी (°दमनी) । ग्र१. म२.३. महासंगरे ( विनीतोचिता ) । —२) ना२. खड्गाग्रैः । ग्र२( मू ). करिकुद्द° । ना२. °दमनैर् ( °दलनैर् ) । —३) ते२. प्रीतो ( पीतो ) । ते२. द्वैपवत् ( दीपवत् ) ॥

म. ३६०३ (१५४५) सुभाष. १६८ । शा. ४१५१ ( भर्तृ° ) । सु. ३४०० । सुभा. पृ० ३७४.२१७ ( भर्तृ° ) । सुर. पृ० ९४.७ ( भर्तृ° ) । सक. ५.५४.३ ( पृ० ३१३ ) ॥

विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितं
शुश्रूषापि समाहितेन मनसा पित्रोर्न संपादिता ।
आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिताः
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेर्यते ॥ ४७ ॥

विद्येति ॥ कलङ्करहिता अपवादशून्या विद्या ब्रह्मविद्या। तथा च श्रुतिः। "विद्यां चैवाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति। वित्तं च धनं च नोपार्जितं न संपादितम्। समाहितेन नियमितेन मनसा चेतसा उपलक्षितः। इत्थंभूतलक्षणे तृतीया। पित्रोः प्रसूजनयित्रोः शुश्रूषा वरिवस्यापि न संपादिता। आसमन्ताल्लोलानि चलानि आयतानि दीर्घाणि लोचनानि नेत्राणि यासां ता युवतयः तरुण्यः स्वप्नेऽपि स्वप्नदर्शनेऽपि नालिङ्गिता न परिरब्धाः। अयं कालः अनेहा परपिण्डे परान्ने लोलुपतया सस्पृहत्वेन काकैः बलिभुग्भिरिव प्रेरितो नीतः। वडवानलमेव निर्वापयितुकामैरस्माभिश्चतुर्णां पुरुषार्थानां मध्ये एकोऽपि न निष्पादित इत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

[अडयार् २२ बी. १० कोशे नास्ति] १) ग्र१. नाधिकृता । —२) ना१. शिश्रूषा च; ग्र.२.३.५. शुश्रूषा च । ते१. समीहितेन । —३) ग्र२( मू ). आलोलाचल° । ग्र१.४. °लोचनाः । रा. ते. ग्र१.४.५. प्रियतमाः ( ग्र४. युवतय इत्यपि ) । —४) तु. व्यर्थं जन्म गतं मदीयमधुना शंभो प्रसीद प्रभो । म३. पितृपिण्ड° । ना२. प्रोह्यता; सु. ना५. ग्र३.५. प्रेरितः; ग्र२( मू ). प्ररिताः; म२. प्रेरसे ( प्रेर्यते ) ॥

म. ६०८८ (२७९६) । सुर. पृ० ९४.१ ( स्फुटश्लोके ) । सुभा. पृ० ३७५.२२५ ॥

वयं येभ्यो जाताश्चिरपरिगता एव खलु ते
समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ।

इदानीमेते स्मः प्रतिदिवसमासन्नपतना
गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ४८ ॥

वयमिति ॥ वयं येभ्यो जाता उत्पन्नाः । पूजायां बहुवचनम् । ते चिराय परिगताः स्वर्याताः खलु । यैः समं सह वृद्धा एधितास्तेऽपि स्मृतिविषयतां स्मरणगोचरत्वमेव गमिताः । इदानीमधुना प्रतिदिवसमनुदिनं आसन्नं संनिकृष्टं पतनं पातो येषां ते । एते वयं सिकतिलस्य वालुकावतो नदीतीरस्य तरङ्गिणीकूलस्य संबन्धिभिस्तरुभिर्द्रुमैस्तुल्यां सदृशीमवस्थां दशां गताः प्राप्ताः । यद्यदुत्पन्नं तत्तदवश्यं नश्यदीति विदित्वा स्थिरप्राप्तये यत्नः कार्य इत्यर्थः ॥ [ शिखरिणी ]

१) तु. चिरमथ गता; ना१.५. रा. ते. ग्र५. चिरपरिचिता । —२) तु. ये ( यैः ) । सु. ते२. संवृत्ताः । ग्र४. स्मृतिविषयतां तेपि ते च गलिताः । —३) तु२. ग्र१–४. एते स्म; सु२. एत स्म; सु३. एतेऽपि; म४.५. एतस्मिन् । तु२. म२. प्रतिदिनसमासन्न°; ना४.५. प्रतिदिवसमापन्न° । म३. °पतनं; म४. °पतनां । —४) तु२. मत्तास्तुल्या° । म४. तुल्यावस्था– । ना२. शिकतल°; ग्र४. विकसित°; म५. असिकतल° ॥

भ. ५९३९ (२७२१); शतकावलौ १०२ । शा. ४११३ ( भर्तृ° ) । अमितगतेः सुभाषितरत्नसंदोहे ( का० ८२ ) ३३७ । सुभा. पृ० ३७३.१७७ ( भर्तृ° ) ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥४९॥

आयुरिति ॥ नृणां मनुष्याणामायुर्जीवितकालो वर्षाणां संवत्सराणां शतं परिमितं परिच्छिन्नम् । तदर्धं तस्य वर्षशतस्यार्धं समांशः । 'अर्धं समेंऽशक' इत्यमरः । रात्रौ रजन्यां गतं निद्रयेत्यर्थः । परस्यान्यस्य तस्यार्धस्य चापरमन्यदर्धं बालत्वे शैशवे वृद्धत्वे स्थाविरे च गतम् । शेषमवशिष्टं व्याधिभिः रोगैर्वियोगैर्विरहैश्च यानि दुःखानि तैः सहितं सत् सेवादिभिः श्ववृत्तिप्रमुखैः कर्मभिर्नीयते । वारिणोऽम्भसस्तरङ्गवदूर्मिवच्चञ्चलतरेऽतिचपले जीवे प्राणे प्राणिनां जन्तूनां सौख्यं सुखमेव कुतः । नास्तीत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

२) ग्र१. तस्याप्यर्धं° ( तस्यार्धस्य ) । ना२. परः स ( परस्य ) । तु. चार्धमधिकं । —४) तु. °बुद्बुदसमे; ना२. °भङ्गचपले ( °चञ्चलतरे ) । ते१. सौख्यः ( सौख्यं ) ॥

भ. ९९६ (३७८); सुभाष. ८२ । सुभा. पृ. ३७३.१८० । सुर. पृ० ९४.९ ( भर्तृ° ) । सुभाषितार्णवे ३८.६ ॥

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनु-
र्नरः संसारान्ते विशति यमधानीयवनिकाम् ॥ ५० ॥

क्षणमिति ॥ मनुष्यो नट इव भरतवत् [ संसारान्ते संसारावसाने ] ( संसार एवाङ्के नाटकाङ्के ) क्षणं किंचित्कालम् । अत्यन्तसंयोगे द्वितीया। बालो माणवकः [ इति ] यावत्। क्षणमपि काम्यत इति कामः। स्त्रीषु रसिको रागवान् युवा तरुणो भूत्वा। क्षणं वित्तैर्धनैर्हीनो भूत्वा। क्षणमपि च संपूर्णविभवः समग्रधनो भूत्वा। 'अर्थरैविभवा अपी'त्यमरः। क्षणं जरया वार्धकेन जीर्णैः प्रशिथिलैरङ्गैर्देहावयवै-रुपलक्षितो वलिभिः त्वगङ्गैः (तरङ्गैः) मण्डिततनुरलंकृतदेहो भूत्वा यमधानीं [ नी ] यवनिकां तिरस्करिणीं विशति प्रविशति। भरतोऽपि क्षणं बालवेषं बिभर्ति क्षणं तरुणवेषं क्षणमकिंचनाकल्पं क्षणं धनिकसदृक्षप्रसाधनं क्षणं स्थविरनैपथ्यं च धृत्वा यवनिकां प्रविशति। नरस्य बाल्यादिदेहाः नटस्येव क्षणिकाः। अवसाने म्रियेतापीत्यर्थः ॥ [ शिखरिणी ]

१) तु. भूते ( भूत्वा )। प्र१.४. °मपि च युवा। ना२. कामनिरतः। —३) म४. वलीमुण्डित°। —४) ना२. प्र२.३. संसाराङ्के। प्र२.३. निविशति। तु१. ना२. ते१. प्र२.३.५. म४.५. यमधानीं; प्र१. यमयानीं। तु. सु. ना२. °जवनिकाम्; ते२. °यवनिका ॥

भ. २००४ (७७९); सुभाष. ३१७। शा. ४०९४ ( भर्तृ° )। सु. ३३१९ ( भर्तृ° )। सुर. पृ० ९५.१० ( भर्तृ° )। सुभा. पृ० ३६८.३८। सूहा. १९६.२२ ॥

## यतिनृपतिसंवादः ॥

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः।
इत्थं मानधनाविदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ ५१ ॥

त्वमिति ॥ त्वं राजा भवान्नृपतिः। वयमप्युपासितायामभ्यस्तायां गुर्व्यां महत्यां प्रज्ञायां मतौ विषयेऽभिमानेन गर्वेणोन्नता उच्छ्रिताः। त्वं विभवैः संपत्तिभिः ख्यातः प्रथितः। नः अस्माकं यशांसि स्तोत्राणि कवयो विद्वांसो दिक्षु ककुप्सु प्रतन्वन्ति विस्तारयन्ति। इत्थमनेन प्रकारेणावयोरप्युभयोरन्तरं भेदो माने-नाभिमानेन धनेन वित्तेन चाविदूरं संनिकृष्टम्। अल्पमिति यावत्। मम तु विद्या-निमित्तमानोऽस्ति। तव तु धनमस्ति इत्येतावदेवान्तरम्। औन्नत्यं तूभयोरपि समानम्। अस्मासु यदि पराङ्मुखः पराचीनोऽसि वयमप्येकान्ततो नितान्तं निःस्पृहा वीतरागाः। निःस्पृहाणां राजभिः किं प्रयोजनमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]
नी० श० १९ (वै० श०)

१) ना२. वयमप्युपासित° । म३.४. °गुरुः । ग्र१. °मानोजसः; म२. °मानौजसः; म४. °मानोन्नतः । —३) तु. म४. मानधनादिदूर°; ना१.२. मानधनाविदूर° । —४) ग्र३(मू). यचस्मात्स । म४. °पराङ्मुखोऽपि । तु१. निस्पृहा; तु२. ना२. निःस्पृहः; ग्र४. म. निस्पृहाः ॥

भ. २६५४ (१०७८); सुभाष. ३१० । शा. २०४ ( भर्तृ° ) । सु. ३४७३ । सुभा. पृ० ८०. ४२ । सक. ५.४०.५ ( पृ० ३०४ ) ॥

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदर्थं
शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः ।
सेवन्ते त्वां धनान्धा मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न ते चेत्त्वयि मम नितरामेव राजन्गतोऽस्मि ॥५२॥

अर्थानामिति ॥ त्वमर्थानां धनानामीशिषे प्रभुर्भवसि । 'अधीगर्थदयेशा'मिति कर्मणि षष्ठी । वयमपि {यावदर्थं यावदभिधेयं यथा तथेत्यर्थः-रा·} (यावदिच्छं यावती इच्छा तावदित्यर्थः । 'यावदवधारण' इत्यव्ययीभावः ) । गिरां वाचामीश्महे स्वामिनो भवामः । त्वं शूरो विक्रान्तः । वादिनां प्रतिवादिनां दर्पस्य विद्यागर्वस्य उपशमनविधौ नाशकृतौ नः अस्माकमक्षयमनवधिकं पाटवं दाक्ष्यम् । त्वां भवन्तं धनान्धाः धनेन निमित्तेन व्यामोहं प्राप्ताः । मतिमलहतये बुद्धिमालिन्यनाशाय मामपि श्रोतुकामाः शुश्रूषवः सेवन्ते उपासते । मय्यपि ते तव आस्था आदरो न चेत् मम मे त्वयि भवति सुतरामत्यर्थमास्था नास्ति । हे राजन् ( एषोऽयं) गतोऽस्मि यातो भवामि । राजानो यदि वीतरागान्स्वप्रीतये संभावयन्ति, तदा वीतरागा अपि राज्ञां मुदे राजभिः सङ्गं कुर्वन्ति न त्वात्मसंतोषाय । वीतरागाणां नित्यसंतुष्टत्वादिति भावः ॥ [ स्रग्धरा ]

१) तु. ईश्वरस्त्वं ( ईशिषे त्वं ) । ना३.४. वयमतुलगि° । तु. ईश्वरा ( ईश्महे ) । तु. ना२. यावदित्थं; सु. ना३–५. ग्र२.३.५. म१.२. यावदिच्छं; ग्र१. यावदिधीः । —२) रा. ते. °दर्पव्युपशमन°; म५. °ज्वरमथन° । तु. अक्षयः । तु१. पाटवाज्ञः; तु२. पाटवनः । —३) ना१.३–५. रा. ते. ग्र४.५. धनाढ्या; म४.५. धनार्थाः । ना२. अतिविमलधियो; ग्र१. म२. मतिमलगतये (म२. °यो ); म१. गतमलमतयो; म४. सुविमलरतयो; म५. सुविमलमतयो । तु. ऽस्मानपि (मामपि) । —४) ग्र१. म१.२. मय्यप्याशा । तु. ना१.२. न चेत्ते; ग्र३(मू). न ते च । ना२. सुतराम् । तु. सु. ते. एष (एव) । ना२. म१. नास्ति चिन्तापि राजन्; ना५. रा. म३. एव राजन्ननास्था; म२. एव राजन्गतोस्मिन्; म४.५. एव राजन्गताः स्मः (म४. गता स्मः ) ॥

भ. ६०६ (२२०); शतकावलौ १०३; सुभाष. ३११ । सु. ३४७४ । सुभा. पृ० ८१.४८ ॥

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ ५३ ॥

वयमिति ॥ इह संसारे वल्कलैस्तरुत्वग्भिर्वयं परितुष्टाः संतुष्टाः । त्वं च लक्ष्म्या राज्यश्रिया परितुष्टः । इह आवयोः परितोषः तुल्यः शेषः । राज्यश्रीरित्युत्कर्षो निर्विशेषो भेदरहितः । तवापि राज्यश्रीः संतोषं जनयति ममापि वल्कलानि संतोषजनकानि सन्ति । संतोषहेत्वोरेव भेदः न तु संतोषस्य । नन्वेवं तर्हि जगति कोऽपि दरिद्रो नास्तीत्याशङ्क्याह । यस्य तृष्णा विशाला महती अस्ति स तु धनवानपि दरिद्रो भव[ति]तु अकिंचनोऽस्तु । मनसि चित्ते परितुष्टे अर्थवान्धनिको दरिद्रोऽकिंचनकः [ °चनो वा कः । न कोऽपीत्यर्थः । ] धनासक्तो न संतोषेण उपयुज्यते अपि तु मनःसंतुष्ट एवोपयुज्यत इत्यर्थः ॥ [ मालिनी ]

१) ना१. परितृप्ता । ना३–५. प्र२.३. च लक्ष्म्या ( दुकूलैः ) । —२) सु२. ना३–५. रा. ते. प्र५. इव; म४. –हित– ( इह ) । म३. परितोषे । तु१. निर्विशोको; प्र४. निर्विकल्पो । —३) ते२. सति ( स तु ) । तु.रा. ते१. प्र४.५. म१.३–५. भवतु ( भवति ) ॥

म. ५९४१ (२७२२); दशरूपावलोके पृ० १४३ ( भर्तृ° ) । शा. ३०८ ( भर्तृ° ) । सु. ३४७५ । रसरत्नहारे । सुर. पृ० ५३.२ ( भर्तृ° ) । सुभा. पृ० ७५.१७ ( भर्तृ° ) । रसरत्नप्रदीपिकायां । सक. ५.६४.४ ( पृ० ३२०; कृष्णमिश्रस्य ) ॥

फलमलमशनाय स्वादु पानाय तोयं
शयनमवनिपृष्ठे वाससी वल्कले च ।
नवधनमधुपानभ्रान्तसर्वेन्द्रियाणा-
मविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ ५४ ॥

फलमिति ॥ अशनाय भोजनाय फलं तिन्दुकबदरचूतामलकादि पानाय पीतये स्वादु मधुरं तोयमुदकं जलमलम् । शयनं स्वापः अवनिपृष्ठे भूतले अलम् । वाससी अंशुके च वल्कले अलम् । नवं नूतनं धनं द्रविणमेव मधु मैरेयं तस्य पानेनास्वादनेन भ्रान्तान्युन्मत्तानि सर्वाणीन्द्रियाणि चक्षुरादीनि येषां तेषां दुर्जनानां खलानां अविनयं दुर्विनयं अनुमन्तुं नोत्सहे न व्यवस्यामि । मानिनामयं स्वभावो यत्कण्ठगतैरपि प्राणैः खलान्मूर्खान्नाश्रयन्ते ॥ उक्तं च ॥ "अधमा धनमिच्छन्ति धनमानौ तु मध्यमाः । उत्तमा मानमिच्छन्ति मानो हि महतां धन"मिति ॥[मालिनी]

१) ना१. फळमुळ°; प्र१. म२. सिलमल° । ना२. °नायालं च ( °नाय स्वादु ) । —२) रा. ते. प्र४. म४.५. क्षितिरपि शयनार्थं ( म४.५. °र्था ); ना३–५ शयनमवनिपृष्ठं । तु. वल्कले वाससी; रा. ते. प्र४.५. वाससे वल्कलं । —३) ना१. धननव°; ना२. धनलव°; प्र१. म२.३. परधन°; म१. वरधन° ( नवधन° ) । ना१. °मधुपानं । प्र३( मू ). °भ्राम्य° ( °भ्रान्त° ) । —४) तु.सु. अनुनयम्; प्र३( मू ). अपिनयम् । तु. अनुगन्तुं । सु ( टी. पा ). अविनयमभिनेतुं; प्र१. अविनयमभिमन्तुं ॥

म. ४३७२ ( १९६४ ) ॥

अशीमहि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ५५ ॥

अशीमहीति ॥ वयं भिक्षामशी(श्नी)महि भुञ्जीमहि । आशा दिश एव वासो वसनं वसीमहि परिदधीमहि । मह्याः पृथिव्याः पृष्ठे तले शयीमहि स्वपामः । ईश्वरै राजभिः किं कुर्वीमहि विदधीमहि । न किंचिदित्यर्थः ॥ [ अनुष्टुप् ]

[ अडयार् २९ ई २. कोशे नास्ति ] १) तु१. आसेमहे; तु२. आशेमहे; सु. ना३. प्र३.५. अश्नीमहि; ना१. आशीमहि; प्र२( मू ). अश्मीमहि । —२) ते२. यशोवासो; म३. आशावासं । तु१. वशीमहि । —३) तु. शयीमहे; प्र५. शय्यामहि । —४) तु१. कुर्वेमहि; प्र२( मू ). कुर्मीमहि । म४.५. महीश्वरैः ( किमीश्वरैः ) ॥

भ. ७२६ (२७०); सुभाष. ३१९ । शा. ४१०४ ( भर्तृ° ) । प्रबन्धचिन्तामणौ १८० । सुभा. पृ० ३६७.७ । चन्द्रालोकटीकायां ६.१३ ॥

न नटा न विटा न गायका न च सभ्येतरवादचुञ्चवः ।
नृपमीक्षितुमत्र के वयं स्तनभारानमिता न योषितः ॥ ५६ ॥

नेति ॥ वयं नटा भरता न भवामः । विटाः पल्लविकाश्च न भवामः । गायकाः गायन्तोऽपि न भवामः । सभ्येतरेण सभ्याग[न]र्हेण वादेन जल्पितेन चुञ्चवो वित्ताः सभ्येतरवादचुञ्चवः । 'तेन वित्तश्चुञ्चुप्चणपा'विति चुञ्चुप्प्रत्ययः । स्तनयोः कुचयोर्भारेण आनमिता ईषन्नम्री(न्निम्नी)कृता योषितः स्त्रियो न भवामः । हे नृपते राजन् ईक्षितुं द्रष्टुमत्र तेषां नटादीनां मध्ये वयं के । न को[के]ऽपीत्यर्थः ॥ [ वैतालीयाख्यमर्धसमवृत्तम् ]

१) ना१. न विटा न नटा । —२) तु. न परद्रोहनिविष्टचेतसाः । रा. प्र२( मू ). न हि ( न च ) । ना२. सभ्यान्तरवाद° । ना१.२. प्र१.४. °चञ्चवः । —३) ना१. प्र४. नृप वीक्षितुम्; प्र२( मू ). नृपते वीक्षितुम् । —४) प्र२( मू ). स्तनभारानुमिता । तु२. योषिताः ॥

भ. ३३१९ (१४०६); शतकावलौ १०३; सुभाष. ३११ । सुभा. पृ० ८०.३० । सुर. पृ० २४६.४३ ( स्फुटश्लोके ) । सूहा. ४०.३७ ( भर्तृ° ) ॥

विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ ५७ ॥

**विपुलेति ॥ पुरा पूर्वस्मिन्काले विपुलहृदयैरुदारचित्तैः धन्यैः कृतार्थैः कैश्चिद्दक्षप्रभृतिभिः जगल्लोको जनितं सृष्टम् । अपरैरन्यैर्विजितं पराजितम् । अन्यैरितरैर्विजित्य जित्वा तृणं यथा यवसमिव दत्तं वितीर्णं च । इह संसारे अन्ये केचन धीरा धृतिमन्तश्चतुर्दश भुवनानि लोकान्भुञ्जतेऽनुभवन्ति । पुंसां पुरुषाणां कतिपयानां पुराणां नगराणां स्वाम्ये आधिपत्ये सति एषोऽयं मदरूपो ज्वरः कः । तुच्छ इत्यर्थः । सर्वैरप्यात्मापेक्षया उत्कृष्टानवलोक्य गर्वो न कर्तव्य इति तात्पर्यम् ॥**
[ हरिणी ]

१) ना२. प्र२ (मू). धन्यैः कश्चि°; ना३–५. धन्यैरेत°; रा. ते. प्र३ (मू).४. ईशैरेत°; म३. ईशैः कैश्चि°; म४.५. एकैरेत° ( धन्यैः कैश्चि° )। म३. जगज्जयितुं । —२) ना१. प्र२ (मू). विजितम् ( विधृतम् )। प्र५. यान्यैर् ( चान्यैर् )। ना१. विचिन्त्य । तु२. म४.५. नृणां (तृणं)। —३) सु. इह च; ते१. अह ह; प्र२ (मू). इह वा। तु. सु. वीराश् ( धीराश् ) । —४) प्र४. °पुरखाम्यैः ॥

भ. ६१५५ (२८२९); शान्तिशतके २.१३ ( हे पृ० ४१७ ); सुभाष. ३१० । सु. ५३२ (भर्तृ°)। क्षेमेन्द्रस्य सुवृत्तितिलके ( का० २. पृ० ५२; भर्तृ° )। सुभा. पृ० ८०.३७ (भर्तृ°)। सक. ५.३९.१ ( पृ० ३०३; भर्तृ° )। सूहा. १६७.२२ ॥

अभुक्तायां यस्यां क्षणमपि न जातं नृपशतै-
र्भुवस्तस्या लाभे क इव बहुमानः क्षितिभृताम् ।
तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ ५८ ॥

**अभुक्तायामिति ॥ यस्यां भुवि नृपशतैर्बहुभी राजभिरभुक्तायामपालितायां सत्यां क्षणं त्रिंशत्कलात्मकं कालमपि न जातम् । अत्यन्तसंयोगे द्वितीया । तस्या भुवो लाभे क्षितिभुजां राज्ञां क इह[व] बहुमानः का श्लाघा । असाधारणे लाभे श्लाघा युक्ता भवति । भूलाभस्तु सर्वनृपसाधारणः । तस्मादयुक्तो बहुमानः । तस्या भुवोंऽशस्याप्यंशे तदवयवस्य भागस्य लेशेऽपि स्वभावावयवेऽपि पतयो बहवः प्रभवः । इत्थमत्यल्पा जडा राजानो विषादे शोके कर्तव्ये विधेये सति प्रत्युत वैपरीत्येन मुदं हर्षं विदधति कुर्वन्ति ॥** [ शिखरिणी]

१) ना३.४. प्र४. क्षणमिव । —२) सु३ (मू). लोभे । ते२. कैव; प्र५. म४.५. क इह । ना१. प्र२.३. म४.५. क्षितिभुजाम् । —३) ना२. यदंशस्या° । ना२. यदवयव° । तु. °लेशे नृपतयो; सु. ना३.४. प्र५. °लेशाधिपतयो; प्र४. °देशेपि पतयो । —४) ना२. जडाः; म२. मूडाः; म५. जनाः ( जडाः ) । ना२. प्रस्तुतमुदाम्; म४. प्रत्युतमिदम् ॥

भ. ५०७ (१९३); सुभाष. ३१० । सु. ५३३ (भर्तृ°)। सुभा. पृ० ८०.३४ (भर्तृ°)॥

मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणुः
स्वांशीकृत्य तमेव संयुगशतै राज्ञां गणा भुञ्जते ।
ते दद्युर्ददतोऽथ वा किमपरं क्षुद्रा दरिद्रा भृशं
धिग्धिक्तान्पुरुषाधमान्धनकणान्वाञ्छन्ति तेभ्योऽपि ये ॥५९॥

**मृत्पिण्ड इति ॥ जलरेखया सलिलश्रेण्या वलयितो वेष्टितः सर्वोऽप्ययं मृदो मृत्तिकायाः पिण्डः कवलः अणुः स्वल्पः ननु । तमेवाणुं मृत्पिण्डं {स्वांशीकृत्य स्वभागीकृत्य-रा-} (अंशीकृत्य) भागीकृत्य अंशान्कृत्वा संयुग(संगर)शतैः अपरिमितैः संयुगैः राज्ञां नृपाणां गणाः समूहाः भुञ्जतेऽनुभवन्ति । ते नृपा दद्युर्वितरेयुः । अत्र काकुरनुसंधेया । न दद्युरित्यर्थः । अथ वा क्षुद्रा अत्यल्पाः भृशमत्यर्थं दरिद्राः अकिंचनास्ते राजानः किं यदल्पं (वि)ददते वितरन्ति । अत्रापि काकुः । अहो आश्चर्यम् । तेभ्यो दरिद्रेभ्योऽपि नृपेभ्यो धनकणान्वित्तलेशान् ये वाञ्छन्ति अभिलषन्ति तान्पुरुषाधमान्निकृष्टान्धिक् । ते अत्यधमा इत्यर्थः । धिग्योगे द्वितीया । "उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" इति ॥** [ शार्दूलविक्रीडितम् ]

१) तु२. दलयितः ( वलयितः ) । तु१. निर्गुणः; तु२. दुर्गुणः; ग्र४. नश्वरः; म४. नन्वणून् ( नन्वणुः ) । —२) सु. ते. येंऽशीकृत्य; ना१. त्वेकीकृत्य; ना२. ग्र२ (टी). भागीकृत्य; ग्र१.२(मू). तं स्वीकृत्य; ग्र३. म१–३.५. त्वंशीकृत्य; म४. व्यङ्गीकृत्य ( स्वांशीकृत्य ) । तु. स एव; म४. तदेव (तमेव) । ना२–५. रा. ग्र२. संगर° ( संयुग° ) । तु. गणै ( गणा ) । —३) तु२. दे–; सु. ना१. ग्र१. म१–४. नो ( ते ) । सु२.३. ददतोऽपि; ना१. ग्र१.३–५. म१.२.४. ददतेऽपि; ना२. दयतोऽथ; ते२. धधतोऽथ; म३. दधतेऽपि ( ददतोऽथ ) । तु. न किमपि; सु. किमपि ते; ना१. कियदहो; ना४.५. ग्र२.५. कियदपि; ग्र१.३. म२.४.५. किमपि तत् (किमपरं) । —४) ग्र१. धिक्तांस्तान् ( धिग्धिक्तान् ) । तु. धनकणं; ग्र३ (मू). धनगणान् । ग्र१. म१.२. तेभ्यो हि ये ॥

**म. ४९५२ (२२४५); शतकावलौ ११०; सुभाष. ३१० । सुभा. पृ० ८०,४०. ॥**

स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलंकारविधये ।
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ ६० ॥

**स इति ॥ मदनरिपुणा मन्मथवैरिणा यस्य धवलं अवदातं उच्चैरधिकं कपालं करोटिः मूर्ध्नि शिरसि अलंकारविधये मण्डनकृते विनिहितं न्यस्तं स कोऽपि वर्णयितुमशक्यः जातः उत्पन्नः आसीदभूत् । अस्य जन्म सार्थकमित्यर्थः । अधुना इदानीं प्राणानां स्वकीयानामसूनां त्राणे रक्षणे प्रवणा यत्नवती मतिर्येषां तैः नमद्भिः वन्दनकैः कैश्चित्कतिपयैर्नृभिः पुम्भिः निमित्तभूतैः पुंसां पुरुषाणामयं दृश्यमानः**

अतुलो निरुपमः दर्पो गर्व एव ज्वरो व्याधिविशेषः । वयं दशाननमप्यतिशेमहे ब्रह्माणमप्यतिशेमहे एवंरूपः कः । तुच्छ इत्यर्थः ॥ [ शिखरिणी ]

१) तु. कोऽप्यस्मिन् । —२) ग्र२ (मू). विनिहतम् । —३) तु२. °प्रणवमतिभिः । —४) तु. नमद्ग्रीवैः; ना१. महद्भिः कः; म३. नमद्भिः किं । ग्र४. °ज्वरमदः ( इत्यपि ) ॥

म. ६६८० (३१०६) । सुभा. पृ० ८०.३६ ॥

## मनःसंबोधनम् ॥

परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा
प्रसादं किं नेतुं विशसि हृदय क्लेशकलिलम् ।
प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगणो
विविक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥ ६१ ॥

परेषामिति ॥ हे हृदय चित्त परेषामन्येषां चेतांसि मनांसि प्रतिदिवसमनुदिनं बहुधा बहुविधैः प्रकारैराराध्य संसेव्य प्रसादं प्रसन्नतां नेतुं गमयितुं क्लेशकलिलं दुःखगहनं किं किमर्थं विशसि प्रविशसि । तर्हि किं कर्तव्यमित्यत आह । त्वयि भवति अन्तरभ्यन्तरे बाह्यानुसंधानं विहाय प्रसन्ने स्वति स्वयमात्मनैव उदितमुत्पन्नं चिन्तामणीनां रोहण(गण)रत्नानां गणः समूहो यत्र तादृशो विविक्तः पूतो विषयाभिलाषविहीनः संकल्पो मानसं कर्म ते तव किमभिलषितं न पुष्यति न पुष्णाति । सर्वमभिलषितं पुष्णाति । सर्वेषामपि कामानां मनःसंतोषप्रयोजनकत्वाद्यस्य मनः संतुष्टं तस्य सर्वे कामाः सन्तीत्यर्थः ॥ उक्तं च ॥ 'सर्वाश्च संपदस्तस्य संतुष्टं यस्य मानसम् । उपानद्गूढपादस्य ननु चर्मास्तृतैव भू'रिति ॥ [शिखरिणी]

२) तु२. विशशि; म४. वहसि । सु२. हृदये; ना२. हृदयं । सु२. ग्र४. क्लेशविकलम्; रा. ते. क्लेशकलितम्; म३. क्लेशसलिलम् । —३) ग्र१. म२.३. त्वय्यर्थे ( त्वय्यन्तः ) । ग्र३ (मू). म१-३. स्वयमुचित° । सु. ना२. म४.५. °गुणो; ना१. °गणे । —४) ग्र२ (टी). विचित्तः; ग्र४. विभक्तः । ना१. संकल्पो । ग्र२ (मू). किमभिलष्यति । ना१. पुण्य तनुते; ना४. ग्र२ (मू). पुष्यतु न ते ॥

म. ३९७५ (१७२६); सुभाष. ३१२ । सु. ३४१० (५३४; शङ्कुकस्य ) । सुभा. पृ० ३९८.४५ ( शङ्कुकस्य ) ॥

परिभ्रमसि किं मुधा क्वचन चित्त विश्राम्यतां
स्वयं भवति यद्यथा भवति तत्तथा नान्यथा ।
अतीतमननुस्मरन्नपि च भाव्यसंकल्पय-
न्नतर्कितगमागमाननुभवामि भोगानहम् ॥ ६२ ॥

परिभ्रमसीति ॥ हे चित्त हृदय मुधा वृथा किं किमर्थं परिभ्रमसि परिभ्रमणं करोषि। क्वचन कुत्रचित्प्रदेशे विश्राम्यतां विश्रामः क्रियताम्। यद्यथा भवति तत्तथा भवति। अन्यथा प्रकारान्तरेण न भवति। अहं अतीतं कर्म अननुस्मरन्ननुस्मृत्वा[त्य] भावि कर्म चाप्यसंकल्पयन् यत्नमकुर्वन् अतर्कितगमागमान् अवाञ्छितगतागतान्भोगान्सुखदुःखात्मकान् अनुभवामि अनुभोक्ष्ये ॥ [पृथ्वी]

१) तु१. मुदा; ना२. युधा; प्र१. म. वृथा; प्र४. वृधा (मुधा)। तु२. विश्राम्यतो; म१–३. ५. विश्रम्यतां। —२) प्र१. म१.२. यदा; म३. यथा (स्वयं)। —३) तु. प्र४. अतीतमनुविस्मरन्; प्र१. अतीतमनुसंस्मरन्। तु. बाध्य° (भाव्य°)। तु. संकल्पवत्। —४) तु. कुतर्कगमनागमाननुभवामि; ना३–५. रा. ते. प्र४.५. अतर्कितसमागमान°। ना२. भोगाननम् ॥

म. ३९६३ (१७१८)। सु. ३१५३ (क्षेमेन्द्रस्य)। सुर. पृ० ९२.९ (स्फुटश्लोके) ॥

एतस्माद्विरमेन्द्रियार्थगहनादायासकादाश्रय
श्रेयोमार्गमनेकदुःखशमनव्यापारदक्षं क्षणात्।
स्वात्मीभावमुपैहि संत्यज निजां कल्लोललोलां गतिं
मा भूयो भज भङ्गुरां भवरतिं चेतः प्रसीदाधुना ॥ ६३॥

एतस्मादिति ॥ हे चेतः एतस्मादस्मात् आयासकादायासकर्तुरिन्द्रियार्थगहनात् विषयारुणाशात्?। 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी। गोचरा इन्द्रियार्थश्चे'ति 'अटव्यरण्यं विपिनं गहनमिति' चामरः। विरम निवर्तस्व। क्षणादल्पादेव कालादनेकेषां बहूनां दुःखानां संसारक्लेशानां शमने नाशने एव व्यापारे कर्मणि दक्षं पेशलम्। श्रेयसः मोक्षस्य। 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृत'मित्यमरः। मार्गं पन्थानमाश्रय भज। स्वात्मीभावं ब्रह्मभूयमुपैहि प्राप्नुहि। कल्लोललोलां तरङ्गचञ्चलां निजां स्वकीयां गतिं गमनं संत्यज सम्यग्जहीहि। भूयः पुनः पुनः भङ्गुरां नाशस्वभावां भवरतिं संसारप्रीतिं मा भज न सेवस्व। अधुनेदानीं प्रसीद प्रसन्नं भव। चित्तव्याजेन लोकेभ्यो बुद्धिमुपदिशति ॥ [शार्दूलविक्रीडितम्].

१) म२.३. एकस्माद्। तु.° भोगाश्रया; ना२. °खेदाश्रयात्; ते१. °कादायस; प्र४. म२. °कादाश्रयात्; म५. °कौदाश्रय। —२) ना२. श्रेणेमार्गम्। तु. सु. ना१.२.५. रा. ते. प्र४. अशेष°; म५. -विशेष°। ना२. °दुःखशमनं; ते१. °दुःखमशन°। ना३.४. °व्यापात°। ना२. °दक्ष–; म४. °दक्षः। —३) तुर. ते१. प्र१. उपेहि (उपैहि)। ना२. मतिं (गतिं)। —४) ते२. भुज–(भज) ॥

म. १४५० (५७१)। सुर. पृ० ९२.१९ (भर्तृ°) ॥

मोहं मार्जय तामुपार्जय रतिं चन्द्रार्धचूडामणौ
चेतः स्वर्गतरङ्गिणीतटभुवामासङ्गमङ्गीकुरु।
को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु च श्रीषु च
ज्वालाग्रेषु च पन्नगेषु च सरिद्वेगेषु च प्रत्ययः ॥ ६४ ॥

मोहमिति। हे चेतश्चित्त मोहमज्ञानं मार्जय अपनुद। चन्द्रस्य सुधांशोः अर्धः कला चूडामणिः शिरोरत्नं यस्य स चन्द्रार्धचूडामणिः शंभुस्तस्मिन्। तां उपनिषत्सु प्रतिपादितां रतिं उपार्जय संपादय। स्वर्गतरङ्गिण्याः भागीरथ्याः तटभुवां तीरभूमीनां आसङ्गं उपाश्रयणं अङ्गीकुरु स्वीकुरु। तत्र हेतुमाह। वीचिषु तरङ्गेषु च सरिद्बुद्बुदेषु जलविकारेषु च तडिल्लेखासु विद्युच्छ्रेणीषु च श्रीषु संपत्तिषु ज्वालाग्रेषु वह्निशिखाग्रेषु च पन्नगेषु भुजंगेषु च सरिद्वेगेषु नदीगणेषु (सरिद्वेगेषु नदीरयेषु) च प्रत्ययो विश्वासः कः। नास्तीत्यर्थः। वीच्यादिकमिदमखिलं श्रियामुपमानं, यथा वीच्यादिकमस्थिरं तथा श्रियोऽप्यस्थिराः। तस्मान्मोहमपहृत्य शिवे रतिमुपार्ज्य गङ्गाकूलं सेवेत्यर्थः॥ [शार्दूलविक्रीडितम्]

१) प्र२ (मू). उपाश्रय (उपार्जय)। —२) ना२. °तटभुवामासं समङ्गीकुरु। —३) प्र१. म४. को वीचीषु च; प्र४. 'को वा विद्विषु' (इत्यपि)। ना१. प्र४. म१.३. तटिल्लेखासु; प्र२ (मू). तटिल्लोलासु; प्र३. तडिद्वल्लीषु; म४.५. तडिद्वल्लीषु। प्र१. म२. तडि(प्र१. °टि)ल्लोलामतल्लीषु च। तु. वल्लीषु; सु. ते२. म२. च स्त्रीषु; ना१. योषित्सु (च श्रीषु)। —४) ते२. ज्वालाशेषु। तु. सरीसृपेषु; सु. सरीसृपेषु (च पन्नगेषु)। तु. प्र३ (मू). सरित्पूरेषु; सु. ना१.२. प्र२. सरिद्वेगेषु; रा. ते. मा५. प्र५. सुहृद्वर्गेषु; म४.५. सरित्पूगेषु॥

भ. ४९८२ (२२५६)॥

चेतश्चिन्तय मा रमां सकृदिमामस्थायिनीमास्थया
भूपालभ्रुकुटीकुटीविहरणव्यापारपण्याङ्गनाम्।
कन्थाकञ्चुकिनः प्रविश्य भवनद्वाराणि वाराणसी-
रथ्यापङ्क्तिषु पाणिपात्रपतितां भिक्षामपेक्षामहे॥ ६९॥

चेत इति॥ हे चेतश्चित्त अस्थायिनीमस्थिरामिमां परिदृश्यमानां रमां लक्ष्मीं आस्थया तात्पर्येण भूपालानां नृपाणां भ्रुकुट्यः भ्रूभङ्गा एव कुट्यः कुटीराणि तासु विहरणं व्यापारः विहरणे व्यासङ्गो यस्याः सा तथाविधां पण्याङ्गनां वेश्यां नृपालभ्रूकुटीरविहारवेश्यारूपामित्यर्थः। सकृदेकवारं चिन्तय विचारय। आस्थया यत्नेन मा अलम्। कन्थाकञ्चुकिनः जीर्णवसनखण्डप्रोतवारवाणवन्तः सन्तः। वयमिति शेषः। वाराणस्यां काश्यां रथ्यापङ्क्तिषु वीथिश्रेणीषु भवनानां गृहाणां द्वाराणि प्रतीहारान्प्रविश्य समागत्य पाणौ हस्ते पात्रममत्रं तस्मिन्पतितां विनिहितां भिक्षां भिक्षान्नमपेक्षामहे इच्छामहे॥ [शार्दूलविक्रीडितम्]

१) तु. म४. मा श्रियं; ना३. मा रसां; ते२. मा रमा (मा रमां)। ना१. ते. प्र१.३. आस्थायिनीम्। ना२. आश्रय (आस्थया)। —२) ना२. ते. °भृकुटी°; प्र१. °भ्रकुटी°। प्र२ (मू). °वितरण°; म४. °विरहिण°। —३) ना२. कन्थां। तु. °कञ्चुकिन–। तु२. ना२. भुवन°। —४) ना२. रथ्यावीथिषु। तु२. वाणिपात्र°। म२. अवेक्षामहे॥

भ. २३०४ (९२०); शतकावली १०५।
नी० श० २० (वै० श०)

अग्रे गीतं सरसकवयः पार्श्वयोर्दाक्षिणात्याः
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ६६ ॥

अग्र इति ॥ अग्रे पुरस्ताद्गीतं गानम् । पार्श्वयोर्वामदक्षिणपार्श्वयोः सरसाः शृङ्गारादिना संयुक्ताः कवयः । दक्षिणदिग्भाग एव प्रायेण चतुराः कवयो भवन्तीति दाक्षिणात्या इति कविविशेषणमुक्तम् । 'दक्षिणापश्चात्पुरसस्त्यग्' इति त्यक् । पश्चाच्चरमभागे चामरग्राहिणीनां प्रकीर्णकधारिणीनां स्त्रीणां लीलावलयरणितं क्रीडाकनकवलयशिञ्जितम् । यद्यप्येवमस्ति तदा हे चेतश्चित्त भवस्य संसारस्य रसो गुणः तस्यास्वादने अनुभवे त्वं लम्पटत्वं लौल्यं कुरु विधेहि । नोचेत् सहसा शीघ्रं निर्विकल्पे भेदकल्पनाशून्ये समाधौ ब्रह्मध्यानोत्कर्षे ध्यानोत्कर्षां (?) निवाताचलप्रदीपावस्थानमिव एकत्र चेतसोऽवस्थानं समाधिरभिधीयते । तत्र प्रविश तिष्ठेत्यर्थः । यदि गीतश्रवणादिसुखमस्ति तदानीं संसारमपि कथंचिदङ्गीकुर्मः । अस्माकं सुखमात्रद्वेषो नास्ति अपि तु दुःखसंवलिते । यदि चेद्दुःखरहितं सुखं संभवति तथा[दा] भवमप्यनुभव । नो चेत्समाधिं प्रविशेत्यर्थः ॥ [ मन्दाक्रान्ता ]

१) प्र१. म२. पक्षयोर् (पार्श्वयोर्)। तु१. दक्षिणात्याः । —२) तु. ना२. पृष्ठे लीला° । —३) ना१. यद्यस्त्वेवं; ना२. यद्यस्येवं; ना३–५. म१. यद्यप्येवं ॥

भ. ७७ (२३) । शा. ४१७६ (भर्तृ°) । सु. ३४६७ । सुर. पृ० ९२.१० (भर्तृ°) । सुभा. पृ० ३७५.२४५ (भर्तृ°) । अलंकाररत्नाकरे ४७४ । सक. ५.५५.५ (पृ० ३१६; उत्पलराजस्य) ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
न्यस्तं पदं शिरसि विद्विषतां ततः किम् ।
संपादिताः प्रणयिनो विभवैस्ततः किं
कल्पस्थितास्तनुभृतां तनवस्ततः किम् ॥ ६७ ॥

प्राप्ता इति ॥ सकलकामदुघाः सर्वाभिलषितस्राविण्यः श्रियः संपदः प्राप्ता लब्धाः ततः किम् । विद्विषतां वैरिणां शिरसि मस्तके पदं चरणं न्यस्तं निहितं ततः किम् । प्रणयिनः सुहृदः विभवैरैश्वर्यैः { संपादिताः संगृहीताः-रा- } ( संभाविताः संमानिताः ) ततः किम् । तनुभृतां शरीरिणां [ तनवो देहाः कल्पस्थिताः कल्पकालपर्यन्तस्थायिनः ] ( तनुभिर्देहैः कल्पं कल्पपरिमितं कालं स्थितमुषितं ) ततः किम् । संपदादीनामपि नश्वरत्वान्मनोरथसिद्धिर्नास्ति । यदा नित्यं मोक्षसुखं साध्यते तदा काङ्क्षितसिद्धिर्भवतीत्यर्थः ॥ [ वसन्ततिलका ]

१) प्र१. प्राप्ताः श्रियं; म२. प्राप्ताश्रयः । प्र१. म२. °दुघां ततः किं । —३) तु. सु. संतोषिताः; ना१. प्र४. म५. संमानिताः; ना५. प्र१–३. म२. संभाविताः; म४. सन्मानिताः ।

—४) तु१. कल्पैः स्थितास्; ना२. कल्पं स्थितं; ना३.४. कल्पस्थितं; ग्र२.३. कल्पं स्थितां; ग्र५. कल्पस्थिरं। ना२. ग्र२.३. तनुभिस्; म३. असवस् (तनवस्)॥

म. ४३२७ (१९०३); शतकावली १०५; सुभाष्. ३१४; नीतिसङ्क° ८१। शान्तिशतके ४.२। काव्यप्रकाशे ७.२७१; काव्यप्रदीपे (का० २४. पृ० २८१)। दशरूपावलोके पृ० १४०। शा. ४११२ (भर्तृ°)। सु. ३४५१ (भर्तृ°)। उदाहरणचन्द्रिकायाम्। रसरत्नहारे (?)। अलंकारमहोदधौ ४०४। सुभा. पृ० १७६.९४९ (भर्तृ°)। रसरत्नप्रदीपिकायां। चन्द्रालोकटीकायां २.३४॥

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु न मन्मथजा विकाराः।
संसर्गदोषरहिता विजना वनान्ता
वैराग्यमस्ति किमतः परमर्थनीयम्॥ ६८॥

भक्तिरिति॥ भवे परमेश्वरे भक्तिर्विश्वासो यद्यस्ति। हृदिस्थं मनःस्थितं मरणजन्मभ्यां नाशोत्पत्तिभ्यां सकाशाद्भयं साध्वसं यद्यस्ति बन्धुषु स्नेहः प्रेमा यदि नास्ति। मन्मथजा कामोद्भूता विकारा विकृतयो यदि न सन्ति। संसर्गदोषरहिताः सङ्गदोषविवर्जिताः विजना विविक्ता वनान्ता वनमध्यप्रदेशा यदि सन्ति। वैराग्यं वीतरागता यद्यस्ति। अस्तीति काकुः। तर्ह्यतः परं अस्मात्परमुत्कृष्टं किमर्थनीयम्। काङ्क्षितव्यं न किंचिदित्यर्थः॥ [वसन्ततिलका]

१) ग्र१. म२. भवेन् (भवे)। ग्र४. °विनाशिनी स्यात् (°भयं हृदिस्थं)। —२) म३. देहो (स्नेहो)। तु. ना२. मान्मथजा। ग्र१.४. म१–४. मन्मथजो विकारः। —३) तु१. °रहितो; ना१. °रहिते; म३. °रहितं। ना१. म३. विजने। तु२. वन्मेता; ना१. ग्र१. म३. वनान्ते। —४) ना३–५. रा२. ग्र५. किमितः॥

म. ४५२० (२००६); सुभाष्. ३१४॥

तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः।
यस्यानुषङ्गिण इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति॥ ६९॥

तस्मादिति॥ यस्मादतः परमर्थनीयं नास्ति इदमेवोत्कृष्टं भवति। तस्मात्कारणादनन्तं नाशरहितमजरं वार्धकविहीनं परममुत्कृष्टं विकासि विश्वव्यापि तत् तत्पदवाच्यं ब्रह्म परमेश्वराख्यं परमात्मानं चिन्तय ध्याय। एभिर्वक्ष्यमाणैरसद्विकल्पैः कुत्सितपक्षैः किम्। न किंचिदस्ति। इमे भुवनस्य लोकस्याधिपत्यं स्वाम्यं भोगः

सुखाद्यादिर्येषां ते भुवनाधिपत्यभोगाः कृपणानां लुब्धानां जनानामभिमता यस्य ब्रह्मणोऽनुषङ्गिणः आनुषङ्गिकफलानि । महत्फलमुद्दिश्य प्रवर्तमानस्यायत्नसिद्धान्यल्पानि फलानि आनुषङ्गिकफलान्युच्यन्ते । एतेषु यद्यासक्तो भवेत् तदानीं तन्महतः फलस्यान्तरायो भवति ॥ [ वसन्ततिलका ]

१) तु. विशोकं; सु. ना२. विकाशि; म४.५. विभाति । —२) ना२. रे ब्रह्म; प्र१. म१–३. तच्चित्त ( तद्ब्रह्म ) । ना२. किमेभिरसिद्धकल्पैः; प्र१. म२. किमस्त्यसकृद्धिकल्पैः । —३) प्र२ (मू). म४.५. °धिपत्यं । —४) सु. ना३–५. °राज्यादयः; ते. प्र४. °लोकादयः ( °भोगादयः ) ॥

भ. २५२२ (१०१२); शतकावलौ ३५; नीतिसङ्क. ८१; काव्यकल्प°; सुभाष. ३१४ । शान्तिशतके ३.२४ ( हे. ४२४ ) । सु. ३४५२ (भर्तृ°) ॥

पातालमाविशसि यासि नभो विलङ्घ्य
दिङ्मण्डलं भ्रमसि मानस चापलेन ।
भ्रान्त्यापि जातु विमलं कथमात्मलीनं
न ब्रह्म संस्मरसि निर्वृतिमेषि येन ॥ ७० ॥

पातालमिति ॥ हे मानस हृदय चापलेन चपलतया पातालमधोभुवनं आविशसि प्रविशसि । नभः गगनं विलङ्घ्यातिक्रम्य यासि गच्छसि । दिशां हरितां मण्डलं चक्रवालं भ्रमसि पर्यटसि । भ्रान्त्वा परिभ्रम्यापि जातु कदाचिदपि आत्मन्येव लीनं निगूढं विमलं मलरहितं ब्रह्म परमात्मरूपं परं ज्योतिः कथं न संस्मरसि । येन चिन्तनेन निर्वृतिं सुखमेषि ब्रह्मानन्दमनुभवसीत्यर्थः ॥ [ वसन्ततिलका ]

१) ना२. वासि ( यासि ) । —२) तु२. दिग्मण्डलं; प्र२ (मू). दृङ्मण्डलं । ना२. मानसि ( मानस ) । —३) प्र२.३. भ्रान्त्वापि । तु२. सु. विमले । ना२. रा. ते. प्र१. आत्मनीनं । —४) तु. तद्ब्रह्म न स्मरसि; ना२. तद्ब्रह्म न स्पृशसि; प्र५. न ब्रह्म संस्पृशसि । ना२. म३. एष ( एषि ) ॥

भ. ४०२६ (१७५६); नीतिसङ्क° ७९; शतकावलौ ३५ (१०५); सुभाष. ३१४ । सु. ३४४७ ( अर्गटस्य ) । सुभाषितार्णवे ३८.२ ॥

वैराग्यशतके सप्तमपद्धत्यन्ते अधिकौ ।

क्वचिद्रम्या रामा क्वचिदपि गलत्कुष्ठरुधिरा
क्वचिद्वीणावाणी क्वचिदपि च हा हेति रुदितम् ।
क्वचिद्विद्वद्गोष्ठी क्वचिदपि हतासानमतुलं(?)
न जाने संसारः किममृतमयः किं विषमयः ॥ १ ॥

[ तु. वैराग्य. ६८ ] [ भ. १९८९ (३९११) । सुभाष. २८ (३१३) । सु. २९४१ । सुक्ता. पृ० ८९.५ । सुर. पृ० ९९.५ ( भर्तृ° ) ]

अहिरिव जनयोगं सर्वदा वर्जयेद्यः
कुणमिव वसु नारीं त्यक्तकामो विरागी ।
विषमिव विषयार्थान्मन्यमानो दुरन्ता-
ञ्जयति परमहंसो मुक्तिभावं समेति ॥ २ ॥

[ तु. वैराग्य. ६९ ]

## नित्यानित्यविचारः ।

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।
मुक्त्वैकं भवदुःखभाररचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रवेशकलनं शेषैर्वणिग्वृत्तिभिः ॥ ७१ ॥

किमिति ॥ वेदैः ऋगादिभिः किम् । स्मृतिभिर्मन्वादिभिः किम् । धर्मशास्त्रैः किम् । स्मृतयस्तु, "मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनाङ्गिराः । यमापस्तम्बसंवर्तकात्यायनबृहस्पतिः । पराशरव्यासशङ्खलिखिता दक्षगौतमाः । शातातपो वसिष्ठश्च धर्मशास्त्रप्रवर्तकाः" इति । पुराणानां ब्राह्मादीनां पठनैः किम् । पुराणानि "ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा । भविष्यं नारदीयं च मार्कण्डेयमतः परम् । आग्नेयं ब्रह्मकै[वै ?]वर्तं लैङ्गं वाराहमेव च । स्कान्दं च वामनं चैव कौर्मं मात्स्यं च गारुडम् । ब्रह्माण्डं च पुराणानि" इत्येवमिति । शास्त्रैर्व्याकरणप्रमुखैः किम् । शास्त्राणि तु प्रागेवोक्तानि । महाविस्तरैरधिकव्यासैः । इदंवादिनां सर्वेषां विशेषाणां स्वर्गो द्यौरेव ग्रामः संवसथः । तत्र कुटी निवासोऽल्पगृहवसतिरेव फलं साध्यं तद्वृत्ति प्रयच्छन्ति यानि तैः । कर्मणां ज्योतिष्टोमादीनां क्रियाः करणानि । तेषां विभ्रमैर्विलसितैः विशेषैरित्यर्थः । तैः किम् । सर्वत्र किमित्याक्षेपः । भवदुःखानि संसारपीडा एव भारास्तेषां रचना निर्माणं तस्य विध्वंसने नाशने कालानलः प्रलयाग्निः । स्वात्मानन्दो ब्रह्मानन्द एव पदं स्थानं तत्र प्रवेशो लयनं तस्य {कलनं स्वीकारं-सु-} ( कथनमुपदेशः । तदेकं ) मुक्त्वा विहाय शेषा अवशिष्टा वेदाध्ययनव्यापारा वणिजां वैश्यानां वृत्तयो जीवनानि । ब्रह्मज्ञानविहीनं वेदस्मृतिशास्त्रपुराणपठनं योगाद्यनुष्ठानं च व्यर्थमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) म३. पुराणकथनैः । —२) म३. स्वर्गद्वारकुटीनिवासफलकैः । म१. धर्म° ( कर्म° ) । —३) बु१. मुक्तैकं; बु२. मुक्तोकं; सु. ग्र२.३. मुक्त्वैवं । तु. °दुःखभाव° । ना२. °विध्वंसि° । —४) बु. °सुख°; ते१. °पथ° ( °पद° ) । ग्र२.३.५. °कथनं ( °कलनं ) । तु. ते. ग्र१–३. म२. शेषा वणिग्वृत्तयः; बु. ना३–५. ग्र४. शेषैर्वणिग्वर्तनैः ( ग्र४. मूलवदपि ) ॥

भ. १७२१ (६६४); सुभाष. २३४ ॥

यतो मेरुः श्रीमान्निपतति युगान्ताग्निदलितः
समुद्राः शुष्यन्ति प्रचुरमकरग्राहनिलयाः ।
धरा गच्छत्यन्तं धरणिधरपादैरपि धृता
शरीरे का वार्ता करिकलभकर्णाग्रचपले ॥ ७२ ॥

यत इति ॥ श्रीमान्सर्वोत्कृष्टो मेरुः सुरालयो युगान्ताग्निना प्रलयकालवह्निना दलितश्चूर्णीकृतो भूत्वा निपतति भ्रश्यति । प्रचुरैर्बहुलैर्मकरैर्मत्स्यविशेषैः ग्राहैः नक्रैर्यादोविशेषैश्च कलिला गहनाः समुद्राः सागराश्च शुष्यन्ति शोषं प्राप्नुवन्ति । धरणिधराणां पादैः पर्यन्तपर्वतैर्धृता ऊढापि धरा भूमिः अन्तं नाशं गच्छति प्राप्नोति । एवं सति करिकलभस्य गजशिशोः कर्णाग्रवत् श्रवणान्त इव चपले चञ्चले । क्षणिक इत्यर्थः । शरीरे । शीर्यत इति शरीरं तस्मिन् वपुषि का वार्ता । किं कथनीयमित्यर्थः ॥ [ शिखरिणी ]

१) म३-५. यदा ( यतो ) । ना३-५. रा. ते. °वलितः ( °दलितः ) । —२) तु. शुष्यन्ते । तु१. न करग्राह° । ना२. °विलयाः; ग्र२.३. °कलिताः; ग्र५. °कलिलाः ( °निलयाः ) । —३) ना२. धना ( धरा ) । तु२. ग्र५. गच्छत्यन्ते; सु. गच्छत्यन्तर्; ना५. गच्छेत्यन्तं । म३. धृतं ( धृता ) । —४) तु२. किरिकलभ°; सु३. करिकरभ° । म४. °कण्ठाग्रचपले ॥

भ. ५१९७ (२३५५); सुभाष. ३१३ । सूहा. १९७.३४ ( भर्तृ° ) ॥

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ।
वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ ७३ ॥

गात्रमिति ॥ गात्रं शरीरं संकुचितं खर्वीकृतम् । गतिर्गमनं विगलिता नष्टा । दन्तानां रदनानामावलिः पङ्क्तिः भ्रष्टा विगलिता । दृष्टिर्दर्शनं नश्यति नष्टा जाता । बधिरता बधिरत्वं वर्धते प्रवृद्धा । वक्त्रं वदनं लालायते सृणिकायुक्तं जातम् । बान्धवजनो बन्धुसमूहः वाक्यं स्वोक्तवचनं नाद्रियते न स्वीकरोति । भार्या गृहिणी न शुश्रूषते न सेवते । पुत्रोऽपत्यमपि अमित्रायते शत्रुरिवाचरति । जीर्णवयसो वृद्धस्य पुरुषस्य । नरस्येति सर्वत्रान्वयः । हा कष्टम् ॥ [ शार्दूलविक्रीडितम् ]

१) ग्र२ (मू). संकुचिता । म४. गतिर्विलुलिता; म५. गतिर्विदलिता । म४.५. दन्ताश्च नाशं गता । ग्र१.४. म१.३. दन्तावली । —२) ना२. हृष्टिर् ( दृष्टिर् ) । तु. ना२. नस्यति । ग्र५. च बधिरं ( बधिरता ) । —३) म४.५. वाक्यं नैव करोति । म१.२. बान्धवजनैर् । ते१. भार्यापि ( भार्या न ) । मा१. शिश्रूषते । —४) तु. जरयाभिभूतपुरुषं; म४.५. जरसाभिभूतवपुषः ( पुरु°–°यसः ) । म४.५. पुत्रोऽप्यवज्ञायते ॥

भ. २१०३ (८३१); पञ्चतन्त्रे ३.११५ (४.७८); प्रसङ्गाभ° १७ । शा. ४१६१ । सुभा. पृ० ९६.१६ । सुर. पृ० ९७.५ (सभातरङ्गे) । सुभाषितार्णवे ३८.६७ ॥

*वर्णं सितं झटिति वीक्ष्य शिरोरुहाणां
स्थानं जरापरिभवस्य तदा पुमांसम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चण्डालकूपमिव दूरतरं तरुण्यः ॥ ७४ ॥

वर्णमिति । तरुण्यो युवतयः (पुंसां नराणां) जराया वृद्धत्वात्परिभवस्य तिरस्कारस्य स्थानं पदं [पुमांसं] शिरोरुहाणां केशानां सितं धवलं वर्णं रूपं वीक्ष्यावलोक्य झटिति सहसा (जगति लोके) तदा तस्मिन्काले आरोपितास्थिशकलं निक्षिप्तकीकसखण्डं चण्डालानामन्त्यजानां जनानां कूपमन्धुमिव दूरतरमतिदूरं परिहृत्य विसृज्य यान्ति गच्छन्ति । यथा लोके सज्जनाः अस्थिशकलाङ्कितचण्डालकूपं दूरतस्त्यजन्ति तथा तरुण्यश्च निजपुरुषमपि वृद्धं त्यजन्तीत्यर्थः ॥
[ वसन्ततिलका ]

[ म४.५. कोशयोर्नास्ति ] १) तु. श्वेतं पदं; ना२. वर्णं शितं; ना५. वर्णान्वितं ( वर्णं सितं )। तु. शिरसि; ना१.२. झटति; ना३.५. ग्र२.३. जगति; ते२. झडिति ( झटिति )। —२) तु. ग्र५. परे ( जरा- ) । तु. ना१. तदेव पुंसाम्; ना२. ग्र२.३. म१.२. तथैव पुंसाम्; ग्र४. तथा पुमांसम् । —३) ना३–५. रा. ते. म३. °तास्थिशतकं; ग्र५. °ताण्डशकलं । —४) तु. सु. ना२. चाण्डाल° ॥

भ. ६५९९ (३०५९); शतकावलौ १०६; सुभाष. ३१८ । पञ्चतन्त्रे ३.१९३ (४.७७) । शा. ४१४६ ( भर्तृ° ) । सुभा. पृ० ९५.१४ । सुर. पृ० ९७.६ ( भर्तृ° ) । सुभाषितार्णवे ३८.६८ ॥

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महा-
न्संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ७५ ॥

यावदिति ॥ यावत् इदं शरीरं देहः अरुजं रोगरहितं सत्स्वस्थम् सुखेन स्थितं भवति । यावज्जरा वार्धक्यं दूरतो दवीयसि काले भविष्यति । यावदिन्द्रियाणां चक्षुरादीनां शक्तिः स्वविषयग्रहणपाटवं अप्रतिहता अविहता भवति । यावदेवायुषो जीवितकालस्य क्षयो नाशश्च न भवति । तावदेव विदुषा धीमता आत्मनः स्वस्य श्रेयसि कैवल्ये महानपि प्रयत्नः श्रवणाद्युद्योगः कार्यः कर्तव्यः । यदा तु नैवं तदा श्रवणोद्योगो न सिध्यति । एतदेव दृष्टान्तमुखेन समर्थयति । भवने गृहे संदीप्ते दग्धे ( दह्यमाने ) कूपस्यान्धोः खननमवदारणं प्रत्युद्दिश्य उद्यम उद्योगः कीदृशः । व्यर्थ इत्यर्थः । यावत्तावच्छब्दाववधौ । गृहे वह्निना दह्यमाने कूपं निर्मास्यामि

तन्मूलेन जलेन वह्निं निर्वापयिष्यामीति यत्नो निरर्थक इत्यर्थः। साधनचतुष्टयं नाम नित्यानित्यवस्तुविवेकः इहामुत्रार्थफलभोगविरागः शमदमादिसाधनसंपत्तिर्मुमुक्षुत्वं चेति ॥ [ शार्दूलविक्रीडितम् ]

१) ना१. यावत्स्वस्तमिदं। म४.५. यावच्च दूरे जरा। —२) म४.५. °न्द्रियशक्तिर् ( °शक्तिर् )। —३) तु२. स्वात्मश्रेयसि; ते२. अत्र श्रेयसि। ग्र५. म२.५. विदुषां। —४) म४.५. आदीप्ते ( संदीप्ते )। तु१. हि ( तु )। तु२. ग्र४. कूपखनन–; ते२. कूपघननं ॥

म. ५४७९ (२४८३); सुभाष्. १२८। शा. ६७९ ( भर्तृ° )। विक्रमचरित्रे २१८। सूमु. ९८.४०। सुर. पृ० ३७.२ ( स्फुटश्लोके )। सुभा. पृ० १७८.१००७। सुभाषितार्णवे १५.२ ॥

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान्दारानुत परिचरामः सविनयम्।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसा-
न्न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ७६ ॥

तपस्यन्त इति ॥ तपस्यन्तस्तपश्चरन्तः। 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ्। सन्तो भवन्तः सुरनदीं भागीरथीं अधिनिवसामः। भागीरथ्यां निवसाम इत्यर्थः। 'उपान्वध्याङ्वस' इत्यधिकरणस्य कर्मसंज्ञायां द्वितीया। गुणैरानुकूल्यप्रतिपत्त्यादिभिरुदारान्महतो दारान्पत्नीः। 'पुंभूम्नि दाराः' इत्यमरः। उत अथ वा सविनयं विनयेन सह परिचरामः सेवामः [ महे ]। शास्त्राणां व्याकरणन्यायवैशेषिकवेदान्तभाट्टप्राभाकराणामोघान्प्रवाहान्पिबामो धयामः। उत विविधानि काव्यान्येवामृतरसान्पिबामः। जने लोके कतिपयनिमेषायुषि अल्पाक्षिपक्ष्मपरिस्पन्दा आयुर्यस्य तादृशि सति किं कुर्मो न विद्मः न जानीमः। प्राणिनां क्षणिकत्वं विचारयतां मनसि स्थिरकार्यारम्भो न रोचत इत्यर्थः ॥ [ शिखरिणी ]

१) ग्र१. म२. किमिति; म१. किमपि ( किमधि– )। —२) ना१. गुणोदारान्धारान्। ना१. परिचयामः स्वविषयान्; म४.५. परिसरामः सकुतुकम्। —३) सु. ना३–५. शास्त्रार्थानुत; म४.५. शास्त्राम्बून्युत। ग्र१. वदत ( विविध– )। —४) तु२. विद्मः ( विद्मः ) ॥

म. २४९३ (१००१) ॥

दुराराध्याश्चामी तुरगचलचित्ताः क्षितिभुजो
वयं च स्थूलेच्छाः सुमहति पदे बद्धमनसः।
जरा देहं मृत्युर्हरति दयितं जीवितमिदं
सखे नान्यच्छ्रेयो जगति विदुषोऽन्यत्र तपसः ॥ ७७ ॥

दुराराध्या इति ॥ तुरगवत् अश्व इव चलं लोलं चित्तं मनो येषां ते एते क्षितिभुजो राजानो दुराराध्या दुरुपासाः। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्'। स्थूला महती इच्छा वाञ्छा येषां ते तथाविधाः वयं च सुमहत्यधिके मोक्षलक्षणे फले बद्धमनसः आसक्तचित्ताः। जरा विस्रसा देहं शरीरं हरत्यपहरति। मृत्युर्मरणं दयितं वल्लभं जीवितं प्राणं हरति। हे सखे मित्र विदुषः सुधियः संकल्परहितात् तपसः कृच्छ्रचान्द्रायणादिरूपादन्यत्र श्रेयोलाभो जगत्यन्यन्नास्ति न विद्यते (अभावे विरक्तिः ?) [शिखरिणी]

१) तु. क्षितिभृतो। —२) ना१. महति च; ग्र३ (मू). स महति (सुमहति)। ना१.३–५. रा. ते२. ग्र२.३.५. म३. फले; त१. भवे (पदे)। ना२. दत्तमनसः। —३) ना२. देहे। ना१. सकलं (दयितं)। —४) ग्र४. सुखे (सखे)। ग्र२ (मू). जयति (जगति)॥

भ. २३८९ (११७५)॥

माने म्लायिनि खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने।
युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-
पूतग्रावगिरीन्द्रकन्दरतटीकुञ्जे निवासः क्वचित् ॥ ७८ ॥

मान इति ॥ माने चित्तसमुन्नतौ म्लायति नश्यति वसुन्यर्थे च खण्डिते विच्छिन्ने सति अर्थिनि याचके व्यर्थे निष्प्रयोजने प्रयाते गते सति बन्धुजने बान्धवसमूहे क्षीणे कृशे सति परिजने सेवके गते व्यपयाते सति यौवने [शनैः] (पुन)स्तारुण्ये नष्टे नाशं गते सति केवलमिदं वक्ष्यमाणमेव सुधियां विदुषां युक्तं न्याय्यम्। किं तदित्याह। यज्जह्नुकन्याया भागीरथ्याः पयसा जलेन पूता ग्रावाणः शिला यस्य तस्य गिरीन्द्रस्य हिमवतः यः कन्दरो गुहा तस्य दर्या विवरस्य कुञ्जे लतादिपिहितोदरे क्वचिदेकदेशे निवासो वसतिः। यदा मानस्य भङ्गो नास्ति वसु च प्रचुरतरमस्ति अर्थिनश्च याच्ञाभङ्गाभावात्संतुष्यन्ति परिजनाश्च संभाविताः क्वापि न गच्छन्ति यौवनं च न नश्यति तदानीं संसारोऽपि वरम्। अन्यथा सर्वसङ्गत्याग एव न्याय इत्यर्थः॥ [शार्दूलविक्रीडितम्]

१) तु२. म्लाने मानिनि। तु. ना२. व्यर्थं (व्यर्थे)। ग्र१. प्रयासेऽर्थिनि। —२) ना२. सखिजने (परिजने)। तु. भ्रष्टे (नष्टे)। तु२. शनियौंवने; ग्र२(मू). पुनर्यौवने। —३) सु३(मू). सुधिया; ग्र४. विदुषां (सुधियां)। —४) म४.५. पूरे वाथ (पूतग्राव°)। ना२. °करीन्द्र° (°गिरीन्द्र°)। म४.५. °मन्दर° (°कन्दर°)। तु. ना२. ग्र२.३.५. °दरी°; सु. °कुटी°; ग्र४. °नटी° (°तटी°)। तु. °कुक्षौ (°कुञ्जे)॥

भ. ४८२५ (२१८३); प्रसङ्गाभ° १०; सुभाष. ३१२। शा. ४१७८ (भर्तृ°)। सुभा. पृ० ३७६.२५४ (भर्तृ°)॥
नी० श० २१ (वै० श०)

रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली
रम्यं साधुसमागमागमसुखं काव्येषु रम्याः कथाः ।
कोपोपाहितबाष्पबिन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामुपगते चित्ते न किंचित्पुनः ॥ ७९ ॥

रम्या इति ॥ चन्द्रस्य सुधांशोर्मरीचयो रश्मयो रम्या मनोज्ञाः । तृणवती यवसवती वनान्तस्थली काननमध्यस्थलं रम्या । साधूनां सज्जनानां समागमः संगमो {साधूनां समागमस्य य आगमः प्राप्तिस्तेन यत्सुखं तदपि रम्यम्-सु-} रम्यः । काव्येषु कविकृतिषु कथाः प्रबन्धकल्पाः सुखतरं अतिशयेन शर्म यथा तथा रम्याः । कोपेन क्रोधेनोपाहिता निहिता बाष्पस्याश्रुणो बिन्दवः पृषन्ति यस्मिंस्तत्तरलं चञ्चलं प्रियाया वल्लभाया मुखं वदनं रम्यम् । इदं सर्वं नित्यानित्यवस्तुविवेकरहितानां रम्यम् । अनित्यत्वान्नश्वरत्वं अभ्युपगते अङ्गीकृतवति । कर्तरि निष्ठा । 'आदिकर्मणि क्तः कर्तरि च' । चित्ते पुनः चेतसि तु किंचिदल्पमपि न रम्यम् ॥ [ शार्दूलविक्रीडितम् ]

१) तु. कुसुमिता ( तृणवती ) । —२) ना२. ग्र२.३. म१. रम्यः ( रम्यं ) । ना१.५. रा. ते. ग्र१. म२. °गमागतसुखं; ना२. °गमोद्भवरसः; ना३.४. °गमोत्सवसुखं; ग्र२.३. °गमः सुखतरं; ग्र५. °गमोचितसुखं; म१. °गमोत्सवरसः; म३. °गमोन्नतसुखं (°गमागमसुखं) । ना१. काल्येषु (काव्येषु) । तु. गिरः (कथाः) । —३) ग्र१. कोपोल्लोहित°; म१-४. कोपोदाहित° । म३. °कलितं ( °तरलं ) । —४) ना१. रम्यं सर्वम् । सु. ग्र२.३. °ताभ्युपगते; ना१. °तामुपगतं; ग्र४. °ताभ्युपगमे; म२. °ताप्युपगमे ( °तामुपगते ) । तु. नित्यं; ना१. चित्रं; ना२. सर्वं; म३. वित्ते ( चित्ते ) ॥

म. ५७१७ (२५९०); सुभाष. ३१५ ॥

रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये ।
किं तु भ्रान्तपतंगपक्षपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥८०॥

रम्यमिति ॥ रम्यं रमणीयं हर्म्यतलं सौधपृष्ठं वसतये वासाय न किं, वासाय भवत्येव । गेयादिकं गानवाद्यप्रभृति श्राव्यं श्रवणयोग्यं न किं, भवत्येव । प्राणसमानानामसुतुल्यानां समागमः संगमः तेन सुखं शर्म अधिकप्रीतयेऽत्यन्तप्रमोदाय न वा किं भवति । एवंविधं सुखं किमिति त्याज्यमित्यत आह । किं तु उद्भ्रान्तश्चासौ पतंगश्चोद्भ्रान्तपतंगः तस्योद्भ्रान्तपतंगस्य शलभस्य पक्षपवनेन गरुद्वायुना व्यालोलस्य चञ्चलस्य दीपाङ्कुरस्य प्रदीपशिखायाश्छाया कान्तिरिव चञ्चलमस्थिरं सकलं सर्वं हर्म्यतलप्रभृत्याकलय्य विदित्वा सन्तो धीमन्तो वनान्तं काननमध्यं गताः प्राप्ताः । नान्ये ॥ [ शार्दूलविक्रीडितम् ]

१) ना५. रा. ते. श्रव्यं (श्राव्यं)। म२. गेयादि किं । —२) ग्र२ (मू). नैवा प्राणसमं । सु२. म१.४.५. °गमागम°; ना१. °गमागत° (°समागम°)। ते२. °सुतं (°सुखं)। ना३–५. रा. ते. ग्र२.५. नैवाधिक–। तु१. प्रीयते । —३) सु. म३. किं तूद्भ्रान्त°; ना१. किं भूभ्रान्त°; ग्र२(मू). किं तद्भ्रान्त°; ग्र३(मू). किंचिद्भ्रान्त°; ग्र४. किं नु भ्रान्त° । म४.५. पतत्पतङ्गपवन° । ग्र५. °व्याधूत° (°व्यालोल°)। —४) ग्र१. म१.२. °ज्वाला° (°च्छाया°) ॥

भ. ५७१४ (२५८९); काव्यकल्प° २६; नीतिसङ्क° ६७ । शान्तिशतके २.१४ । शा. ४११४ (भर्तृ°)। सु. ३३२६ । सूमु. १३१.५१ (विज्ञानात्मनः)। सुभा. पृ० ३७३.१८१ । सक. ५.६५.२ (पृ० ३२०; विज्ञानात्मनः)। सूहा. १९७.३६ (भर्तृ°) ॥

## वैराग्यशतके अष्टमपद्धतौ अधिकः ।

यथा स्रग्वी तूर्यैर्जनपरिवृतो वध्यपुरुषः
प्रयन्वध्यस्थानं निपतति विषादे प्रतिपदम् ।
तथा हे भोगस्था दिवसदिवसे मृत्युनिकटं
व्रजन्तो मा यूयं भवत विभवैर्दुःसमनसः ॥ १ ॥

[म ४.५. वैराग्य. ८.४]

## शिवार्चनम् ।

आसंसारं त्रिभुवनमिदं चिन्वतां तात ताद्दृ-
ङ्नैवास्माकं नयनपदवीं श्रोत्रमार्गं गतो वा ।
योऽयं धत्ते विषयकरिणीगाढगूढाभिमान-
क्षीबस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ८१ ॥

आसंसारमिति ॥ हे तात(जनक) इति लोकं संबोधयति । (आ संसारात् संसारः संसरणं जन्म आरभ्य आ संसारात् जन्मप्रभृतीत्यर्थः । 'आङ्मर्यादाभिविध्यो'रिति मर्यादायां अव्ययीभावः)। आसंसारं इति पाठे अभिविधावव्ययीभावः । आसंसारं सर्वस्मिन्संसार इत्यर्थः । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इत्यस्य 'पात्रादिभ्यः प्रतिषेधो वक्तव्य' इति प्रतिषेधात्स्त्रीलिङ्गत्वं नास्ति । 'न स पात्रयुगादिभि'रित्यमरः । इदमेतत्त्रिभुवनं चिन्वतां मृगयमाणानां अस्माकं नयनयोः पदवीं मार्गं वा श्रोत्रवर्त्म श्रवणपथं वा तादृक् तथाविधः पुरुषो नागतो न प्राप्तः। (पीवर?) तथाविधं पुरुषं क्वापि न पश्यामो न च शृणुम इत्यर्थः । तादृगिति कीदृगित्याकाङ्क्षायामाह । योऽयमीदृक्पुरुषो विषयाः शब्दादय एव करिण्यः करेणवस्तासु गाढं नितान्तं गूढेन लीनेनाभिमानेन प्रणयेन । 'अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयो'रित्यमरः । तेन क्षीबस्य मत्तस्यान्तःकरणस्य चित्तस्यैव करिणो वारणस्य संयमाय बन्धनायालानलीलां स्तम्भोपमां धत्ते बिभर्ति । विषयेषु स्वेच्छया वर्तमानं मनोमातङ्गं निरोद्धुं केनापि न शक्यत इत्यर्थः ॥ [मन्दाक्रान्ता]

१) ना२. रा. ते२. ग्र२.३. म२.५. आ संसारात्; ते१. आसंसा-। तु. तात तावन्; ग्र४. म४.५. तादृशानां; म३. चान्वितादृङ्।—२) ग्र२.३. मैवास्माकं। तु१. ग्र१. म१.२.४.५. श्रोत्रवर्त्मागतो वा; तु२. गोत्रवर्त्मां गतो वा।—३) ग्र१. म१.२. विषमकरिर्णीं; म३. विनयकरिणी°। तु. म३.५. गाढरूढा°; ना२. ग्र४. गूढगाढा°।—४) ग्र३ (मू). °क्लीबस्यान्तः°; म३. °क्रीडस्यन्तः°; म५. °क्षीणस्यान्तः°। तु. °करिणां; ग्र२ (मू). °किरणः। तु. संयमालानलीनम्; रा. ते. संयमानायलीलाम्; म५. संयमालानलीला ॥

भ. १०६० (४०१)। शा. ४१०५ (भर्तृ°)। सुभा. पृ० ३६९.६१ ॥

यदेतत्स्वच्छन्दं विहरणमकार्पण्यमशनं
सहार्यैः संवासः श्रुतमुपशमैकव्रतफलम्।
मनो मन्दस्पन्दं बहिरपि चिरस्यापि विमृश-
न्न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ८२ ॥

यदिति ॥ यदेतत् स्वच्छन्दं निरवग्रहं विहरणं परिभ्रमः। अकार्पण्यं दैन्यरहितं अशनमन्नम्। आर्यैः सज्जनैः सह संवासो वसतिः। उपशमः शान्तिरेकं व्रतमेव फलम्। यस्य तत्तादृशं श्रुतं शास्त्रं बहिः शरीरादौ बाह्ये। आत्मव्यतिरिक्त इत्यर्थः। मन्दस्पन्दं मलयसंचारं मनो मानसमिति यत् सर्वं एषा उदारस्य महतः कस्य तपसः परिणतिः फलमिति चिरस्य चिरकालं विमृशन्विचारयन्नपि न जाने न वेद्मि। स्वच्छन्दविहरणादिकमुक्तं पञ्चविधं सर्वेषां तपःफलानामुत्कृष्टमित्यर्थः ॥ [ शिखरिणी ]

१) तु२. विरहणम् ( विहरणम् )। ना२. अपायस्य शमनं; ग्र२(मू). अकार्पण्यशमनं।—२) तु. साहाय्ये; सु. ना१. ग्र४. म१.३-५. सहाय्यैः; ग्र१. सहाय्यः; म२. सहायः ( सहार्यैः )। तु. चारण्ये; म५. संवादः (संवासः)।—३) ग्र१. म२. बहिरति-। ना२. च कस्यापि (चिरस्यापि) ॥

भ. ५२५६ (४८२१)। सुभा. पृ० ३६८.४६ ॥

जीर्णा एव मनोरथाश्च हृदये यातं च तद्यौवनं
हन्ताङ्गेषु गुणाश्च वन्ध्यफलतां याता गुणज्ञैर्विना।
किं युक्तं सहसाभ्युपैति बलवान्कालः कृतान्तोऽक्षमी
हा ज्ञातं मदनान्तकाङ्घ्रियुगलं मुक्त्वास्ति नान्या गतिः ॥८३॥

जीर्णा इति ॥ हृदये मनसि मनोरथा अभिलाषाश्च जीर्णा विशिथिलाः। तत्तथा प्रसिद्धं यौवनं तारुण्यं च यातं गतम्। च अङ्गेष्ववयवेषु गुणा रूपादयश्च गुणज्ञैर्गुणविद्भिः विना वन्ध्यफलतां व्यर्थफलत्वं याता गताः। बलवान्महान्कालः समयः सहसा शीघ्रमभ्युपैति समागतः। कृतान्तो यमः अक्षमी असहनः। हन्त खेदे। युक्तं किम्। मदनान्तकस्य परमेश्वरस्याङ्घ्रियुगलं पादयुग्मं मुक्त्वा त्यक्त्वा अन्या अपरा गतिः शरणं नास्ति ॥ [ शार्दूलविक्रीडितम् ]

१) तु. ना२. स्वहृदये (च हृदये)। ग्र१. म१.२. यातं तु । —२) तु. ग्र१. म१–४. मे विफलतां (वन्ध्यफलतां) —३) तु. व्यक्तं तत्; ग्र५. युक्तं तत् । ना२. ग्र३ (मू). म२. °भ्युपेति; म३. °प्युपैति । तु. कृतेऽर्थेऽक्षमी; ना२. हि लोकान्तकृत् (कृतान्तोऽक्षमी)। —४) तु१. हाः सातं; सु. ग्र३. ह्यज्ञातं; ना१. ह्याज्ञातं; ना२. भो ज्ञातं; ग्र२. ह्यज्ञानान्; म४.५. हा ध्यातं । ना२. त्रिपुरान्तकाङ्घ्रि° । सु. ना२. °युगुलं ॥

भ. २४२५ (९७६) ॥

*महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि ।
न वस्तुभेदप्रतिपत्तिरस्ति मे तथापि भावस्तरुणेन्दुशेखरे ॥८४॥

**महेश्वर इति ॥ जगतां लोकानामधीश्वरे प्रभौ महेश्वरे शंभौ वा जगतां लोकानामन्तरात्मन्यन्तर्यामिनि जनार्दने विष्णौ वा {वस्तुभेदप्रतिपत्तिः अयं महेश्वरोऽयं जनार्दन इति वस्तुगोचरभेदबुद्धिर्नास्ति-रा-} वस्तुतः परमार्थतः भेदप्रतिपत्तिः पृथक्त्वबुद्धिर्मे मम यद्यपि नास्ति तथापि तरुणेन्दुशेखरे बालचन्द्रमौलौ भावो भक्तिः। 'एक एव रुद्रो न द्वितीयाय तस्थ' इति श्रुतिरेव रुद्रस्यैक्यं समर्थयति । संरक्षित वहुस्यां ये ये(?) इति च तस्य लीलाविग्रहान्वक्ति । तस्माद्विग्रहाणामेव भेदो न तु वास्तवः ॥** [वंशस्थम्]

[तु. म४.५. कोशेषु नास्ति] १) ग्र१.४. म१–३. पिनाकिनि प्राणभृतां प्रणायके (ग्र४. मूलवदपि)। —३) ग्र२ (मू). °पत्तिरस्तु मे । —४) ना३–५. रा. ते. ग्र५. तथापि भक्तिस्; म१–३. तथा विभावस् ॥

भ. ४७७५ (२१५९); प्रसङ्गाभ° ९. । दण्डिकृतकाव्यादर्शस्य टीकायां १.७३ (पृ० ७९) ॥

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः ।
भवाभोगोद्विग्नाः शिव शिव शिवेत्युच्चवचसः
कदा यास्यामोऽन्तर्गतबहुलबाष्पाकुलदृशः ॥ ८५ ॥

**स्फुरदिति ॥ स्फुरन्त्या उज्ज्वलया स्फारया महत्या ज्योत्स्नया चन्द्रिकया धवलितं पाण्डरीकृतं तलं स्वरूपं यस्य तस्मिन् द्युसरितः सुरनिम्नगायाः क्वापि कुत्रचित् पुलिने सैकते शान्तध्वनिषु निःशब्दासु रजनीषु निशासु सुखेन आसीना उपविष्टाः भवस्य संसारस्य आभोगाद्विस्तारादुद्विग्नाः शिव शिव इति {उच्चवचसः उच्चतराणि वचांसि आक्रन्दनवचनानि येषां ते तथोक्ताः-रा-} (आत्तं उक्तं वचो वाक्यं येषां ते तादृशाः) [अन्तर्गतबहुलबाष्पाकुलदृशः अन्तःस्तम्भितप्रभूतबाष्पाभिव्याप्तदृशः] (आनन्देन हर्षेणोद्गतो यो बाष्पोऽश्रु तेन प्लुते क्लिन्ने दृशौ नयने येषां तादृशाः) कदा कस्मिन्काले [यास्यामः गमिष्यामः] (स्याम भवाम । अस्तेर्लिङ्रूपम्) ॥** [शिखरिणी]

१) तु. स्फुरच्चन्द्र°; अ२(मू). स्फुरत्स्फूर° । —२) ना२. ते२. म४. सुखासीनः । ते१. शान्ता । —३) ते२. °द्विप्राः । सु३. शिवेत्युच्छ°; ना२. ते. अ२.३. म४. शिवेत्यार्त°; म३. शिवेत्युक्त°; म५. शिवेत्यात्त° । —४) तु. कदा स्यामोऽनन्दामृत°; सु. ना १.२. अ२.३. म४.५. कदा स्यामानन्दोद्गत°; अ१. म१.२. कदा नु स्यामोन्तर्गत°; म३. कदा स्यामोन्तर्गत° । ना२. म. °बहल° । अ२.३. म४. °वाष्पाप्लुत° । ना३–५. ते२. °दृशाम्; रा. ते१. °दशाम्; रा(टी. पा.) °दशम् ॥

भ. ७२५४ (३२१७) ॥

वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः
स्मरन्तः संसारे विगुणपरिणामां विधिगतिम् ।
कदा पुण्यारण्ये परिणतशरच्चन्द्रकिरणा-
स्त्रियामा नेष्यामो हरचरणचिन्तैकशरणाः ॥ ८६ ॥

**वितीर्णे इति ॥ सर्वस्मिन्स्वधने वितीर्णेऽर्थिभ्यः प्रतिपादिते सति । तरुणकरुणापूर्णहृदयाः कोमलदयापूरितचित्ताः संसारे भवे विगुणो विरसः परिणामः [परिपाको यस्यास्तां विधिगतिं दैवप्रवृत्तिं] (परिपाकोऽवधिर्मर्यादा यासां ता गतीर्वृत्तीः) स्मरन्तः चिन्तयन्तः । कदा कस्मिन्काले पुण्ये पवित्रेऽरण्ये वने हरस्य परब्रह्म तस्य शंभोश्चरणयोः चिन्ता स्मरणमेकमेव शरणं रक्षितृ येषां ते सन्तो वयं परिणताः शरत्संबन्धिनश्चन्द्रस्य सुधांशोः किरणा मयूखा यासु तास्त्रियामाः क्षणदाः नेष्यामो गमि [गमयि] ष्यामः । यदा धनसंचयोऽस्ति यदा प्राणिषु दया नोदेति यदा संसारे विरसावसाना गतीश्च न स्मरति तदानीं पुण्यारण्ये शिवचिन्तै(न्तै)कपरा न भवन्तीत्यर्थः ॥ उक्तं च ॥ "यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावन्तोऽस्य निहन्यन्ते हृदये शोकशङ्कवः" इति । सर्वेषां शोकशङ्कूनां मध्ये धनसंबन्धः प्रथमः शोकशङ्कुः । तदाद्याः पुत्रमित्रकलत्रादयः शोकशङ्कवो यदा न सन्ति तदानीमीश्वरचिन्तालक्षणे धर्मे मतिरुत्पद्यते । दयापि (यदापि) तादृग्विधेयधर्मे मतिरुत्पद्यते तथा च "अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधन"मिति । सांसारिकाणां व्यापाराणां दुरन्ततां ये विजानन्ति तेषामपि तादृग्विधे धर्मबुद्धिरुत्पद्यते । सर्वस्मिन्नपि कर्मणि दोषदर्शनादेव जिहासा जायत इत्यर्थः ॥** [ शिखरिणी ]

१) अ१.४. म४.५. विशीर्णे; म२. दृशार्णे (वितीर्णे) । म२.३. करुण° (तरुण°) । अ१. म१.२. °करुणार्द्रार्द्र°; म३. °तरुणापूर्ण° । ते२. °हृदयः । —२) ते२. सरन्तत्–; अ१. म२. तरन्तः (स्मरन्तः) । अ१. म२. संसारं । ना२. त्रिगुण° (विगुण°) । तु. ना ३–५. अ२–४. °परिणामावधि; अ१. °परिणामावधिर्; म१. °परिणामा विधि°; म२. परिणामा विधिर् । ना ३–५. अ २.३. वयं; अ१. म२. इति; म१. °गतीः (°गतिम्) । —३) रा. ते. अ५. वयं (कदा) । अ १–४. म. पुण्येऽरण्ये । ना२. परिणित–; ना ४.५. परिगत–(परिणत–) । तु. °किरणे; ना १.२. अ३. °किरणा; अ१. म १.२.५. °वदनास्; म३. °शिशिरास्; म४. °वदनां (°किरणास्) । अ४. म.२.४.५. त्रियामां । तु. न्येस्यामो; म२. एष्यामो । —४) ना३. अ१. म२. हरि–(हर–) । तु. सु१. ना३–५. ते. अ३(मू). °चित्तैक°, सु२.३. °वित्तैक° (°चिन्तैक°) ॥

भ. ६०६८ (२७८९)॥

कदा वाराणस्याममरतटिनीरोधसि वस-
न्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।
अये गौरीनाथ त्रिपुरहर शंभो त्रिनयन
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥ ८७॥

कदेति॥ वाराणस्यां काशीक्षेत्रे अमरतटिनीरोधसि भागीरथीकूले वसन् कौपीनं कक्षपटं वसानः परिदधानः सन् शिरसि मूर्ध्नि अञ्जलिपुटं अञ्जलिमेव पुटं निदधानो निक्षिपन् अये गौरीनाथ पार्वतीपते त्रिपुरहर पुररिपो शंभो सुखजन्मभूमे त्रिनयन विषमलोचन प्रसीद प्रसन्नो भव इति क्रोशन्क्रन्दन्दिवसान्वासरान्निमिषमिव क्षणमिव अक्षिपरिस्पन्दपरिमितकालमिव कदा नेष्यामि। वीतरागस्य भागीरथीकूलमाश्रितस्य शंभावासक्तचित्तस्य मम कालः कदा सुखेन गमिष्यतीति कविराशास्ते॥ [शिखरिणी]

१) ना२. °ममरतटनी°; ग्र५. मरतकतटिनी°। म५. °तटिनीतीरनिवसन्। —२) म३. विनिधायाञ्जलि°। —३) ग्र३ (मू). त्रिणयन। —४) तु. ना२. रा२. प्रसीदेत्याक्रोशन्॥

भ. १५२५ (५९४); कुवलयानन्दे १८९। सुभा. पृ० ३६९. ५९। सुर. पृ० २९७. ९८ (भर्तृ°)। साहित्यदर्पणे ३ (पृ० १९४)। सक. ५. ६०. ४ (पृ० ३१७; विश्वेश्वरस्य)॥

स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो त्वां
ध्येये ध्यानं निवेश्य क्षितिधरकुहरग्रावपर्यङ्कमूले।
आत्मारामः फलाशी गुरुवचनरतस्त्वत्प्रसादात्स्मरारे
दुःखं मोक्ष्ये कदाहं समकरचरणे पुंसि सेवासमुत्थम्॥८८॥

स्नात्वेति॥ गाङ्गैर्गङ्गासंबन्धिभिः। तस्येदमित्यण्। पयोभिर्वारिभिः स्नात्वा आप्लुत्य शुचिभिः पवित्रैः कुसुमैः करवीरकमलादिभिः फलैः बदरादिभिः। हे विभो स्वामिन् स्मरारे मदनरिपो त्वां भवन्तमर्चयित्वा संपूज्य। क्षितिधरस्य पर्वतस्य कुहरं गुहा तस्य ग्रावा शिलैव पर्यङ्कः शयनं तस्य मूले तले आत्मारामः सन् फलाशी सन् गुरोः देशिकस्य वचने वाक्ये रतः सन्नहं ध्येये ब्रह्मणि परमेश्वरं ध्यानं चिन्तां निवेश्य निधाय त्वत्प्रसादात् समकरचरणे समानहस्तपादे { मकरेण मकराकाररेखया सह वर्तत इति समकरश्चरणो यस्य तस्मिंस्तथोक्ते-रा-} पुंसि पुरुषे सेवासमुत्थं श्ववृत्तिसमुद्भूतं दुःखं पीडां कदा कस्मिन्काले मोक्ष्ये त्यक्ष्यामि। सांसारिकदुःखत्यागे ईश्वरप्रसादः कारणम्॥ [स्रग्धरा]

१) तु. °चयैर्; ग्र४. °शतैर् (°फलैर्)। ग्र१. म४.५. निवेद्य (विभो त्वां)। —२) तु. ध्यायन् चित्ते; सु. ना१. ग्र४. ध्याये ध्यानं; म४.५. ध्यायं ध्यायं। ना१. निविश्य; ना२. विशेष्य;

म३. निषेव्य; म४.५. भवन्तं ( निवेश्य )। म. °ग्राम-( °ग्राव- )। —३) तु. आत्मारामोपलीनो; ग्र२.३. आत्मारामो फलाशी । ग्र५. °वचनपरस्; म३. °वचनगतस्। तु१. कृत्पुरस्तात्; तु२. त्वत्पुरस्तात् ( त्वत्प्रसादात् ) । तु. सु. म३. पुरारे; ना३.४. मुरारे ( स्मरारे )। —४) ग्र२( मू ). मोक्षे । तु१. कदा हे । तु. स्मरहरचरणे; ग्र४. करचरणसमे । ना२. °समुद्धम्; ग्र१. °समर्थः ( °समुत्थम् ) ॥

भ. ७२३८ (३३१३) ॥

एकाकी निःस्पृहः शान्तः पाणिपात्रो दिगम्बरः ।
कदा शंभो भविष्यामि कर्मनिर्मूलनक्षमः ॥ ८९ ॥

एकाकीति ॥ शं सुखं अस्माद्भवतीति शंभुः तस्य संबोधनं हे शंभो । एकाकी सहायरहितः निःस्पृहो वाञ्छारहितः शान्तः क्रोधादिरहितः पाणिर्हस्त एव पात्रं भिक्षाभाजनं यस्य तथाभूतो दिगम्बरः काष्ठावसनः। नग्न इत्यर्थः। एवंविधो भूत्वा कर्मणां विहितनिषिद्धकाम्यानां निर्मूलने नाशने क्षमः शक्तः कदा कस्मिन्काले भविष्यामि भवितास्मि । ईदृग्विधो ज्ञानपरिपाकः कदा मे सुखं भविष्यतीत्यर्थः ॥ [ अनुष्टुप् ]

१) तु. सु. ग्र३.४. म. निस्पृहः; ग्र ५. निर्ममः । तु. शान्तो ॥

भ. ३३९९ (५४१); सुभाष्. ३१४ । सु. ३४०४ ॥

पाणिं पात्रयतां निसर्गशुचिना भैक्षेण संतुष्यतां
यत्र क्वापि निषीदतां बहुतृणं विश्वं मुहुः पश्यताम् ।
अत्यागेऽपि तनोरखण्डपरमानन्दावबोधस्पृशा-
मध्वा कोऽपि शिवप्रसादसुलभः संपत्स्यते योगिनाम् ॥ ९० ॥

पाणिमिति ॥ पाणिर्हस्तः [तं] पात्रयतां पात्रं कुर्वतां निसर्गेण स्वभावेन शुचिना शुद्धेन भैक्षे(क्ष्ये)ण भिक्षासमूहेन संतुष्यतां परितोषयतां[ परितुष्यतां ] यत्र क्वापि यत्र कुत्रचित्प्रदेशे निषीदतां निषण्णानां मुहुः पुनः विश्वं प्रपञ्चं बहुतृणं तृणकल्पं यथा भवति तथा पश्यतां द्रष्टॄणां तनोः शरीरस्यात्यागेऽविसर्जनेऽपि योगिनां महात्मनां { अखण्डोऽपरिच्छिन्नो यः परमानन्दो ब्रह्मानन्दस्तस्यावबोधमनुभवं स्पृशन्तीति तथोक्तानां शिवप्रसादेन सुलभः कोऽप्यनिर्वाच्योऽध्वा संपत्स्यते संपन्नो भवति-रा-} ( स्पृहामिच्छां मत्वा स्मृत्वा ) कोऽप्यनिर्वाच्यः शिवप्रसादसुलभः शिवानुग्रहसुलभः अखण्डपरमानन्दावबोधः निरन्तरपरमानन्दज्ञानं संपत्स्यते उत्पत्स्यते ॥ [ शार्दूलविक्रीडितम् ]

१) तु २. ग्र३( मू ). पाणिः; म५. पाणी । ना१.२. °शुचिनां; ते२. °सुचिना । सु. ना१.२. ते. ग्र१.२. भैक्ष्येण । —२) तु१. निषादतां; ना२. निषेचतां ( निषीदतां ) । —३) तु १. आत्या-

गेऽपि; ना२. आयोगेऽपि । ना१–४. प्र३.५. °स्पृहाम्; ते२. °स्पृशो ( °स्पृशाम् ) । —४) तु १. लब्ध्वा; तु२. लब्धा; सु. मध्ये; ना२. प्र२.३.५. मत्वा; ते२. मद्वा; प्र१. अद्धा ( अध्वा ) । तु. °सुलभे; प्र१.२. °सुलभाः । प्र२ ( मू ). संपद्यते ॥

भ. ४०२१ (१७५४) । सक. ५. ६७. १ (पृ० ३२१; नंन्नाचार्यस्य) ॥

## वैराग्यशतके नवमपद्धत्यन्ते अधिकः ।

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥ १ ॥

[ म. ४.५. वैराग्य. ९.४ ] [ भ. ८४४ (३०९) । शा. ४१०२ (भर्तृ°) । क्षेमेन्द्रस्यौचित्यविचारचर्चायां (का० १. पृ० १३१. उत्पलराजस्य) । उदाहरणचन्द्रिकायां । दण्डिनः काव्यादर्शे २. २९१ टीकायाम् । सु. ३४१३ ( श्रीहर्षदेवात्मजवाक्पतेः ) । अलंकारशेखरे २० (का० ५०. पृ० ७५) । काव्यप्रदीपे (का० २४. पृ० १०५) । काव्यप्रकाशे ४. ४४ । सुभा. पृ० ३६८. ४० (भर्तृ°) । रसरत्नप्रदीपिकायाम् । वाग्भटस्य काव्यानुशासने ५ (का० ४३. पृ० ५७) । सक. ५. ६०. ५ ( पृ० ३१७, मुञ्जस्य ) । पद्यरचनायां ( का० ८९. पृ० ९२. ६२, भर्तृ° ) ]

## अवधूतचर्या ।

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी
नैश्चिन्त्यं निरपेक्षभैक्षमशनं निद्रा श्मशाने वने ।
स्वातन्त्र्येण निरङ्कुशं विहरणं स्वान्तं प्रशान्तं सदा
स्थैर्यं योगमहोत्सवेऽपि च यदि त्रैलोक्यराज्येन किम् ॥९१॥

कौपीनमिति ॥ शतखण्डजर्झ[र्ज]रतरं अनेकखण्डैरतिशयेन जर्जरं कौपीनं खण्डवसनं यद्यस्ति । कन्था पुनः कन्था तु तादृशी तथा जर्जरतरा यदि । नैश्चिन्त्यं चिन्तारहितं निरपेक्षमपेक्षारहितं भैक्षं भिक्षासंबन्ध्यशनमन्नं यदि । श्मशाने पितृवने अरण्ये वा निद्रा स्वापो यदि । स्वातन्त्र्येण स्वतन्त्रतया निरङ्कुशं निरर्गलं यथा तथा विहरणं विहारो यदि । प्रशान्तं प्रकृष्टशमयुक्तं स्वान्तं चित्तं यदि । सदा संततं योगमहोत्सवे योगमहामहे स्थैर्यं स्थिरता यदि । त्रैलोक्यस्य भूर्भुवः-सुवर्लोकरूपस्य राज्येन किं, किं फलमित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) तु२. ना१. प्र२–५. °जर्झरतरं; ते. °झर्झरतरं । —२) ते२. प्र२ ( मू ). नैश्चित्यं; म४.५. संशुद्धं ( नैश्चिन्त्यं ) । ना२. प्र२ ( मू ). निरपेक्ष्य° । ना२. प्र२. °भैक्ष्यम् । तु. सु. ना१.२. स्मशाने । —३) ना१.२. स्वातन्त्रेण । म३. यदा ( सदा ) । —४) प्र१. म. धैर्यं ( स्थैर्यं ) । प्र५. °त्सवेषु । प्र४. न ( इत्यपि ); म४. च ( ऽपि ) । तु. च यता; म४.५. यदिदं ( च यदि ) ॥
नी० श० २२ (वै० श०)

म. १९५६ (७५७); प्रसङ्गाभ° ९। सुभा. पृ० ३७१. १११ ॥

ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः।
शफरीस्फुरितेनाब्धिः क्षुब्धो न खलु जायते ॥ ९२ ॥

ब्रह्माण्डेति ॥ मनस्विनो विरक्तस्य ब्रह्माण्डमण्डली ब्रह्माण्डस्य वलयं, तस्य मात्रे मात्रा परिमाणं यस्य तद्ब्रह्माण्डमण्डलीमात्रं तदपि लोभायाभिलाषाय किम्। मनस्वी जनो ब्रह्माण्डमण्डलपरिमितमपि वस्तु नाभिलष्यति। एतदेव दृष्टान्तमुखेन समर्थयति। अब्धिः समुद्रः शबर्याः प्रोष्ठ्याः स्फुरितैरुत्पातनैः। 'प्रोष्ठी तु शबरी द्वयो'रित्यमरः। क्षुब्ध आविलः जातु कदाचिदपि न जायते न भवति ॥ [अनुष्टुप्]

१) ना ३–५. रा. ते. ग्र५. म१.४. ब्रह्माण्डं; म३.५. ब्रह्मण्ड°। —२) तु. ना१.२. म३. भोगाय; सु. लाभाय; ग्र२(मू). लोकाय (लोभाय)। म३. मनस्विना; म४. मनस्विनाम्। —३) तु१. °स्फुरतेनाब्धेः; तु२. ना२. °स्फुरितेनाब्धेः; ग्र१. म१.२. °क्षुभितेनाब्धेः; ग्र२(मू). °स्फुरितैरब्धिः; म४. °स्फुरितेनाब्धौ; म५. °क्षुभितेनाब्धौ। —४) तु १. क्षुब्धतां जातु; तु२. म४.५. क्षुब्धता जातु; ना२. ग्र५. क्षुब्धता नैव; ग्र१. क्षुब्धता किं न; ग्र२.३. क्षुब्धो जातु न; म१.२. क्षुब्धता किं नु (क्षुब्धो न खलु) ॥

म. ४४९६ (१९९३)। शा. २६३ (भर्तृ°)। सु. ४९५ (भर्तृ०)। सूमु. ७. १ (भर्तृ°)। सुभा. पृ० ७९. ३ (भर्तृ°)। सभातरङ्गे ४३. २२ (भर्तृ°) ॥

मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणी मा स्म भू-
र्भोगेषु स्पृहयालवस्तव वशे का निःस्पृहाणामसि।
सद्यःस्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृतै-
र्भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे ॥ ९३ ॥

मातरिति ॥ हे मातर्जननि लक्ष्मि हे श्रीः त्वमपरमन्यं कंचित्कंचन पुरुषं भजस्व प्राप्नुहि। मत्काङ्क्षिणी मामपेक्षिणी मामपेक्षमाणा मा स्म भूर्मा भवः। भोगेभ्यः सुखेभ्यः स्पृहयालवः। 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्'। स्पृहयन्त इत्यर्थः। 'स्पृहेरीप्सित' इति संप्रदानसंज्ञायां भोगेभ्य इति चतुर्थी। तव वशे {त्वदायत्ततायां वर्तन्त इति शेषः-रा-} (तव वशास्त्वदधीना इत्यर्थः)। वशः कान्तिरिच्छेति यावत्। निःस्पृहाणां भोगस्पृहारहितानां त्वं कासि। तुच्छेत्यर्थः। सद्यः सपदि स्यूते प्रसेविते पलाशपत्राणां किंशुकपर्णानां पुटिकायां पुट एव पात्रे भाजने पवित्रीकृतैः। 'अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः'। 'अस्य च्वा'वितीत्वम् ॥ तथा च स्मृतिः। कारु हस्तः शुचिः पण्यं भैक्षं योषिन्मुखं तथा इति। भिक्षासक्तुभिः भिक्षाभूतयवचूर्णैरेव संप्रतीदानीं वयं वृत्तिं जीवनं समीहामहे इच्छामः। सद्यःस्यूतशब्देन कस्यचिदपि वस्तुनः संग्रहो नास्तीति सूचितम्। संग्रहरहिता वीतरागा लक्ष्मीं नाद्रियन्त इत्यर्थः ॥ [शार्दूलविक्रीडितम्]

१) ते२. मातुर्लक्ष्मि; ग्र१. म२. लक्ष्मीरम्ब । सु. ते. कं चिदपरं; म४. किंचिदपरं । ना१. मत्काङ्क्षणी । —२) तु. ग्र१–३. म१–३. भोगेभ्यः । ना२. °स्तविवशे । सु. ना३.४. ग्र२–४. वशाः (वशे)। ग्र४. के (का)। म. निस्पृहाणाम् । सु. ग्र४.५. अपि (असि)। —३) ना१. ग्र४. सद्यश्शूत°; ते१. सत्यः स्यूत°; ग्र२(मू). यद्यःस्यूत° । ना२. °पलाशपात्र°; ते२. °फलाशपत्र° । ते१. °पुटकापात्रैः; म४. °पुटिकापात्री° । तु. सु. ग्र१.३. °पवित्रीकृते । —४) ना३–५. रा. ते. भिक्षावस्तुभिरेव । ना२. समीहाम ये; म४. समीक्षामहे ॥

भ. ४७८७ (२१६४); काव्यक° ३३; नीतिसंक° ८५; सुभाष. ३१२ । शान्तिशतके ४.११ (हे. ४२७) । सुर. पृ. ८७. ११ (भर्तृ°) । सुभा. पृ० ३७०. १०२ (भर्तृ°) ॥

महीशय्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ९४ ॥

महीति ॥ विरतिः संसारान्निवृत्तिः सैव वनिता वधूः तस्याः सङ्गेन संपर्केण मुदितो हृष्टो मुनिर्वाचंयमः शान्तः कामक्रोधादिविहीनः सन् अतनुभूतिरविकलैश्वर्यो नृप इव राजवत् सुखं यथा भवति तथा शेते स्वपिति । ननु राज्ञः शय्योपधानादयः सन्ति । मुनेः शय्योपधानादयः कथं सन्तीत्यत आह । महीशय्या भुवनमेव शय्या शयनम् । (अथ वा गुर्वी महती भूमिरेव) शय्या शयनार्हा । 'अचो यत्' । विपुलं विस्तृतमुपधानमुपबर्हो भुजलता भुजवल्लिरेव । वितानमुल्लोचश्च आकाशं गगनमेव । व्यजनं तालवृन्तकं अनुकूलः शैत्यमान्द्यसौरभैर्मनोरमोऽयमनिलः मारुत एव । स्फुरन्प्रकाशमानो दीपः प्रदीपोऽपि चन्द्रः सुधाकर एव । महाविभवानां राज्ञां यत्सुखमस्ति तद्वीतरागाणाम[प्य]स्तीत्यर्थः ॥ [ शिखरिणी ]

१) तु१. मही गुर्वी शय्या; तु२. मही शय्या वर्या; सु. ग्र२–४. मही शय्या गुर्वी; ना१. मही शय्या स्वीया; ना२. मही शय्या शिष्टा; ना३–५. रा. ते. महाशय्या पृथ्वी । ना२. ग्र१. मृदुलम्; म. विततम् (विपुलम्)। ग्र४. भुजतलं । —२) सु. ग्र५. चाकाशो; ग्र४. म१.२.४.५. त्वाकाशं । ना२. व्यजनयमकूलो । —३) तु१. स्फुरद्दीपश्चन्द्रो; ना५. रा. ते. शरचन्द्रो दीपो । —४) ना२–५. रा. ते. ग्र५. सुखी (सुखं)। तु२. शान्तश्चेतो । तु२. मुनिरतनुभूतो; ना२. युतिरतनुभूतिर्; म१.२.४.५. तनुविभवभूमिर्; म३. यतिरतनुभूतिर् ॥

भ. ४७७२ (२१५६); नीतिसङ्क° ८४; शतकावली ३६; सुभाष. ३१४ । शान्तिशतके ४.८ (हे. ४२६) । सुर. पृ० २९६. १७ (भ.) । सुभा. पृ० ३६८. ५४ । सक. ५.६२. ४ (पृ० ३१८; भवभीतस्य) ॥

भिक्षाशी जनमध्यसङ्गरहितः स्वायत्तचेष्टः सदा
हानादानविविक्तमार्गनिरतः कश्चित्तपस्वी स्थितः ।
रथ्याकीर्णविशीर्णजीर्णवसनः संप्राप्तकन्थासनो
निर्मानो निरहंकृतिः शमसुखाभोगैकबद्धस्पृहः ॥ ९५ ॥

भिक्षाशीति ॥ भिक्षाशनव्रतः । 'व्रते' इति णिनिः । जनानां लोकानां मध्ये अन्तः सङ्गरहितो निःसङ्गः [ स्वायत्तचेष्टः स्वाधीनव्यापारः ] ( स्वायत्तवेषः आत्माधीनाकल्पः ) [ सदा सर्वदा ] हा(दा)नं त्यागः उपादानं ग्रहणं ताभ्यां विविक्ते विरहिते मार्गे पथि निरत आसक्तः रथ्यासु प्रतोलीषु [कीर्णानि विक्षिप्तानि विशीर्णानि विशकलितानि जीर्णवसनानि पुरातनवस्त्राणि यस्य स तथा ] ( क्षीणानि जीर्णानि कैश्चिद्दत्तानि च चीराणि वासःखण्डा एव वसनानि यस्य सः ) संप्राप्तं कन्थामयमासनं पीठं यस्य सः निर्मानो मानात्प्रेम्णो निष्क्रान्तः निरहंकृतिरहंकाररहितः । शमः शान्तिरेव सुखं शर्म तस्या भोगो विस्तारः तत्रैकस्मिन्नेव बद्धा संदानिता स्पृहा ईहा येन सः । एवंविधो भूत्वा स्थितो यः कश्चिच्चण्डालो वा शूद्रो वा द्विजो वा भवतु स एव तपस्वी तापसः ॥ [ शार्दूलविक्रीडितम् ]

१) तु२. भिक्षासी । ना२. स्वायत्तचित्तस्पृहा; ग्र२.३. स्वायत्तवेषः सदा । —२) तु. हानाहान°; ना२. म१.३. नानारूप°; म४. हारादान° ( हानादान° ) । सु. °विरक्ति°; ना १.३–५. रा. °विरक्त°; ना२. °विवक्त° । तु. ना१. °मार्गरहितः; ना२. °मार्गनिहतः । तु. ना१.२. म३. तपस्वी जनः । —३) ग्र२.३. रथ्याक्षीण° । तु. ना१. ग्र१.३. म४.५. °विकीर्ण°; ग्र२. °विजीर्ण° । ग्र२.३. °चीर° ( °जीर्ण° ) । तु. ना१.२. ग्र५. म१.३. °वसनैः; ते२. °वसनं ( °वसनः ) । —४) म३. निर्मानी । ना१. शमसुखे; ना२. म३. शमसुखो । तु. °भोगैकदत्त°; ग्र१. म१.२.४.५. °भोगैकलब्ध°; ग्र२ ( मू ). °भोगैरबद्ध°; म३. °योगैकबद्ध° ॥

भ. ४५८५ (२०४५) ॥

चण्डालः किमयं द्विजातिरथ वा शूद्रोऽथ वा तापसः
किं वा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम् ।
इत्युत्पन्नविकल्पजल्पमुखरैराभाष्यमाणा जनै-
र्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥ ९६ ॥

चण्डाल इति ॥ अयं पुरुषश्चण्डालो वा जनाधमः किम् । किं विकल्पे । अथ वा द्विजातिर्ब्राह्मणक्षत्रियवैश्यानामन्यतमः । अथ वा शूद्रो वृषलजातिः । तापसस्तपस्वी किम् । किं वा तत्त्वनिवेशे ब्रह्मणोऽनुप्रवेशे पेशलमतिः पटुबुद्धिः कोऽपि योगीश्वरः योगीन्द्र इत्येवमुत्पन्ना जाता विकल्पा नानापक्षा येषां जल्पैर्मुखरा दुर्मुखाः । 'दुर्मुखे मुखरा बद्धमुखा' इत्यमरः । एतैर्जनैराभाष्यमाणा आलप्यमानाः सन्तः न क्रुद्धा नातुष्टाः नैव तुष्टमनसः संतुष्टचेतसः । योगिनः । स्वयं पथि मार्गे यान्ति गच्छन्ति । आत्मानं निन्दत्सु परेषु ये न क्रुध्यन्ति स्तुवत्सु च न तुष्यन्ति त एव योगीश्वरा इत्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) ना२. रा. चाण्डालः । ग्र३( मू ). किमथ ( किमयं ) । ना२. शूद्रो न किं । सु. ना३–५. रा. ते. ग्र४. किं ( वा ) । ग्र५. वा कोऽपि वा; म३. वैश्योऽथ वा ( किं तावसः ) । —२) ग्र५. कं ( किं ) । सु. ना. रा२. तत्त्वविवेक° । सु२. °पेशलपटुर् । ग्र२. म १.२. कश्चन; म३.५. कोऽपि वा ( कोऽपि किं ) । —३) ग्र२( मू ). °पक्ष° ( °जल्प° ) । ना१. आकीर्यमाणो; ना२. ते१. आभाष्य-

माणो; ते२. आभाष्यमाणं; प्र१. म४.५. संभाष्यमाणा; प्र४. आकृष्यमाणा; म१.२. संभाष्यमाणो। —४) ना१. नोक्रुद्धाः; ना२. संक्रुद्धाः। म४. पथिकैः सुतुष्ट°। ना२. याति ( यान्ति ) ॥

भ. २२२५ (८८९); सुभाष. २८४ ॥

हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं
व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ ९७॥

हिंसेति ॥ धात्रा वेधसा व्यालानां भुजंगानां हिंसया प्राणद्रोहेण शून्यं रहितं अयत्नेन कृषिसेवा याच्ञादुष्प्रतिग्रहादियत्नाभावेन लभ्यं प्राप्तुं शक्यं मरुद्रूपमशनं कल्पितं सृष्टम्। पशवो गोमहिष्यादयः तृणस्य यवसस्याङ्कुरभुजः प्रवालभोजिनः स्थल्यां भूतले शायिनः शयनशीलाः सृष्टा निर्मिताः। संसारस्यैवार्णवस्य लङ्घने तरणे क्षमा समर्था बुद्धिर्येषां तेषां नृणां मनुष्याणां सा तादृशी वृत्तिः जीवनं कृता निर्मिता। यां वृत्तिमन्वेषयतां मृगयमाणानां सततं सार्वकालं सर्वे गुणाः श्रुतशीलवृत्तादयः समाप्तिं नाशं प्रयान्ति गच्छन्ति। सर्वेषां पशूनां च यादृशी वृत्तिः सा यदृच्छया लब्धया वृत्त्या संतुष्टः संसारार्णवलङ्घने यत्नं कुर्यादित्यर्थः ॥ [ शार्दूलविक्रीडितम् ]

१) सु. ना१.३-५. ते. °लब्धमशनं; ना२. °लाभमशन। ना२. मरुत्कल्पितो। —२) प्र१. म२. व्यालानामितरे। ना१.२. म५. स्पृष्टाः; ना३.५. रा. ते. प्र४. तुष्टाः; म३. स्वस्थाः (सृष्टाः)। —३) सु. °लङ्घनस्थिरधियां; ना२. °लङ्घने क्षमधियां; म४. °लङ्घनक्षमधिया। ते. युक्तिः ( वृत्तिः )। —४) ना४.५. रा. प्र४. ताम् ( याम् )। ना२. सहसा ( सततं )। प्र१. गताः ( गुणाः ) ॥

भ. ५४३७ (२४६०); काव्यक°; काव्यस° २३। शान्तिशतके १.१३ (हे० ४१२)। सु. ३१३९ (भर्तृ°)। सुभा. पृ० ९७. १३ (भर्तृ°) ॥

गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य।
किं तैर्भाव्यं मम सुदिवसैर्येषु ते निर्विशङ्काः
कण्डूयन्ते जरठहरिणाः स्वाङ्गमङ्गे मदीये ॥ ९८ ॥

गङ्गातीर इति ॥ गङ्गाया भागीरथ्यास्तीरे रोधसि हिमगिरेः प्रालेयाद्रेः शिलायां दृषदि बद्धं पद्माख्यमासनं येन तस्य। ब्रह्मणः परमात्मनो ध्यानं चिन्तनं तस्याभ्यसनमावृत्तिरेव विधिर्व्यापारः। तेन योगनिद्रां योगरूपं स्वापं गतस्य प्राप्तस्य मम तैस्तादृशैः सुदिवसैः पुण्यदिवसैर्भाव्यं भवितव्यं किम्। तादृशाः सुदिवसा मम

भविष्यन्ति किमित्यर्थः। कीदृशैरित्याकाङ्क्षायामाह। येषु दिवसेषु ते हिमगिरिवलतयो जरठहरिणाः प्रवृद्धकृष्णसाराः निर्विशङ्काः मामयं ताडयिष्यति हनिष्यति वेति शङ्कारहिताः सन्तः मदीये मामकेऽङ्गे तनौ [ स्वाङ्गं स्वशरीरं ] ( शृङ्गं ) कण्डूयन्ते घर्षयन्ति। दयालूनां मुनीनां अघातुकत्वं विज्ञाय वा निश्चलत्वात्स्थाणुशङ्कया वा मृगास्तेषु विश्वासं प्राप्नुवन्ति ॥ [ मन्दाक्रान्ता ]

१) अ१. म१-४. गाङ्गे तीरे। —२) तु. सु. ना२. ब्रह्मज्ञाना°। —३) सु. भाव्यं; अ५. साध्यं ( भाव्यं )। सु२. हृदि ( मम )। तु. ना. रा. अ४.५. यत्र; ते. एषु ( येषु )। —४) तु२. सु२. ना२. अ१. म१.३-५. जठर°; अ२.३. म२. जरढ° ( जरठ° )। सु. ना२. अ२.३. शृङ्गमङ्गे; अ५. स्वाङ्गमङ्के ॥

भ. २०५४ (८०८)। शान्तिशतके. ४.१७ (हे. ४२८)। अलंकारमहोदधौ १३०। सुभा. पृ. ३६९. ६५। हेमचन्द्रस्य काव्यानुशासने २ (का० ७१. पृ० ८०)। सक. ५.६०.२ (पृ० ३१७; कृष्णस्य) ॥

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं
विस्तीर्णं वस्त्रमाशादशकमपमलं तल्पमस्वल्पमुर्वी।
येषां निःसङ्गताङ्गीकरणपरिणतस्वान्तसंतोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥९९॥

पाणिरिति ॥ येषां पाणिर्हस्त एव पवित्रमनुपहतं पात्रं भिक्षाभाजनम्। मृत्पात्रस्य ताम्रादिपात्रस्य वोपहतस्य परित्याग एव विहितः। पाणेस्तूपहतस्य मृज्जलाभ्यां क्षालनेन शुद्धिः स्यात्। कनकादिपात्रस्य तु बन्धहेतुत्वादेव त्यागः। भ्रमणेनाटनेन परिगतं लब्धं भैक्षं भिक्षाकदम्बकमेव अक्षय्यमनश्वरमन्नमशनम्। गृहे संगृहीतान्नस्य चोराग्निराजादिभिर्नाशः संभवति। आशानां दिशां दशकमेव अपमलं मलरहितं विस्तीर्णं विशालं वस्त्रं वसनम्। तन्त्वारब्धस्य वाससो मूत्रपुरीषशुक्रशोणितादीनां मलसंभवः। तथा च स्मृतिः। "मूत्रस्य रक्तस्य पुरीषरेतसोर्लेपोऽशुके याति न चेत्स्वशोधनैः। छिन्द्यात्प्रदेशं तमथापि वा दहेद्वा तदेतद्वसनं परित्यजेत्" ॥ [इति]। ककुभां तु मला एतेन संभवन्ति। उर्वी भूमिरेव अस्वल्पं विशालं तल्पं शयनम्। निःसङ्गतायाः असङ्गस्याङ्गीकरणात्परिणते परिपक्वे स्वान्ते चेतसि संतोषिणः प्रीतिमन्तो धन्याः कृतार्थाः संन्यस्तः परित्यक्तो दैन्यैः वर्णैः ( सर्वपुण्यैः ) व्यतिकराणां मेलनानां निकरः समूहः यैस्तैः। कर्म पुण्यापुण्यात्मकं निर्मूलयन्ति नाशयन्ति। उभयोरपि कर्मणोः संसारहेतुत्वात् ॥ [स्रग्धरा]

१) तु१. पाणेः। म३. भ्रमणपतगता। ना१.२. अ१.२. भैक्ष्यम्। तु१. अप्यैक्षमन्नं; म३. अक्षय्यमन्नं। —२) अ५. °धवलम् ( °दशकम् )। तु. अपतुलं; ना१. अविकलं; ना५. रा. अ४. अचपलं; ते. अपरुषं; म४.५. अल्पमलं ( अपमलं )। ना१. तल्पमाकल्पम्; ना२. तव्यमस्वल्पम्। म३. अल्पस्वमुर्वी। —३) तु. सु२. ते२. म३. एषां; ना२. योषा ( येषां )। तु १. निःसङ्गिता°।

म४.५. °संगतालिङ्गनसुखमतुलं । तु °परिणता; ना१. °परिगत°; ना२. °परिणतिः; ते. ग्र१.२. °परिणतः । तु१. स्वात्म° (°स्वान्त°) । —४) ना२. कर्ममन्मूल°; म३. कर्ममुन्मूल° । ते१. निर्मूलयन्तः; ते२. निर्मूलयन्ती ॥

भ. ४०१९ (१७५३); नीतिसंक° ८३ । शान्तिशतके ४.७ । सुभा. पृ० ३७१. ११३ ॥

मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल
भ्रातर्व्योम निबद्ध एष भवतामन्त्यः प्रणामाञ्जलिः ।
युष्मत्सङ्गवशोपजातसुकृतस्फारस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परब्रह्मणि ॥ १०० ॥

मातरिति ॥ हे मातर्जनयित्रि मेदिनि वसुंधरे हे तात जनक मारुत वायो हे सखे हे वयस्य तेजः हे अनल हे सुबन्धो दायाद हे जल उदक हे भ्रातः सहोदर सोदर्य व्योम भवतां युष्माकं एष निबद्धः मया कृतः अन्त्यश्चरमोऽञ्जलिः संहताङ्गुलिः पाणिविशेषः (भवति वर्तते)। युष्मत्सङ्गवशेन युष्मत्संसर्गेण हेतुना [उत्पन्नेन स्फारेण विस्तृतेन स्फुरता प्रकाशमानेन च ज्ञानेन] उपजातस्योत्पन्नस्य सुकृतस्य संकल्पितफलस्य पुण्यस्योद्रेकेणाधिक्येन स्फुरता प्रकाशमानेन निर्मलेन शुद्धेन ज्ञानेन तत्त्वावबोधेन अपास्तो निराकृतः समस्तः सर्वः मोहस्य मिथ्याज्ञानस्य महिमा महत्त्वं यस्य स तादृशोऽहं परब्रह्मणि परमशिवे लीये सायुज्यं गच्छामि । पञ्चभूतारब्धेऽस्मिञ्शरीरे विद्यमान एव धर्मः सिध्यति नान्यथा । तथा चेश्वरभाषितं वर्तते 'शरीरमाद्यं खलु धर्मसाधन'मिति । धर्मादेव ज्ञानोत्पत्तिः ज्ञानान्निःश्रेयसं भवति । तथा च काव्यप्रपादसूत्राणि 'अथातो धर्मं व्याख्यास्यामः' यतोऽभ्युदयेन निःश्रेयससिद्धिः स धर्मः तद्वदनादाम्नायस्य प्रामाण्यं इति ज्ञानसंपादनद्वारा धर्मा अपि मुक्तावुपयुज्यन्ते इत्युक्तम् । 'बोधादेव तु कैवल्य'मिति वदन्ति । अन्ये तु कर्मण एव मुक्तिरिति । अपरे तु ज्ञानकर्मभ्यां समुच्चिताभ्यां कैवल्यमिति । तत्तन्मतानुसारेण तत्र तात्पर्यं वाक्यस्य ॥ [शार्दूलविक्रीडितम्]

१) ना२. सुबन्धौ जल; ते१. सुबन्धो ज्वल; ग्र५. सुबन्धोज्वलं । —२) रा. ग्र३–५. एव (एष) । तु१. आन्त्य–; तु२. आन्ते; ते१. मर्त्यः; ग्र२.३. अन्त्ये; म३. अद्य (अन्त्यः) । ग्र२.३. भवत्यञ्जलिः; म२. प्रमाणाञ्जलिः । —३) तु. °वशोपि जात° । तु१. °सुकृते स्फार–; तु२. सुकृतो स्फार°; ग्र२.३. °सुकृतोद्रेक° । तु. निर्मलः । —४) तु. °ज्ञानोपात्त° । ना१. परे ब्रह्मणि ॥

भ. ४७८६ (२१६३); काव्यक° ३५; प्रसङ्गाभ° ७ । शान्तिशतके ४.२५ (हे. ४२५) । शा. ४०९५ (भर्तृ°) । सुर. पृ० २९६. १६ (भ.) । सुभा. पृ० ३६९. ७५ (भर्तृ०) । सूहा. २०१.३ (भर्तृ°) ॥

(वैराग्यशतके दशमपद्धत्यन्ते अधिकः)

धैर्यं यस्य पिता क्षमा च जननी शान्तिः प्रिया गेहिनी
सत्यं मित्रमिदं दया च भगिनी भ्राता तपःसंगमः ।

शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं
ह्येते सन्ति कुटुम्बिनो मम सखे कस्माद्भयं योगिनः ॥ १ ॥

[ नार. वैराग्य. १०. ११; मर. टीकायां पुष्पिकायां दृश्यते; म. वैराग्य. १०. ११. ]

[ भ. ३१६९ (१३३९); शान्तिशतके ४.९ (हे ४२६); नीतिस॰ ८४; सुभाष्. ७ (९७) । सुभा. पृ० ३७०. १०३ । सुर. पृ० ३८. १४ (सभातरङ्गे) ]

इति श्रीभर्तृहरियोगीन्द्रविरचितवैराग्यशतकं सटीकं समाप्तम् । शुभमस्तु । गुरुभ्यो नमः । अविघ्नमस्तु । सरस्वत्यै नमः । [ ततश्चात्र 'एको वासः पट्टणं वा' इति, 'धैर्यं यस्य पिता' इति श्लोकद्वयं दृश्यते ] शुभमस्तु । ९८७ [ =खिस्ताब्दे १८१२ ] प्रजोत्पत्ति तै मासं ११ तेदि शुक्लपक्षत्तु नवमी शुभयोगशुभकरणमुं कूडिन दिनत्तिल् सीतारामशास्त्रियळ पुत्रन् रामकृष्णन् एलुदिनदु । ग्रन्थं भर्तृहरिणी नीतिशतक शृङ्गारशतक वैराग्यशतकमेवं शतकत्रयस्य सव्याख्यानं रामकृष्णेन लिखितम् । भैरवाय नमः । अपीतकुचनायक्यम्बायै नमः । कृष्णो रक्षतु । यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया । अबद्धं वा सुबद्धं वा मम दोषो न विद्यते ॥ १ ॥ करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ॥ पनसाम्रपाटल सदृशा उत्तमाधममध्यमाः । फलैः पुष्पफलैः पुष्पैः कर्मवाकर्म वागेवा ( ? ) ॥



# श्लोकानामकारादिक्रमेण सूची ।

* चिह्निताः श्लोकाः क्वचिन्मातृकासु नोपलभ्यन्ते । † चिह्नितास्तु अधिकतया प्रक्षिप्ताः ॥


| | श्लो० | पृ० |
|---|---|---|
| अकरुणत्वमका … … | ४१ | २४ |
| अग्रे गीतं सरस … | ६६ | १५४ |
| अच्छाच्छचन्दन … | ८७ | १०७ |
| अजानन्दाहात्म्यं … | १८ | १२४ |
| †अज्ञं कर्माणि … … | १ | ६१ |
| अज्ञः सुखमारा० … | ३ | २ |
| अदर्शने दर्शन० … | २२ | ७२ |
| अधिगतपरमा … … | १३ | ८ |
| *अपसर सखे … … | ५२ | ८८ |
| †अपेक्षन्ते न … … | ३ | ४८ |
| अभिमतमहा० … … | २२ | १२७ |
| अभुक्तायां यस्यां … | ५८ | १४९ |
| अमीषां प्राणानां … | ५ | ११७ |
| अम्भोजिनीवन … | १४ | ८ |
| †अयममृत … … | १ | ५३ |
| अर्थानामीशिषे … … | ५२ | १४६ |
| †अर्था हसन्त्युचि० … | १ | २४ |
| अर्धं सुप्त्वा निशा० … | ९६ | १११ |
| †अवचनं वचनं … | १ | ८२ |
| अवश्यं यातारः … | १२ | १२१ |
| †अविदितशष … … | २ | ६ |
| †अव्याधि गात्रम० … | ३ | १२ |
| अशीमहि वयं … … | ५५ | १४८ |
| असाराः सन्त्वेते … | ३५ | ७९ |
| असूचीसंचारे … … | ९४ | ११० |
| †अहिरिव जन० … | २ | १५७ |
| †अहौ वा हारे वा … | १ | १६९ |
| आक्रान्तं मरणेन … | ३२ | १३३ |
| आज्ञा कीर्तिः पाल० … | ३९ | २३ |
| आदित्यस्य गता० … | ४३ | १४० |
| आधिव्याधिशतै० … | ३३ | १३४ |
| †आपन्मूलं खलु … | २ | ९२ |
| *आमीलितनय० … | २६ | ७४ |
| आयुर्वर्षशतं … … | ४९ | १४४ |
| आयुः कल्लोल० … … | ३६ | १३६ |
| आरम्भगुर्वी … … | ४९ | २८ |
| †आलस्यं हि मनु० … | ३ | ६१ |
| आवर्तः संशया० … | ४५ | ८४ |
| आवासः किल० … | ८३ | १०५ |
| आवासः क्रियतां … | ३८ | ८१ |
| आशा नाम नदी … | १० | १२० |
| †आशा नाम मनु० … | १ | १२० |
| आसंसारं त्रिभु० … | ८१ | १६३ |
| आसारेण न ह० … | ९५ | १११ |
| इतः स्वपिति … … | ६७ | ३९ |
| इतो विद्युद्वल्ली … … | ९३ | १०९ |
| इदमनुचितमक्र० … | २७ | ७४ |
| इमे तारुण्यश्री … … | १९ | ७० |
| इयं बाला मां प्र० … | ६३ | ९४ |
| इह हि मधुर० … … | ५६ | ९० |
| †उडुगणपरि० … … | ३ | ५४ |
| उत्खातं निधिश० … | ३ | ११६ |
| उद्भासिताखिल० … | ४८ | २८ |
| उद्वृत्तः स्तनभार … | १५ | ६८ |
| उन्मत्तप्रेमसं० … | ७५ | १०० |
| उन्मीलत्त्रिवली … … | ४९ | ८६ |
| उपरि घनं घन० … | ९२ | १०९ |
| उरसि निपति० … | २५ | ७३ |
| एकाकी निःस्पृहः … | ८९ | १६८ |
| एको रागिषु राज० … | १७ | १२४ |
| †एको वासः पट्ट० … | २ | ४७ |
| एतस्माद्विरमे० … … | ६३ | १५२ |
| एताश्चलद्वल० … … | ८ | ६५ |
| *एते सत्पुरुषाः … | ६४ | ३७ |
| ऐश्वर्यस्य विभू० … | ८० | ४६ |
| कदर्थितस्यापि … … | ७७ | ४५ |
| कदा वाराणस्यां … | ८७ | १६७ |
| करे श्लाघ्यस्त्या० … | ५३ | ३० |
| †कर्मायत्तं फलं … | २ | ६१ |
| *कश्चुम्बति कु० … | ६० | ९२ |
| †काचिन्मृगाक्षी … | २ | ८२ |
| कान्ताकटाक्षवि० … | ७६ | ४४ |
| *कान्तेत्युत्पल० … | ४१ | ८२ |
| कामिनीकाय० … … | ५४ | ८९ |
| किं कन्दर्प शरं… … | ६४ | ९४ |
| किं कन्दाः कन्द० … | २५ | १२९ |

| | | श्लो० | पृ० |
|---|---|---|---|
| †किं कूर्मस्य भर | ... | १ | ४१ |
| किं गतेन यदि... | ... | ६६ | ९६ |
| †किंचिदन्तर्हिते | ... | १ | ९२ |
| किं वेदैः स्मृति० | ... | ७१ | १५७ |
| किमिह बहुभि० | ... | ३९ | ८१ |
| कुङ्कुमपङ्क० ... | ... | ९ | ६६ |
| कुसुमस्तबक० ... | ... | २५ | १५ |
| कृच्छ्रेणामेध्य० ... | ... | ३७ | १३७ |
| कृमिकुलचितं ... | ... | ९ | ५ |
| कृशः काणः खञ्जः | ... | ७८ | १०१ |
| केयूराणि न भू० | ... | १५ | ९ |
| केशानाकुलयन्... | ... | १०० | ११४ |
| केशाः संयमिनः | ... | १२ | ६७ |
| कौपीनं शतख० | ... | ९१ | १६९ |
| क्वचित्सभ्रूभङ्गैः ... | ... | ४ | ६३ |
| क्वचिद्भूमौ शायी | ... | ७४ | ४३ |
| †क्वचिद्रम्या रामा | ... | १ | १५६ |
| क्षणं बालो भूत्वा | ... | ५० | १४५ |
| क्षान्तं न क्षमया | ... | ६ | ११८ |
| क्षान्तिश्चेत्कवचे० | ... | १७ | १० |
| क्षीरेणात्मगतो० | ... | ६६ | ३८ |
| क्षुत्क्षामोऽपि जरा० | ... | २१ | १३ |
| खलालापाः सोढाः | ... | ४ | ११७ |
| खल्वाटो दिवसे० | ... | ८४ | ५० |
| गङ्गातरङ्गकण ... | ... | २४ | १२९ |
| गङ्गातीरे हिम० | ... | ९८ | १७३ |
| गजभुजंगवि० ... | ... | ८५ | ५० |
| गात्रं संकुचितं ... | ... | ७३ | १५८ |
| गुणवदगुणव ... | ... | ९५ | ५७ |
| गुरुणा स्तनभा० | ... | १७ | ६९ |
| चण्डालः किमयं | ... | ९६ | १७२ |
| †चिन्तायाश्च चिता | ... | १ | १०३ |
| †चीराणि किं पथि | ... | १ | १२६ |
| *चुम्बन्तो गण्ड० | ... | ९९ | ११३ |
| चूडोत्तंसित० ... | ... | १ | ११५ |
| चेतश्चिन्तय० ... | ... | ६५ | १५३ |
| †छिन्नोऽपि रोहति | ... | १ | ४७ |
| जयन्ति ते सुकृ० | ... | २० | १२ |
| जल्पन्ति सार्धम० | ... | ५० | ८७ |
| जाड्यं धियो हर० | ... | १९ | ११ |
| जाड्यं ह्रीमति ... | ... | ४३ | २५ |
| जातः कूर्मः स... | ... | ६८ | ३९ |
| जातिर्यातु रसा० | ... | ३१ | १८ |
| जात्यन्धाय च | ... | ५८ | ९१ |
| जीर्णा एव मनो | ... | ८३ | १६४ |
| †जीर्यन्ति जीर्यतः | ... | २ | १२६ |
| तपस्यन्तः सन्तः | ... | ७६ | १६० |
| तरुणीवेषोद्दीपि... | ... | ९० | १०८ |
| तस्मादनन्त० ... | ... | ६९ | १५५ |
| तस्याः स्तनौ यदि | ... | १८ | ७० |
| तावदेव कृतिना | ... | ७० | ९८ |
| तावदेवामृत ... | ... | ४३ | ८३ |
| तावन्महत्त्वं ... | ... | ७६ | १०१ |
| तुङ्गं वेश्म ... | ... | २० | १२६ |
| तृषा शुष्यत्यास्ये | ... | १९ | १२५ |
| तृष्णां छिन्धि ... | ... | ६९ | ४० |
| त्वं राजा वय ... | ... | ५१ | १४५ |
| दाक्षिण्यं स्वजने | ... | १८ | ११ |
| दानं भोगो नाश | ... | ३४ | २० |
| दिक्कालाद्यनव ... | ... | १ | १ |
| दिश वनहरिणी | ... | ३४ | ७८ |
| दीना दीनमु ... | ... | २१ | १२७ |
| दुराराध्याश्चा ... | ... | ७७ | १६० |
| दुर्जनः परि ... | ... | ४२ | २४ |
| दैवात्कन्दुक ... | ... | ८३ | ४९ |
| दैवेन प्रभुणा ... | ... | ९० | ५२ |
| दौर्मन्त्र्यान्नृप ... | ... | ३३ | १९ |
| द्रष्टव्येषु किमु ... | ... | ७ | ६५ |
| धन्यानां गिरि ... | ... | १४ | १२२ |
| †धन्यानां नव ... | ... | २ | ११४ |
| धन्यास्त एव ... | ... | ६१ | ९३ |
| †धैर्यं यस्य पिता | ... | १ | १७५ |
| न कश्चिच्चण्ड ... | ... | ४६ | २७ |
| न गम्यो मन्त्रा... | ... | ५७ | ९० |
| न ध्यातं पद ... | ... | ४५ | १४२ |
| न नटा न विटा | ... | ५६ | १४८ |
| †न भोगहार्या ... | ... | १ | १२ |
| नमस्यामो दे ... | ... | ९१ | ५५ |
| नम्रत्वेनोन्न ... | ... | ६० | ३४ |
| *न संसारो ... | ... | ११ | १२० |
| नाभ्यस्ता प्रति... | ... | ४६ | १४२ |
| नामृतं न विषं... | ... | ४४ | ८४ |
| *निन्दन्तु नीति | ... | ७५ | ४४ |
| निवृत्ता भोगे ... | ... | ९ | ११९ |
| नूनं हि ते कवि | ... | १० | ६६ |
| नूनमाज्ञाकर ... | ... | ११ | ६७ |

| | श्लो० | पृ० |
|---|---|---|
| नेता यस्य बृ | ८१ | ४८ |
| नैवाकृतिः फलति | ९७ | ५८ |
| नो सत्येन मृगा | ४६ | ८५ |
| पद्माकरं दिन | ६३ | ३६ |
| †परदारपर | २ | ३५ |
| परिक्षीणः कश्चि | ३६ | २१ |
| परिभ्रमसि किं | ६२ | १५१ |
| परिमलभृतो | ८१ | १०४ |
| परिवर्तिनि | २४ | १४ |
| परेषां चेतांसि | ६१ | १५१ |
| पाणिं पात्रयतां | ९० | १६८ |
| पाणिः पात्रं पवि | ९९ | १७४ |
| पातालमावि | ७० | १५६ |
| †पातितोऽपि | २ | ५४ |
| पान्थस्त्रीविर | ८४ | १०५ |
| पापान्निवार | ६५ | ३७ |
| पुण्ये ग्रामे वने | २३ | १२८ |
| पुण्यैर्मूलफलैः | २६ | १३० |
| प्रणयमधुराः | २० | ७१ |
| प्रथितः प्रणय | ८५ | १०६ |
| *प्रदानं प्रच्छ | ५७ | ३३ |
| प्रसह्य मणि | ४ | २ |
| प्राज्ञा मेति | २४ | ७३ |
| प्राप्ताः श्रियः | ६७ | १५४ |
| प्रारभ्यते न | ७२ | ४२ |
| प्राणाघातान्नि | ५४ | ३१ |
| *प्रियसख | ८८ | ५१ |
| प्रिया न्याय्या | ५६ | ३२ |
| प्रोद्यत्प्रौढ | ९८ | ११२ |
| फलं स्वेच्छा | २७ | १०३ |
| फलमलमश | ५४ | १४७ |
| बाले लीला | ६२ | ९३ |
| बोद्धारो मत्स | २ | १ |
| ब्रह्मज्ञानवि | १३ | १२२ |
| ब्रह्माण्डमण्ड | १२ | १७० |
| *ब्रह्मा येन कु | ९२ | ५६ |
| ब्रह्मेन्द्रादि | ४० | १३८ |
| भक्तिर्भवे | ६८ | १५५ |
| †भगवन्तौ जग | ५ | ५४ |
| भग्नाशस्य | ८२ | ४९ |
| भवन्ति नम्रा | ६१ | ३५ |
| भिक्षाशनं | १५ | १२३ |
| भिक्षाशी जन | ९५ | १७१ |
| भिक्षाहारम | ३० | १३२ |
| भीमं वनं | १०० | ६० |
| भोगा न भुक्ता | ७ | ११८ |

| | श्लो० | पृ० |
|---|---|---|
| भोगा भङ्गुर | ३९ | १३८ |
| भोगा मेघ | ३५ | १३५ |
| भोगास्तुङ्ग | ३४ | १३५ |
| भोगे रोगभ | ३१ | १३३ |
| भ्रान्तं देश | २ | ११५ |
| भ्रूचातुर्या | ३ | ६२ |
| मज्जत्वम्भ | ९८ | ५९ |
| मणिः शाणो | ३५ | २१ |
| मत्तेभकुम्भ | ७३ | ९९ |
| मधु तिष्ठति | ५१ | ८७ |
| †मधुरमधुर | २ | ७२ |
| मधुरयं मधु | ८२ | १०४ |
| मनसि वचसि | ७० | ४१ |
| मही शय्या | ९४ | १७१ |
| *महेश्वरे वा | ८४ | १६५ |
| मातर्मेदिनि | १०० | १७५ |
| मातर्लक्ष्मि | ९३ | १७० |
| †मातेव रक्ष | २ | १२ |
| मात्सर्यमुत्सा | ३६ | ८० |
| माने म्लायिनि | ७८ | १६१ |
| मालती शिर | २३ | ७२ |
| मुखेन चन्द्र | १६ | ६९ |
| मुग्धे धानुष्क | १३ | ६८ |
| मृगमीनस | ५० | २९ |
| मृत्पिण्डो जल | ५९ | १५० |
| मोहं मार्जय | ६४ | १५२ |
| मौनान्मूकः | ४७ | २७ |
| यतो मेरुः | ७२ | १५८ |
| यत्रानेकः क्व | ४२ | १४० |
| †यथा स्रग्वी | १ | १६३ |
| यदचेतनो | २९ | १७ |
| यदा किंचिज्ज्ञो | ८ | ४ |
| यदासीदज्ञा | ६९ | ९७ |
| †यदि नाम दैव | २ | १८ |
| यदेतत्पूर्णेन्दु | ४८ | ८६ |
| यदेतत्स्वच्छ | ८२ | १६४ |
| यद्धात्रा निज | ४० | २३ |
| †यस्माच्च येन | ७ | ५५ |
| †यस्मिञ्जीवति | १ | १८ |
| यस्यास्ति वित्तं | ३२ | १९ |
| *यः प्रीणयेत् | ५९ | ३४ |
| †यां चिन्तयामि | १ | ६ |
| †याचते त्रिच | ३ | १८ |
| यावत्स्वस्थ | ७५ | १५९ |
| या साधूंश्च | ९३ | ५६ |
| †यूनामनङ्गं | १ | ७१ |

| | श्लो० | पृ० |
|---|---|---|
| †येन यत्र च ... ... | ६ | ५४ |
| *येनैवाम्बर ... ... | ८७ | ५१ |
| ये वर्धन्ते धन ... ... | २८ | १३१ |
| ये संतोषनिर ... ... | २९ | १३१ |
| रत्नैर्महाब्धे ... ... | ७१ | ४२ |
| रम्यं हर्म्यतलं ... ... | ८० | १६२ |
| रम्याश्चन्द्रम ... ... | ७९ | १६२ |
| रागस्यागार ... ... | २९ | ७५ |
| राजंस्तृष्णाम्बु ... ... | २८ | ७५ |
| राजन्दुधुक्ष ... ... | ३७ | २२ |
| रात्रिः सैव ... ... | ४४ | १४१ |
| †रामस्य व्यस ... ... | ४ | ५४ |
| *लज्जां गुणौघ ... ... | ७३ | ४३ |
| लभेत सिकता ... ... | ५ | ३ |
| लाङ्गूलचाल ... ... | २३ | १४ |
| लीलावतीनां ... ... | ४७ | ८५ |
| लोभश्चेदगु ... ... | ४४ | २५ |
| वक्त्रं चन्द्रवि ... ... | ५ | ६३ |
| वचसि भवति ... ... | ७१ | ९८ |
| वने रणे शत्रु ... ... | ९९ | ६० |
| वयं येभ्यो जा ... ... | ४८ | १४३ |
| वयमिह परि ... ... | ५३ | १४६ |
| वरं प्राणच्छेदः ... ... | २८ | १६ |
| वरं शृङ्गोत्स ... ... | ७८ | ४५ |
| *वर्णं सितं ... ... | ७४ | १५९ |
| वलिभिर्मुख ... ... | ८ | ११९ |
| वहति भुवन ... ... | २७ | १६ |
| वह्निस्तस्य ... ... | ७९ | ४६ |
| वाञ्छा सज्जन ... ... | ५१ | २९ |
| वितीर्णे सर्वस्वे ... ... | ८६ | १६६ |
| विद्या नाधिग ... ... | ४७ | १४३ |
| विद्या नाम ... ... | १६ | ९ |
| विपदि धैर्य ... ... | ५२ | ३० |
| विपुलहृद ... ... | ५७ | १४८ |
| वियदुपचित ... ... | ९१ | १०९ |
| विरमत बुधा ... ... | ६७ | ९६ |
| *विरम विरमा ... ... | ८९ | ५२ |
| विरहेऽपि सं ... ... | ६५ | ९५ |
| विश्रम्य वि ... ... | २१ | ७२ |
| विश्वामित्रप ... ... | ८० | १०३ |
| विस्तारितं म ... ... | ५३ | ८८ |
| वेश्यासौ म ... ... | ५९ | ९१ |
| †वैराग्यं संश्र ... ... | १ | ११४ |
| व्याघ्रीव तिष्ठ ... ... | ३८ | १३७ |
| व्यादीर्घेण चले ... ... | ५५ | ८९ |
| व्यालं बालमृ ... ... | ६ | ३ |

| | श्लो० | पृ० |
|---|---|---|
| †व्योम्न्येकान्त ... ... | ८ | ५५ |
| शंभुस्वयंभु ... ... | १ | ६२ |
| †शक्यो वारयि ... | ३ | ६ |
| शशी दिवस ... ... | ४५ | २६ |
| शास्त्रज्ञोऽपि प्र ... ... | ७७ | १०१ |
| शास्त्रोपस्कृत ... ... | ११ | ७ |
| शिरः शार्वं स्व ... ... | १० | ५ |
| शुभ्रं सद्म स ... ... | ९४ | ५७ |
| शृङ्गारद्रुमनी ... ... | ३० | ७६ |
| श्रोत्रं श्रुतेनै ... ... | ६२ | ३६ |
| संतप्तायसि ... ... | ५८ | ३३ |
| संपत्सु मह ... ... | ५५ | ३२ |
| संसार तव ... ... | ३३ | ७८ |
| संसारेऽस्मिन्न ... ... | ३१ | ७७ |
| संसारे स्वप्न ... ... | ३७ | ८० |
| स जातः कोऽप्या ... | ६० | १५० |
| सति प्रदीपे ... ... | १४ | ६८ |
| सत्यं जना वच्मि ... | ४० | ८२ |
| सत्यानृता च ... ... | ३८ | २२ |
| सदा योगाभ्या ... ... | ६८ | ९७ |
| सन्त्यन्येऽपि बृ ... ... | २६ | १५ |
| †सन्त्येवात्र ... ... | २ | ४१ |
| सन्मार्गे ताव ... ... | ७४ | १०० |
| †सर्पः क्रूरः ... ... | १ | २९ |
| सहकारकु ... ... | ८६ | १०६ |
| सा रम्या नग ... ... | ४१ | १३९ |
| सिंहः शिशुर ... ... | ३० | १७ |
| सिद्धाध्यासित ... ... | ३२ | ७७ |
| †सुजनं कुजनं ... ... | १ | ३५ |
| सुधाशुभ्रं धाम ... ... | ८९ | १०८ |
| सृजति तावद ... ... | ८६ | ५१ |
| स्तनौ मांस ... ... | १६ | १२३ |
| स्त्रीमुद्रां कुसु ... ... | ७९ | १०२ |
| स्थाल्यां वैदूर्य ... ... | ९६ | ५८ |
| स्नात्वा गाङ्गैः ... ... | ८८ | १६७ |
| स्फुरत्स्फार ... ... | ८५ | १६५ |
| स्मितं किंचि ... | ६ | ६४ |
| स्मितेन भावेन ... ... | २ | ६२ |
| स्मृता भवति ... ... | ४२ | ८३ |
| स्रजो हृद्यामो ... ... | ८८ | १०७ |
| स्वपरप्रता ... ... | ७२ | ९९ |
| स्वल्पस्नायु ... ... | २२ | १३ |
| स्वायत्तमेका ... ... | ७ | ४ |
| हर्तुर्याति न ... ... | १२ | ७ |
| हिंसाशून्यम ... ... | ९७ | १७३ |
| हेमन्ते दधि ... ... | ९७ | ११२ |

